कर्तुं चिकीर्षुः ओदनं बुभुक्षुः। तर्हि वक्तव्यम्। न वक्तव्यम्। उकारोऽत्र निर्दिश्यते। कथम्। प्रश्लिष्टनिर्देशोऽयम्। उ उक ऊक ल ऊक लोकेति। उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः *। उकप्रतिषेधे कमेर्भाषायां प्रतिषेधो न भवतीति वक्तव्यम्। दास्याः कामुकः। वृषल्याः कामुकः। अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः *। अव्ययप्रतिषेधे तोसुन्कसुनोः प्रतिषेधो न भवतीति वक्तव्यम्। पुरा सूर्यस्योदेतोराधेयः। पुरा वत्सानामपाकर्तोः। पुरा क्रूरस्य विसृपो विरप्शिन्। शानंश्चानश्शतॄणामुपसंख्यानम् *। शानश्चानश्शतॄणामुपसंख्यानं कर्तव्यम्। सोमं पवमानः। नटमाघ्नानः। अधीयन् पारायणम्। लप्रयोगे नेति निषेधो न प्राप्नोति। मा भूदेवम्। तृन्निसेवं भविष्यति। कथं तृन्निति। नेदं प्रत्ययग्रहणम्। किं तर्हि। प्रत्याहारग्रहणम्। क संनिविष्टानां प्रत्याहारः। लटश्शत्रिसतः प्रभृत्यातृनो नकारात्। यदि प्रत्याहारग्रहणं, चोरस्य द्विषन्। अत्रापि प्राप्नोति। द्विषः शतुर्वावचनम् *। द्विषः शतुर्वेति वक्तव्यम्। तच्चावश्यं वक्तव्यम्। प्रत्ययग्रहणे सति प्रतिषेधार्थम्। तदेव प्रत्याहारे सति विध्यर्थं भविष्यति। न लोकाव्य॥

अकेनोर्भविष्यदाधमर्ण्ययोः॥ ७०॥ अकस्य भविष्यति *। अकस्य भविष्यतीति वक्तव्यम्। यावान् लावको व्रजति। ओदनं भोजको व्रजति। इन आधमर्ण्ये च *। तत इन आधमर्ण्ये भविष्यति चेति वक्तव्यम्। शतं दायी सहस्रं दायी ग्रामं गमी। अके॥

कृत्यानां कर्तरि वा॥ ७१॥ कर्तृग्रहणं किमर्थम्। कर्मणि मा भूदिति। नैतदस्ति प्रयोजनम्। भावकर्मणोः कृत्या विधीयन्ते। तत्र कृत्यैरभिहितत्वात्कर्मणि षष्ठी न भविष्यति। अत उत्तरं पठति। भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणं भव्यादीनां कर्म कृत्यैरनभिहितं गेयो माणवकः साम्रा-

---

योगे इत्यर्थः। उप्रत्ययोऽपि चान्तवद्भावाद् गृह्यते। उकारोपीति। उश्चोकश्चेति द्वयोर्द्वन्द्वः पूर्वं क्रियते ततोऽन्येषाम्। अन्यथा लवुकेति स्यात्। लप्रयोगेनेति। एतेषां च लादेशत्वात्॥ ६९॥

अकेनोः॥ यथासंख्यापवादार्थं वचनम्। अकस्येति स्वरितत्वाप्रतिज्ञानाद्यथासंख्याभावव्याख्यानं चेदमित्याहुः। अकस्य त्वाधमर्ण्ये नास्ति विधानमिति भविष्यदधिकारविहितस्यैव तस्य ग्रहणम्। शतं दायीति। आवश्यकाधमर्ण्ययोर्णिनिरिति णिनिः। ग्रामं गमीति। भविष्यति गम्यादय इति वचनाद्भविष्यति गमेरिनिः। गत्यर्थकर्मणीत्यत्र चतुर्थी वेत्येव पक्षे द्वितीयायां सिद्धायां द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थं ग्रामं गन्तेति यत् कैश्चिदुक्तं तद्भाष्यकारस्य नाभिमतमिति ग्रामंगमीत्युदाहरणोपपत्तिः॥ ७०॥

कृत्यानाम्॥ नेहापीति। काक्वा नञ्प्रयोगादिहाप्यनभिधानमित्यर्थः। आकृष्टव्येति। कृषेर्द्विकर्मकत्वात् प्रधानकर्मणः कृत्येनाभिधानं न त्वप्रधानकर्मण इति

म् * । भव्यादीनां कर्मणोनभिधानात्कृत्यानां कर्तृग्रहणं क्रियते । किमुच्यते भव्यादीनां कर्म कृत्यैरनभिहितमिति नेहाप्यनभिहितं भवति । आक्रष्टव्या ग्रामं शाखेति । एवं तर्हि योगविभागः करिष्यते । कृत्यानां प्रयोगे षष्ठी न भवतीति । किमुदाहरणम् । ग्राममाक्रष्टव्या शाखा । ततः कर्तरि वेति । इहापि तर्हि निषेधः प्राप्नोति । गेयो माणवकः साम्नामिति । उभयप्राप्ताविति वर्तते । ननु चोभयप्राप्तिरेवैषा । गेयो माणवकः साम्नामिति च गेयानि माणवकेन सामानीति च भवति । उभयप्राप्तिर्नाम संभवति यत्रोभयस्य युगपत्प्रसङ्गः । अत्र च यदा कर्मणि न तदा कर्तरि । यदा कर्तरि न तदा कर्मणीति॥इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम्॥ पादश्च समाप्तः॥

द्विगुरेकवचनम् ॥ १ ॥ किमर्थमिदमुच्यते । प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानम् * । प्रत्यधिकरणं वचनोत्पत्तिर्भवति । किमिदं प्रत्यधिकरणमिति । अधिकरणमधिकरणं प्रति प्रत्यधिकरणम् । संख्यासामानाधिकरण्याच्च । संख्यया बह्वर्थया चास्य सामानाधिकरण्यम् । प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च बहुषु बहुवचनमिति बहुवचनं प्राप्नोति । इष्यते चैकवचनं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति द्विगोरेकवचनविधानम् । एवमर्थमिदमुच्यते । अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्रानुप्रयोगस्यैकवचनाभावोऽद्विगुत्वात् * । तत्रानुप्रयोगस्यैकवचनं न प्राप्नोति ।

---

तन्निवृत्त्यर्थमपि कर्तृग्रहणं कस्मान्न भवतीति भावः । एवं तर्हीति । कृत्यानामित्येतावत् सूत्रं क्रियते । तत्र चोभयप्राप्ताविति नेति च वर्तते । तेन कर्तृकर्मणोर्द्वयोरप्युभयप्राप्तौ कृत्ये षष्ठी प्रतिषिध्यते । उभयप्राप्तिरेवैषेति । पर्यायेणेति मन्यते । उभयप्राप्तिर्नामेति । बहुव्रीहिसमासाश्रयणाद्यत्र कृत्ये युगपदुभयोः प्राप्तिस्तत्रैव षष्ठी निषिध्यत इत्यर्थः । ७१ । इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयाध्यायस्य तृतीयमाह्निकम् ॥ समाप्तश्चायं तृतीयः पादः ॥

द्विगुरेकवचनम् । किमर्थमिति । इह समाहारद्विगोरेव ग्रहणमिष्यते । समाहरणं समाहारः स चैक एवेति सिद्धमेकवचनमिति प्रश्नः । प्रत्यधिकरणमिति । समाह्रियत इति समाहार इति यदा कर्मणि घञ् तदानेकस्यार्थस्य समाह्रियमाणस्य वाचको द्विगुरिति एकत्वाभावादप्राप्तमेकवचनं विधीयत इत्यर्थः । अधिकरणशब्देन द्रव्यमुच्यते । यत्संख्यद्रव्याभिधानं तत्संख्याश्रयं वचनमुत्पद्यत इत्यर्थः । पञ्चपूलीशब्देनात्र पञ्चपूलाः समाह्रियमाणा उच्यन्ते । ततो बहुवचनप्रसङ्ग एकवचनविधानम् । संख्यासामानाधिकरण्याच्चेति । एतेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति । भावसाधने हि वैयधिकरण्यं पञ्चानां पूलानां समाहार इति । संख्याशब्देन संख्यावाची शब्द उच्यते । संख्यया बह्वर्थयेति । एकत्वनिरासपरमेतत् । तेन द्व्यर्थोऽपि गृह्यते संख्या । द्विग्रामीति । तत्रानुप्रयोगस्येति । द्विगुः समास एकवचनं प्रत्ययं प्रतिपद्यते इति पारिभाषि-

पञ्चपूलीयमिति । किं कारणम् । अद्विगुत्वात् । द्विगोरेकवचनमित्युच्यते । न चात्रानुप्रयोगो द्विगुसंज्ञः । सिद्धं तु द्विग्वर्थस्यैकवद्वचनात् * । सिद्धमेतत् । कथम् । द्विग्वर्थ एकवद्भवतीति वक्तव्यम् । तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्ह्यन्वर्थग्रहणम् । उच्यते वचनम् । एकस्यार्थस्य वचनमेकवचनमिति । एकशेषप्रतिषेधश्च * । एकशेषे च प्रतिषेधो वक्तव्यः । पञ्चपूली च पञ्चपूली च पञ्चपूलीच पञ्चपूल्यः । न वान्यस्यानेकत्वात् * । न वा वक्तव्यः । किं कारणम् । अन्यस्यानेकत्वात् । नैतद् द्विगोरनेकत्वम् । कस्य तर्हि । द्विग्वर्थसमुदायस्य । समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम् * । समाहारग्रहणं च कर्तव्यम् । किं प्रयोजनम् । तद्धितार्थप्रतिषेधार्थम् । तद्धितार्थे यो द्विगुस्तस्य मा भूदिति । पञ्चकपालौ पञ्चकपाला इति । किं पुनरयं पञ्चकपालशब्दः प्रत्येकं परिसमाप्यते आहो स्वित्समुदाये वर्तते । किं चातः । यदि तावत्प्रत्येकं परिसमाप्यते पुरस्तादेव चोदितं परिहृतं च । अथ समुदायेपि वर्तते । वा न समाहारैकत्वात् * । न वैतत् । समाहारैकत्वादपि सिध्यति । एवं तर्हि प्रत्येकं परिसमाप्यते । पुरस्तादेव चोदितं परिहृतं च । अपर आह । न वा समाहारैकत्वात् । न वा योगारम्भेणैवार्थः । किं कारणम् । समाहारैकत्वादेकवचनं भविष्यति । द्विगुरेक ॥

---

कैकवचनाश्रयेण दोषोपन्यासः । उच्यते वचनमिति । कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । एकस्यार्थस्येति । वाच्यवाचकसंबन्धे षष्ठी । एकस्यार्थस्य वाचको द्विगुः समास उच्चार्यतइत्यर्थः । तत्र सामर्थ्यादयमतिदेश उपपद्यते । यो ह्यनेकस्यार्थस्य वाचकः स कथमेकस्य वाचकस्तस्मादेकत्वाश्रयकार्यप्राप्तये द्विग्वर्थस्यैकवद्भावो विधीयते । ततश्च तस्मिन्नर्थे प्रयुज्यमानस्य द्विगोरप्येकवचनं सिद्ध्यति । एकशेषप्रतिषेधश्चेति । एकशेषविषय एकवद्भाव उपचारादेकशेषशब्देनोक्तः । पञ्चपूल्य इति । अत्रैकशेषे कृतेपि द्विगुत्वात्तदर्थस्यैकवद्भावः प्राप्तः प्रतिषिध्यते । न वेति । प्रथमस्य द्विग्वर्थस्यानेकसंख्यायुक्तस्यानेनैकवद्भावः कृतः । तत एकशेषे कृते द्विग्वर्थसमुदायस्याद्विग्वर्थत्वाद् बहिरङ्गत्वाच्च प्राथमकल्पिकेन्तरङ्गे द्विग्वर्थे चरितार्थत्वाच्चैकवद्भावो न प्रवर्तइत्यर्थः । पञ्चकपालाविति । संस्कृतार्थे विहितस्याणो द्विगोर्लुगनपत्यइति लुक् । किं पुनरिति । यदि तावदेकस्मिन् संस्कृते प्रत्ययमुत्पाद्य लुकि कृते एकशेषः क्रियते तदा पञ्चपूल्य इत्यनेन पञ्चकपाला इति समानम् । अथ प्रथममेव पञ्चसु कपालेषु संस्कृता इति बहुत्वसंख्यायुक्ता अर्था विवक्ष्यन्ते तदा तेषां समाह्रियमाणत्वात् समाहाररूपमस्तीति क्रियमाणेपि समाहारग्रहणे निवृत्तिर्न सिध्यतीत्यर्थः । एवन्तर्हीति । न हि द्वयोर्बहूनां वा पुरोडाशानां पञ्चसु कपालेषु संस्कारः क्रियते । अपि तु प्रत्येकमिति भावः । अपर आहेति । न वा समाहारैकत्वादित्येतद्वार्तिकं सूत्रप्रत्याख्यानार्थमित्येतद्व्याचष्टे । अयं भावः । तिरोहितावयवभेद-समूहरूपःसमाहारो द्विग्वर्थस्तस्यैकत्वाद्वनयूथादिवत्सिद्धमे-

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥ प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणम् * । प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम् । प्राण्यङ्गानां प्राण्यङ्गैरिति वक्तव्यम् । तूर्याङ्गानां तूर्याङ्गैरिति वक्तव्यम् । सेनाङ्गानां सेनाङ्गैरिति वक्तव्यम् । किं प्रयोजनम् । व्यतिकरो मा भूदिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । योगविभागात्सिद्धम् * । योगविभागः करिष्यते । प्राण्यङ्गानाम् । ततस्तूर्याङ्गानाम् । ततः सेनाङ्गानामिति । स तर्हि योगविभागः कर्तव्यः । न कर्तव्यः । प्रत्येकमङ्गशब्दः परिसमाप्यते ॥

अनुवादे चरणानाम् ॥ ३ ॥ इह कस्मान्न भवति । नन्दन्तु कठकालापाः । वर्धन्तां कठकौथुमाः । स्थेणोः * । स्थेणोरिति वक्तव्यम् । एवमपि तिष्ठन्तु कठकालापा इत्यत्रापि प्राप्नोति । अद्यतन्यां चेति वक्तव्यम् । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । उदगात्कौमोदपैप्पलादम् ॥

विशिष्टलिङ्गो नदीदेशो ऽग्रामाः ॥ ७ ॥ ग्रामप्रतिषेधे नगरप्रतिषेधः * । अग्रामा इत्यत्र नगराणामिति वक्तव्यम् । इह मा भूत् । मथुरा पाटलिपुत्रमिति । उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः । शौर्यं च केतवता च

---

कवचनमिति नार्थः सूत्रेण तस्मिंश्चासति समाहारग्रहणं न कर्तव्यम् । क्रियमाणं तु सूत्रे समाहारग्रहणं तद्धितार्थद्विगुव्यावृत्त्यर्थं कर्तव्यमेव । तेन समाहारेण व्यपदिष्टस्य द्विगोर्ग्रहणं भवति । यस्तु तद्धितार्थे न तस्य भवति । तेन पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इत्यादौ द्विग्वर्थस्यैकवद्भावाभावः । यदा बहूनां पटानां पञ्चगुत्वं न तु प्रत्येकं तदैकशेषस्यायमविषयः । एतदेव मन्यमानेन भाष्यकारेण पूर्वव्याख्यान ऽसमाश्वसता प्रत्याख्यानत्वेनं वार्तिकं व्याख्यातम् । उत्तरपदे तु यो द्विगुस्तदर्थस्यार्थान्तरे गुणभावादस्वातन्त्र्यात्सत्यपि प्रातिपदिकत्वे ततः प्रत्ययानुत्पादादेकवद्भावातिदेशः प्रयोजनाभावान्न प्रवर्तते ॥१॥

द्वन्द्वश्च ॥ तत्पूर्वपदोत्तरपदग्रहणमिति । यदङ्गवाचि पूर्वपदं तदङ्गवाच्येव यद्युत्तरपदं भवति तथा सत्येकवद्भावो नान्यथेत्यर्थः । व्यतिकरो मा भूदिति । पाणिमार्दङ्गिकाश्वारोहा इत्यादावेकवद्भावो मा भूदित्यर्थः । प्रत्येकमिति । बहुवचनान्तोऽङ्गशब्दः प्रत्येकमभिसंबध्यत इतिभावः । पूर्वपक्षोपि प्रत्येकमेवाङ्गशब्दस्य संबन्धः । स त्वन्यथा । प्राण्यङ्गतूर्याङ्गसेनाङ्गवाचिनां द्वन्द्व एकवदिति । न हि प्राणितूर्यसेनानामेकमङ्गं संभवतीति सामर्थ्यादेव प्रत्येकपरिसमाप्तिरङ्गशब्दस्य सिद्धा । तस्मादन्यथा प्रत्येकं परिसमाप्तिर्बहुवचनान्तस्य सतः प्रतिपाद्यते तेनास्माद् ग्रहणकवाक्याल्लक्ष्यसंस्कारकं वाक्यत्रयमुपप्लवत इतिसंकरो न भवति ॥२॥

अनुवादे ॥ यदा प्रतिपत्ता प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोक्ता प्रतिपाद्यते तदानुवादो भवति ॥३॥

विशिष्ट ॥ जनपदविशेषो ग्रामः। ग्रामे नाऽध्येयमभक्ष्यो ग्राम्यकुक्कुट इत्यादौ ग्रामग्रहणे नगरस्यापि ग्रहणदर्शनाद्वचनम् । अग्रामा इत्यत्रेति । उभयत इति । ग्रामनगरो-

शौर्यकेतवते जाम्बवं च शालूकिनी च जाम्बवशालूकिन्यौ ॥

क्षुद्रजन्तवः ॥ ८ ॥ क्षुद्रजन्तव इत्युच्यते । के क्षुद्रजन्तवः । क्षोत्तव्या जन्तवः क्षुद्रजन्तवः यद्येवं यूकालिक्षं कीटपिपीलिकं दंशमशकमिति न सिध्यति । एवं तर्ह्यनस्थिकाः क्षुद्रजन्तवः । अथ वा येषां स्वं शोणितं नास्ति ते क्षुद्रजन्तवः । अथ वा येषामासहस्रादञ्जलिर्न पूर्यते ते क्षुद्रजन्तवः । अथ वा येषां गोचर्ममात्रं राशिं हत्वा न पतति ते क्षुद्रजन्तवः । अथ वा नकुलपर्यन्ताः क्षुद्रजन्तवः ॥

येषां च विरोधः शाश्वतिकः ॥ ९ ॥ किमर्थश्चकारः एवकारार्थश्चकारः । येषां विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति । पशुशकुनिद्वन्द्वे विरोधिनां वैविप्रतिषिद्धमित्युक्तं तन्न वक्तव्यं भवति ॥

शूद्राणामनिरवसितानाम् ॥ १० ॥ अनिरवसितानामित्युच्यते । कुतोऽनिरवसितानाम् । आर्यावर्तादनिरवसितानाम् । कः पुनरार्यावर्तः । प्रागादर्शात्प्रत्यक्कालकवनाद्दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । यद्येवं किष्किन्धगान्धिकं शकयवनं शौर्यक्रौञ्चमिति न सिध्यति । एवं तर्ह्यार्यनिवासादनिरवसितानाम् । कः पुनरार्यनिवासः । ग्रामो घोषो नगरं संवाह इति । एवमपि य एते महान्तः संस्त्यायास्तेष्वभ्यन्तराश्चण्डाला मृतपाश्च वसन्ति तत्र चण्डालमृतपा इति न सिध्यति । एवं तर्हि याज्ञात्कर्मणोऽनिरवसितानाम् । एवमपि तक्षायस्कारं

---

भयावयवे द्वन्द्वे ग्रामसंबन्ध्येव प्रतिषेधो वक्तव्यः शौर्यं नगरम् । केतवता ग्रामः । जाम्बवं नगरं शालूकिनी ग्रामः ॥७॥

क्षुद्रजन्तवः ॥ स्मृतीनां विरुद्धानां दर्शनात्प्रश्नः । के क्षुद्रजन्तव इति । क्षोत्तव्या इति । अर्हार्थे कृत्यः । ये तुद्यमाना अपि न म्रियन्ते जलौकप्रभृतयः । ये तु म्रियन्ते ते पापनिमित्तत्वादक्षोदनार्हा । नकुलपर्यन्ता इति । एतदेव दर्शनमत्र व्यापित्वाद् गृह्यते। अत एवैतत्पश्चादुपन्यस्तम् ॥८॥

येषां च ॥ यदन्यदिति । चकारेण यत्नेन परो विकल्पो बाध्यते । तेनाश्वमहिषं काकोलूकमिति नित्य एकवद्भावो भवति ।

शूद्राणाम् ॥ निरवसिता बहिष्कृता उच्यन्ते । तत्रावधिप्रश्नः । कुत इति । प्रागादर्शादिति । आदर्शादयः पर्वतविशेषाः । दक्षिणेनेति । एनबन्तः । एनपा द्वितीया । प्रागादिभ्यः प्रथमान्तेभ्यो देशवृत्तिभ्यः प्रत्ययो विहितः । एतत्पर्वतचतुष्टयमध्यमार्यावर्तो देश इत्यर्थः । यद्येवमिति । एतेषामार्यावर्ताद् बाह्यत्वादिति भावः । ग्राम इति । एतेष्वार्या निवसन्तीति भावः । तत्र ग्रामः प्रसिद्धः । घोषो गोमहिष्यादिनिवासः । संवाहो वणिक्प्रधानः । संस्त्याया इति । निवासविशेषा इत्यर्थः । मृतपा डोम्बा इत्याहुः । याज्ञादिति । शूद्राणां पञ्चयज्ञानुष्ठाने ऽधिकारोऽस्तीति भावः । तक्षायस्कारमिति । तक्षादीनां यज्ञे ऽधिकाराभावादिति भावः । संस्कारेणेति । संस्कार स्मृतिकारैर्द्रव्यशुद्धौ पठितस्तेनैव न तदधिकेनेत्यर्थः ॥ १० ॥

रजकतन्तुवायमिति न सिध्यति। एवं तर्हि पात्रादनिरवसितानाम्। यैर्भुक्ते पात्रं संस्कारेण शुध्यति ते ऽनिरवसिताः यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिता इति ॥

**गवाश्वप्रभृतीनि च ॥ ११ ॥** गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम् ॥ * । गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम् । गवाश्वम् । गवाविकम् । गवैडकम् ।

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १२ ॥**

बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् * । फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां द्वन्द्वः विभाषा एकवद्भवति बहुप्रकृतिरिनि वक्तव्यम् । फल । बदरामलकम् । बदरामलकानि । सेना । हस्त्यश्वम् । हस्त्यश्वाः । वनस्पति । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । मृग । रुरुपृषतम् । रुरुपृषताः । शकुनि । हंसचक्रवाकम् । हंसचक्रवाकाः । क्षुद्रजन्तु । यूकालिक्षम् । यूकालिक्षाः । धान्य । व्रीहियवम् । व्रीहियवाः ।माषतिलम् । माषतिलाः । तृण । कुशकाशम् । कुशकाशाः । शरशीर्यम् शरशीर्याः । किं प्रयोजनम् । बहुप्रकृतिरेव यस्तत्र यथा स्यात् । क्व मा भूत् । बदरामलके तिष्ठतः । किं पुनरनेन या प्राप्तिः सा नियम्यतआहोस्विदविशेषेण । किं चातः यद्यनेन या प्राप्तिः सा नियम्यते प्लक्षन्यग्रोधौ जातिरप्राणिनामिति नित्यो द्वन्द्वैकवद्भावः प्राप्नोति । अथाविशेषेण, न दोषो भवति यथा न दोषस्तथास्तु । पशुशकुनिद्वन्द्वे विरोधिना पूर्वविप्रतिषिद्धम् * । पशुशकुनिद्वन्द्वे विरोधिनां येषां च विरोधः शाश्वतिक इत्येतद्भवति पूर्वविप्रतिषेधेन । पशुशकुनिद्वन्द्वस्यावकाशः। महाजोरभ्रम्। महाजोरभ्राः। हंसचक्रवाकम् । हंसचक्रवाकाः । येषां च विरोधः शाश्वतिक इत्यस्यावकाशः । श्रमणब्राह्मणम् । इहोभयं प्राप्नोति काकोलूकं श्वशृगालमिति। येषां च विरोधः

---

गवाश्वप्र॥ यथोच्चारितमिति। गणे यादृशाः कृतावङ्कः पठिता द्वन्द्वास्तादृशानामेवेद कार्यमेकवद्भावलक्षणं भवतीत्यर्थः। यदा त्ववङ् नास्ति विकल्पितत्वात्तदा पशुद्वन्द्वे विभाषा भवति गोश्वं गोश्वा इति। एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति ॥११॥

विभाषा वृक्ष॥ बहुप्रकृतिरिति। बहवो बहुत्वसंख्यायुक्ता वर्तिपदार्थाः प्रकृतयः कारणानि यस्य स बहुप्रकृतिः। बदरामलकमिति। जातिरप्राणिनामित्येकवद्भावः। क्वचित्तु बदरामलकानीत्यपि पठ्यते। तत्रैवं व्याचक्षते।नित्यएकवद्भावे प्राप्ते विकल्पोनेन क्रियते। अन्ये तु बदरामलकानीत्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भावो बहुप्रकृतेर्भवतीति प्रदर्शयतइत्याहुः। हस्त्यश्वमिति। सेनाङ्गत्वेऽपि परत्वात्पशुलक्षणो विकल्पो भवति। किं पुनरिति । अस्मिन् प्रदेशे पठितत्वात्किमेतत्सूत्रविहित एव एकवद्भावो नियतविषयो व्यवस्थाप्यते अथ प्रकरणविहित इति प्रश्नः। येषां सूत्रान्तरेणानेन च प्राप्तिर्वनस्पत्यादीनां तद्विषय एव लक्षणो न त्वन्यतरप्राप्तिविषयः। यथा न दोष इति।

शाश्वतिक इत्येतद्भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तं चकारकरणस्य प्रयोजनं येषां च विरोधः शाश्वतिकस्तेषां द्वन्द्व एकवचनमेव यथा स्यात् यदन्यत्प्राप्नोति तन्मा भूदिति । अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकम् * । अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन । अश्ववडवयोः पूर्वलिङ्गत्वस्यावकाशः । विभाषा पशुद्वन्द्वनपुंसकं यदा न पशुद्वन्द्वनपुंसकं सोवकाशः । अश्ववडवौ । पशुद्वन्द्वनपुंसकस्यावकाशः अन्ये पशुद्वन्द्वाः । महाजोरभ्रं महोजोरभ्राः । पशुद्वन्द्वनपुंसकप्रसङ्गउभयं प्राप्नोति । अश्ववडवम् । पशुद्वन्द्वनपुंसकं भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । प्रतिपदविधानात्सिद्धम् * । प्रतिपदमत्र नपुंसकं विधीयते । अश्ववडवपूर्वापरेति । एकवचनमनर्थकं समाहारैकत्वात् * । एकवद्भावो ऽनर्थकः । किं कारणम् । समाहारैकत्वात् । एकोयमर्थः समाहारो नाम तस्यैकत्वादेकवचनं भविष्यति । इदं तर्हि प्रयोजनम् । एवं विज्ञास्यामि । इह नित्यो विधिरिह विभाषेति । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति सर्वो द्वन्द्वो विभाषैकद्भवतीति । यदयं तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यमित्याह । इदं तर्हि प्रयोजनम् । सनपुंसकमिति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । न तर्हीदानीमिदं वक्तव्यम् । वक्तव्यं च किं प्रयोजनम् । पूर्वत्र नित्यार्थम् । पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थं विभाषा वृक्षमृगइति ।

**विभाषा समीपे ॥ १६ ॥** किमुदाहरणम् । उपदशं पाणिपादं उपदशाः पाणिपादाः । नैतदस्ति प्रयोजनम् । अयं द्वन्द्वैकवद्भाव आरभ्यते तत्र कः प्रसङ्गो

---

व्यापित्वात्प्रकरणापेक्षोयं विषयनियम इत्यर्थः । अश्ववडवयोरिति । पशुत्वाद्विभाषैकवद्भावः । तत्रैकवद्भावपक्षे नपुंसकत्वमपि प्राप्नोति पूर्ववदश्ववडवावित्यतिदेशात् पुंस्त्वमपि । तत्र परत्वात् पुंस्त्वे प्राप्ते पूर्वविप्रतिषेध उच्यते । प्रतिपदविधानादिति । नात्र पशुग्रहणेनैकवद्भावो विधीयते किं तर्ह्यश्ववडवग्रहणेन तत्र प्रतिपदविधानात्स नपुंसकमित्येतद्भवति । तच्छब्देन ह्येकवद्भावभाजं परामृश्य नपुंसकत्वं विधीयते । तेन यथैकवद्भावोत्र प्रतिपदं विधीयते तथा नपुंसकत्वमिति भावः । समाहारैकत्वादिति । तिरोहितावयवभेदो हि समाहारः स च वनयूथादिवदेक इत्यर्थः । इह नित्य इति । द्वन्द्वश्चेत्यारभ्यास्माद्योगात्प्रागनित्यो विधिरनेन तु योगद्वयेन विभाषेत्यर्थः । यदयमिति । यद्येतत्प्रकरणोपात्तानामेवैकवद्भावः स्यात्तदा तिष्यपुनर्वसुशब्दयोरत्रापठितत्वादेकवद्भावस्याभावात्तन्निवृत्तये बहुवचनग्रहणमनर्थकं स्यादित्यर्थः । पूर्वत्रेति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमित्यर्थः । उत्तरत्रेति । क्व चिज्जातिरप्राणिनामिति प्राप्ते विभाषा मृगादीनां तु व्यतिकरनिरासार्थम् ॥१२॥

विभाषा स ॥ अनुप्रयोगे दोषदर्शनात्प्रश्नः । किमुदाहरणमिति । कः प्रसङ्ग इति । नन्व यंस्यैकवद्भावादनुप्रयोगस्यापि सेत्स्यति । नैतदस्ति । यदि तावदव्ययीभाव एवा-

यदनुप्रयोगस्य स्यात् । एवं तर्ह्यव्ययस्य संख्ययाऽव्ययीभावोप्यारभ्यते बहुव्रीहिरपि । तद्यदा तावदेकवचनं तदाव्ययीभावोनुप्रयुज्यते एकार्थस्यैकार्थ इति । यदा बहुवचनं तदा बहुव्रीहिरनुप्रयुज्यते बह्वर्थस्य बह्वर्थ इति ॥

तत्पुरुषो ऽनञ्कर्मधारयः ॥ १९ ॥ किमर्थमिदमुच्यते संज्ञायां कन्थोशीनरेष्विति वक्ष्यति । तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति नैतदस्ति प्रयोजनम् । न हि संज्ञायां कन्थान्त उशीनरेष्वतत्पुरुषो नञ्समासः कर्मधारयो वास्ति । उत्तरार्थं तर्हि । उपज्ञोपक्रमं तदाद्याचिख्यासायामिति वक्ष्यति । तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति । नैतदस्ति प्रयोजनम् । न हि तदाद्याचिख्यासायामुपज्ञोपक्रमान्तो ऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति । उत्तरार्थमेव तर्हि । छायाबाहुल्यइति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति । नैतदस्ति प्रयोजनम् । न हि च्छायान्तो बाहुल्ये ऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ति । उत्तरार्थमेव तर्हि सभाराजाऽमनुष्यपूर्वा, अशालाचेति वक्ष्यति । तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति । एतदपि नास्ति प्रयोजनम् । न हि सभान्तो ऽशालायामतत्पुरुषो नञ्समासः कर्मधारयो वास्ति । इदं तर्हि विभाषा सेनासुरेति वक्ष्यति तदतत्पुरुषस्य नञ्समासस्य कर्मधारयस्य वा मा भूदिति ।. तत्पुरुष इति किमर्थम् । दृढसेनो राजा । अनञिति किमर्थम् । असेना । अकर्मधारय इति किमर्थम् । परमसेना । उत्तमसेना ॥

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २६ ॥ किमर्थमिदमुच्यते ॥ द्वन्द्वोयमु

---

नुप्रयुज्यते तदा तस्याव्ययत्वादसंख्यत्वाद् बहुवचनं न स्यात् । सत्यपि वा तस्मिन्नभावे कृते उपदशा इति न स्यात् । अथ बहुव्रीहिरेवानुप्रयुज्यते तदोपदशस्य पाणिपादस्येति षष्ठी स्यात् उपदशमिति चेष्यते । एतदेव मनसिकृत्याह एवं तर्हीति । अव्ययीभावो ऽव्ययं विभक्तीति विहितः । बहुव्रीहिस्तु संख्ययाव्ययेति । तद्यदेति । अव्ययीभावस्याव्ययत्वादसंख्यत्वादेकवचनस्य उत्सर्गत्वादिति भावः । एकार्थ इति । अभेदैकत्वाश्रयादित्याहुः । यदेति । बहुव्रीहेः समीपिप्रधानत्वाद् बह्वर्थत्वमिति भावः १६

तत्पुरुषो ॥ उत्तरेषु चिद्योगेष्वन्यथासिद्धिं दृष्ट्वा पृच्छति किमर्थमिति । शिष्यबुद्धिपरीक्षार्थमन्यथासिद्धमपि तावत् प्रयोजनमाह पश्चात्त्वनन्यथासिद्धिं दर्शयिष्यति नहीति । अनादिस्तत्र संज्ञा गृह्यते न त्विदानींतनीति भावः । न हीति । षष्ठीतत्पुरुषाद्विना तदादित्वासंप्रत्यय । न हिच्छायान्त इति । पूर्वपदार्थधर्मो बाहुल्यं न च षष्ठीतत्पुरुषादिना बाहुल्यं गम्यते । न हि सभान्त इति । अशालेति वचनात् संघातवचनः सभाशब्दो ग्राह्यो न च समूहिभिर्विना समूहोपपत्तिरिति षष्ठीतत्पुरुषस्यैव ग्रहणमिति भावः । इदं तर्हीति । अत्र तु प्रदेशे मन्दबुद्ध्यनुग्रहायाधिकारः कृतः ॥१६॥

परवत् ॥ द्वन्द्वापेक्षया किमिदं विध्यर्थमाहो स्विन्नियमार्थम् । तथा किं षष्ठीनिर्देशेन

तत्पुरुष द्वन्द्व समास में पूर्व में मयूर कुक्कुटौ



भयपदार्थप्रधानः। तत्र कदा चित्पूर्वस्य यल्लिङ्गं तत्समासस्यापि स्यात्कदा चि-दुत्तरपदस्य, इष्यते च परस्य यल्लिङ्गं तत्समासस्य यथा स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीनि। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्येवमर्थमिदमुच्यते तत्पुरुषश्चापि कः प्रयोजयति। यः पूर्वपदार्थप्रधानः। एकदेशिसमासोर्धपिप्पलीति। यो ह्युत्तरपदार्थप्रधानः। दैवकृतं तस्य परवल्लिङ्गम्। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः *। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः। प्राप्तो जीविकां प्राप्तजी-विकः। आपन्नो जीविकामापन्नजीविकः। अलं पूर्व। अलं जीविकायै अलंजीविकः। गतिसमास। निष्कौशाम्बिः निर्वाराणसिः। पूर्वपदस्य च *। पूर्वपदस्य च प्रति-षेधो वक्तव्यः। मयूरीकुक्कुटौ। यदि पुनर्यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासादन्यदतिदिश्यते। समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनम् *। समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टापो लुग्वक्तव्यः। अश्ववडवौ। निपातना-त्सिद्धम् *। निपातनात्सिद्धमेतत्। किं निपातनम्। अश्ववडवपूर्वापरेति। उपसर्जनद्व-

---

समासार्थस्य लिङ्गातिदेशः। अथ सप्तम्याश्रयेण पूर्वपदस्येति संशयानः पृच्छति किमर्थमिति। द्वन्द्वोयमिति। षष्ठीनिर्देशो नियमश्चेति भावः। तत्रावयवार्थव्यतिरिक्तः समुदायार्थो नास्तीत्युभयपदार्थप्रधान इत्यनेन दर्शितं भवति। तत्र पदाऽपेक्षितपर-स्परौ विरुद्धलिङ्गावयवार्थावेव समुदायार्थस्तदा पर्यायेण लिङ्गद्वयप्रसङ्गे नियमार्थ-मिदं संपद्यते। यद्येवं परस्यैव संबन्धि लिङ्गं क्रियते इति सादृश्याभावाद्वतिनिर्देशो नोपपद्यते। नैष दोषः। केवलाकेवलावस्थाभेदाश्रयेण भेदमाश्रित्य वतिनिर्देशः कृतः। तत्पुरुषापेक्षया विध्यर्थत्वं दर्शयति तत्पुरुषश्चापीति। दैवकृतमिति। अयत्नसिद्ध-मित्यर्थः। पूर्वपदस्य चेति। सप्तमीनिर्देशाश्रयेण दोषोद्भावनम्। तत्र ह्ययमर्थो भवति। द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवति। तत्र कार्यिणोऽनुपादानात्परशब्दस्य संब-न्धिशब्दत्वात्तदाक्षिप्तं पूर्वपदमेव कार्यभाक् प्राप्नोति। तत्र मयूरीकुक्कुटाविति पूर्वप-दस्य पुंस्त्वातिदेशे स्त्रीप्रत्ययनिवृत्तिप्रसङ्गः कुक्कुटमयूर्यौ इत्यत्र स्त्रीप्रत्ययप्रसङ्गस्त-थार्धपिप्पलीत्यादावपीति प्रतिषेध उच्यते। पूर्वपदप्रतिषेधे च कृते सामर्थ्याद् द्वन्द्व-तत्पुरुषयोरेव कार्यित्वं संपद्यते। यदि पुनरिति। षष्ठीनिर्देशो व्यतिरिक्तसमुदायदर्शनं चाश्रीयते। व्यतिरिक्तसमुदायपक्षे हि मुख्यसादृश्योपपत्तिरिति भावः। समासादन्य-दिति। समासार्थलिङ्गमुपचारात् समासशब्देनोच्यते। तेनोत्तरपदार्थलिङ्गसदृशं समा-सार्थस्य स्वालिङ्गबाधनाय लिङ्गान्तरमतिदिश्यते इत्युक्तं भवति। अश्ववडवाविति। परवल्लिङ्गे प्राप्ते पूर्ववदश्ववडवाविति पूर्वपदार्थलिङ्गसदृशं पुंलिङ्गं समासार्थस्य विधीयते न तूत्तरपदार्थस्येति। स्त्रीत्वस्यानिवर्तनाट्टापः श्रवणे प्राप्ते लुग्वक्तव्यः। नि-पातनादिति। टानिवृत्त्या रूपमेतदित्यर्थः। पूर्ववदश्ववडवाविति निपातनमाश्रयितुं न युज्यते वचनान्तरे पूर्वपदालिङ्गातिदेशाप्रसङ्गादश्ववडवानश्ववडवैरिति मत्वा पृच्छ-ति किं निपातनमिति। अश्ववडवपूर्वापरेति। अश्ववडवपूर्वापरेति वक्तव्ये टापो-

स्वत्वं वा ॥ अथ वा उपसर्जनस्येति ह्रस्वत्वं भविष्यति। इहापि तर्हि प्राप्नोति। कुक्कुटमयूर्यौ इति। अस्तु परवल्लिङ्गमिति शब्दशब्दार्थौ ॥ परवल्लिङ्गमिति शब्दशब्दार्थावतिदिश्येते। तत्रौपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति। इदं तर्हि दत्ता च कारीषगन्ध्या च दत्ताकारीषगन्ध्ये। दत्ता च गार्ग्यायणी च दत्तागार्ग्यायण्यौ। द्वौ ष्यङौ द्वौ ष्फौ च प्राप्नुतः। तस्मान्नैतच्छक्यं शब्दशब्दार्थावतिदिश्येते इति। ननु चोक्तं समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनमिति। परिहृतमेतत्। निपातनात्सिद्धमिति। अथ वा नैवं विज्ञायते। परस्यैव परवदिति। कथं तर्हि। परस्येव परवदिति। यथाजातीयकं परस्य लिङ्गं तथाजातीयकं समासस्यातिदिश्यते इति। अथ पूर्वपदस्य न प्रतिषिध्यते। प्राप्तादिषु कथम्। प्राप्तादिषु चैकदेशिग्रहणात्सिद्धम् ॥ द्वन्द्वैकदेशिन्योरिति वक्ष्यामि। तदेकदेशिग्रहणं कर्तव्यम्। न कर्तव्यम्। एकदेशिसमासो नारभ्यते। कथमर्धपिप्पलीति। समानाधिकरणो भविष्यति। अर्धं च सा पिप्पली च अर्धपिप्पलीति। सिध्यति। परत्वात्षष्ठीसमासः

---

लुग्वारणं निपातनमित्यश्ववडवयोर्द्वन्द्वे टाब्निवर्त्यते। उपसर्जनह्रस्वत्वमिति। अनेकमिति प्रथमानिर्दिष्टत्वात्समुदायार्थेऽवयवार्थस्य गुणभावादुपसर्जनत्वमिति भावः। इहापीति। ततश्च कुक्कुटमयूरी इति प्राप्नोति। शब्दशब्दार्थाविति। लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययार्थश्चात्र तन्त्रेणैकशेषेण वोच्यतइत्यर्थः। आतिदेशिकस्य श्रवणमिति तस्यानुपसर्जनत्वात्तदन्तस्य चाप्रातिपदिकत्वाद् ह्रस्वाभावात्। द्वौ ष्यङाविति॥ तत्र यस्येति चेत्याकारलोपे कृते द्वौ यकारौ श्रूयेयाताम्। हलो यमामिति विकल्पितो लोपः। यद्यपि यणो मय इति द्विर्वचनेनात्र भाव्यं तथापि पक्षे यकारत्रयश्रवणप्रसङ्गः। पुंवद्भावेनेति। भस्याढे तद्धितइत्यनेनेति भावः। द्वौ तिशब्दाविति। अत्र ह्यभत्वान्नास्ति पुंवद्भावः। तस्मान्नैतदिति। उपसर्जनह्रस्वत्वं तु न भवत्यन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञाविधानात्सकलपदार्थप्रधानत्वाच्च द्वन्द्वस्य। व्यतिरिक्तसमुदायरूप द्वन्द्वार्थाभ्युपगमेऽपि अवयवानां कार्यसंबन्धात् फलतः प्राधान्यमेव। अथ वेति। नायं नियमः किं तु विधिरित्यर्थः। परस्यैवेति। एवशब्दप्रयोगेण नियमं निषेधाय दर्शयति। न त्वेवार्थे वतिर्विहितः यथा च नियमपक्षे वतिरुपपद्यते यथा पूर्वमेव प्रतिपादितम्। इह त्रीणि दर्शनानि। अवयवापेक्षितपरस्परौ द्वन्द्वार्थः न तु व्यतिरिक्तः समुदायोऽस्ति। अत्र दर्शने नियमार्थमिदम्। अवयवार्थव्यतिरिक्तो वा समुदायो द्वन्द्वार्थः स चावयवलिङ्गेनैव लिङ्गवानित्यत्रापि दर्शने पर्यायेण लिङ्गप्राप्तौ वचनं नियमार्थम्। यदा तु समुदायो द्वन्द्वार्थः स चालिङ्ग इति दर्शनं तदा विध्यर्थमिदम्। अथ पूर्वपदस्येति। अतः पूर्वपदस्येत्यर्थः। एतेन मयूरीकुक्कुटाविति परिहृतं षष्ठ्याश्रयेण दर्शनत्रयेऽपि। मध्यमे तु दर्शने आश्रयभेदाल्लिङ्गभेदाश्रयेण परवदिति सादृश्याश्रयोक्तिः। एकदेशिसमासो नारभ्यतइति। पूर्वापराधरेति योगत्रयं नारभ्यते। परवल्लिङ्ग द्वन्द्वस्येत्येतावच्च क्रियते सूत्रमित्यर्थः। अर्धं च सा पिप्पली चेति। अवयवसमुदायोपचारात्सामानाधिकरण्यम्। तत्रोत्तरपदार्थस्य प्राधान्यात्तदीयमेव लिङ्गं तत्पुरु-

प्राप्नोति। अथ पुनरयमेकदेशिसमास आरभ्यमाणः षष्ठीसमासं बाधते। इष्यते च षष्ठीसमासोपि। तद्यथा। अपूपार्धं मया भक्षितं ग्रामार्धं मया लब्धमिति। एवं पिप्पल्यर्धमित्यपि भवितव्यम्। कथमर्धपिप्पलीति। समानाधिकरणो भविष्यति॥

रात्राह्नाहाः पुंसि॥ २९॥ अनुवाकादयः पुंसि *। अनुवाकादयः पुंसि भाष्यन्तइति वक्तव्यम्। अनुवाकः। शंयुवाकः। रात्रा॥

अपथं नपुंसकम्॥ ३०॥ पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम्। पुण्याहम्। सुदिनाहम्। पथःसंख्याव्ययादेरिति वक्तव्यम्। द्विपथं त्रिपथं चतुष्पथम् उत्पथं विपथम्। द्विगुश्च। द्विगुश्च समासो नपुंसकलिङ्गो भवतीति वक्तव्यम्। पञ्चगवं दशगवम्। अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यतइति वक्तव्यम्। पञ्चपूली दशपूली। वाबन्तः *। वा आबन्तः स्त्रियां भाष्यतइति वक्तव्यम्। पञ्चखट्वी पञ्चखट्वम्। दशखट्वी दशखट्वम्। अनो नलोपश्च वा च स्त्रियां भाष्यतइति वक्तव्यम्। पञ्च- तक्षी पञ्चतक्षम्। पात्रादिभ्यः प्रतिषेधो

---

षस्यापि भवतीति नार्थस्तत्पुरुषग्रहणेनेत्यर्थः। परत्वादिति। अयमर्थः। न ते प्रयोजनादिष्टं मुख्यशब्दार्थलुम्पनमिति भेदाश्रयणमेव परं मुख्यं प्रधानं ततश्च षष्ठीसमास एव प्राप्नोति भिन्नविषयत्वात्तु शास्त्रापेक्षपरत्वमत्र न विवक्षितम्। समानाधिकरणो भविष्यतीति। एवमादिप्रयोगसिद्धिरेवोपचाराश्रयणस्य प्रयोजनम्। मुनित्रयाच्च भाष्यकारः प्रमाणतरमभिकलक्ष्यदर्शित्वात्॥ २८॥

रात्रा॥ अनुवाक इति। अनूच्यतइत्यनुवाकस्तत्र विशिष्टं वाक्याविधेयमिति नपुंसकत्वं प्राप्ते वचनम्॥ २९॥

अपथम्॥ पुण्याहमिति। रात्राह्नाहाः पुंसीति प्राप्ते वचनम्। सुदिनाहमिति। सुदिनशब्दोत्र प्रशंसामात्रवाची तेन सुदिनाहशब्दयोर्युगपदविरुद्धः प्रयोगः। दृश्यते च प्रशंसार्थस्य प्रयोगः सुदिनासु समासु कार्यमेतत् प्रविचिन्वीति विशेषतः स्वयं चेति। चतुष्पथमिति। षष्ठीतत्पुरुषः समाहारद्विगौ तु द्विगुश्चेति सिद्धमेव नपुंसकत्वम्। उत्पथमिति। कुगतिप्रादय इति तत्पुरुषः अव्ययादित्वादपथशब्दस्य नपुंसकत्वे सिद्धे किंसूत्रेणेति चेत् पूर्वकालत्वात् सूत्रस्य नायं दोषः। द्विगुश्च समास इति। स नपुंसकमित्यस्यानन्तरं प्रक्रान्तो द्वन्द्व एव स इत्यनेन परामृश्यते इति द्विगोरप्राप्तं नपुंसकत्वमिति वचनम्। यथा सामन्त्रितमित्यत्र संबोधनप्रथमैव परामृश्यते। समाहारद्विगोश्चेह ग्रहणं न तु तद्धितार्थद्विगोः। पञ्चगवमिति। यदा पञ्च गावः समाहृता इत्यत्रार्थे द्विगुस्तदोत्तरपदार्थस्य प्राधान्यात्तदीयं लिङ्गं प्राप्नोति। यदा तु समूहोभिधेयस्तदा तस्य वनं सेना सङ्घ इत्यादिवदनियतलिङ्गत्वं प्राप्तमिति वचनम्। पञ्चखट्वीति। टाप उपसर्जनह्रस्वत्वे कृते द्विगोरिति ङीप्। यदा तु समूहोभिधेयस्तदोपसर्जनह्रस्वत्वं सिध्यति न तु समाह्रियमाणेभिप्रेये इति तत्रैव सूत्रे उक्तम्। पञ्चखट्वमित्यत्र त्वसत्युपसर्जनत्वे नपुंसकह्रस्वत्वं सिध्यति। उपसर्जनत्वे तु परत्वात्तदाश्रयं ह्रस्वत्वम्। अनो नलोपश्चेति। चशब्देन वा स्त्रियां भाष्यते इति समुच्चीयते नलोपस्तु

वक्तव्यः। पञ्चपात्रं द्विपात्रम्॥

**अर्धर्चाः पुंसि च** ॥ ३१ ॥ अर्धर्चादय इति वक्तव्यम्। अर्धर्चः अर्धर्चम्। कार्षापणं कार्षापणः गोमयं गोमयः सरकं सरकः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। बहुवचननिर्देशात्सिद्धम्। बहुवचननिर्देशादाद्यर्थो गम्यते॥

**इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ** ॥ ३२ ॥ अन्वादेशे समानाधिकरणग्रहणम् ॥ *। अन्वादेशे समानाधिकरणग्रहणं कर्तव्यम्। किं प्रयोजनम्। देवदत्तं भोजय इमं चेत्यप्रसङ्गार्थम् *। इह मा भूत्। देवदत्तं भोजय इमं च यज्ञदत्तं भोजयेति। अन्वादेशश्च कथितानुकथितमात्रम् *। अन्वादेशश्च कथितानुकथितमात्रं द्रष्टव्यम्। तद् द्वेष्यं विजानीयादिदमाकथितमिदमेव यदानुकथ्यतइति। तदाचार्यः सुहृद् भूत्वान्वाचष्टे अन्वादेशश्च कथितानुकथितमात्रमिति। अथ किमर्थमशादेशः क्रियते। न तृतीयादिष्वित्येवोच्येत। तत्र द्वितीयायां टायामोसि च एनेन भवितव्यमन्याः सर्वा हलादयो विभक्तयः। तत्र इद्रूपलोपे कृते केवलमिदमोनुदात्तत्वं वक्तव्यम्। अत उत्तरं पठति। अशादेशवचनं साकच्कार्थम् *। अशादेशवचनं साकच्कार्थं क्रियते साकच्कस्यायमादेशे यथा स्यात्। इमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमिति। अथ किमर्थं शित्करणम्। शित्करणं सर्वादेशार्थम्, *। शित्करणं क्रियते सर्वादेशार्थं, शित्सर्वस्येति सर्वादेशो यथा स्यात्। इमकाभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमिति। अक्रियमाणे हि शित्करणेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत। न वान्त्यविकारवचनानर्थक्यात् *। न वा वक्तव्यम्। किं कारणम्। अन्त्यस्य विकारवचनानर्थक्यात्। अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारं सर्वादेशो भविष्यति। अर्थवत्त्वादेशप्रतिषेधार्थम् *। अर्थवत्त्वकारस्याकारवचनम्। कोर्थः। आदेशप्रतिषेधार्थम्। ये ऽन्ये अकार-

---

नित्यमेव क्रियते। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात्परत्वाभावाल्लोपो न प्राप्नोतीति वचनम्। पात्रादिभ्य इति तादर्थ्ये चतुर्थीयम्। आकृतिगणश्च पात्रादिः॥३०॥

अर्धर्चा॥ कार्षापणादिसंग्रहायाह अर्धर्चादय इति वक्तव्यमिति। बहुवचननिर्देशात्सिद्धमिति। साहचर्यादर्धर्चशब्देनान्येषामभिधानात् ३१॥

इदमो॥ पश्चात्कथनमात्रमन्वादेशः प्रसिद्ध इति व्यधिकरणप्रसङ्गनिवारणायाह अन्वादेशे इति। इमं चेति। एनादेशः प्राप्तो निवार्यते। अन्वादेशश्चेति प्रत्यासत्त्येदमेव कथितं यदा नु कथ्यते तेनैव तदान्वादेशो भवतीति भ्रान्तिनिवारणाय वार्तिकम्। तत्र समानाधिकरणग्रहणाच्छब्दान्तरेणेदमा वा कथितम्। यदा तु कथ्यते तदान्वादेशो भवति। द्वेष्यमिति। विपरीतत्वादनभिमतमेवेत्यर्थः। साकच्कार्थमिति। साकच्कस्येद्रूपलोपो नास्त्यक इत्यधिकारात्। नापि चेद्रूपलोपेनाभ्यामित्यादि सिध्य-

स्यादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा । मो राजि समः क्वाविति मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वा अनुस्वारादयो बाध्यन्ते । तस्माच्छित्करणम् * । तस्माच्छकारः कर्तव्यः । न कर्तव्यः । प्रश्लिष्टनिर्देशोयम् । अ अ इति । अनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति । अथ वा विचित्रास्तद्धितवृत्तयः । नान्वादेशेकजुत्पद्यते ॥

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३३ ॥ किमर्थं त्रतसोरनुदात्तत्वमुच्यते । उदात्तौ मा भूतामिति । नैतदस्ति प्रयोजनम् । लित्स्वरे निघाते एतदनुदात्तत्वेन सिद्धम् । इदमिह संप्रधार्यमनुदात्तत्वं क्रियतां लित्स्वर इति । किमत्र कर्तव्यम् । परत्वाल्लित्स्वरः । नित्यमनुदात्तत्वम् । कृतेपि लित्स्वरे प्राप्नोत्यकृतेपि । तत्र नित्यत्वादनुदात्तत्वे कृते लिति पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरः प्रसज्येत । तद्यथा । गोष्पदप्रं वृष्टो देवः । ऊलोपे कृते पूर्वं उदात्तभावी नास्तीति कृत्वा यथाप्राप्तः प्रत्ययस्वरो भवति । तस्मात्त्रतसोरनुदात्तत्वं वक्तव्यम् ॥

द्वितीयाटौस्स्वेनः ॥ ३४ ॥ कस्यायमेनो विधीयते । एतदः प्राप्नोति । इदमोपि त्विष्यते । तदिदमो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । इदमोऽन्वादेशेशनुदात्तस्तृतीयादाविति । यदि तनुदवर्तते । एतदस्त्रत-

---

ति । अन्त्यस्येति । त्यदादित्वादकारस्येत्यर्थः । अ अ इति । समु यान्विभक्तिरर्थवत्त्वाद्भवति । ततो ऽकारस्यापदान्तत्वादतो गुणइति पररूपं क्रियते । तत्रादेशप्रवृत्तिकाले समुदायः अ अ इति प्रवर्तते । तत्रानेकाल्त्वात्सर्वादेशे प्रवृत्ते पररूपं प्रवर्तते । अथ वेति । आदेशस्यैव प्रत्याख्यानं क्रियते अनुदात्तत्वमात्रमेव विधेयमित्यर्थः । नान्वादेश इति । महाविभाषाधिकाराद्व्यवस्थितविभाषाविज्ञानात् । किञ्चाकचि कृतेनेत्यादेशे कृते ऽज्ञाताद्यर्थगतिः प्रकरणाद्यधीता तद्वरमनुत्पत्तिरेवाकचोस्तु । एवं ह्यादेशो न विधातव्यो भवति ॥ ३२ ॥

एतद ॥ अत्रात इत्यत्र ञ्लतसिलोः कृतयोः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यशनुदात्तः करिष्यते तदेतदस्त्रतसोरित्येतावत् सूत्रं कर्तव्यमिति प्रश्नः । किमर्थमिति । उदात्ताविति । प्रत्ययस्वरेण । नित्यमिति । लित्स्वरस्त्वनुदात्तत्वे कृते न प्रवर्तते । अनुदात्तविधानसामर्थ्यात् । एतच्चोत्सर्गापवादभावमनपेक्ष्योक्तम् । लिति पूर्व इति । औपश्लेषिकाधिकरणविवक्षायां सप्तमी । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति दिग्योगलक्षणपञ्चम्यभावः प्रत्ययस्वरः । प्रसज्येतेति । अपवादाप्रवृत्तावुत्सर्गस्यावश्यं प्रवर्तनात् गोष्पदप्रमिति । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्यामित्यूलोपणमुलौ सह विधीयेते ततो लित्स्वराभावात् प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति ॥ ३३ ॥

द्वितीया ॥ उभयोरादेशस्येष्टत्वादेतद एवानन्तर्यात्तत्प्रसङ्गात् पृच्छति कस्येति । न कर्तव्यमित्युत्तरम् । इदमोपीति । इदंशब्दाच्च त्रलोहप्रत्ययेन बाधितस्यादेशविधा-

सोस्त्रतसौ चानुदात्ताविदमश्चेतीदमोपि प्राप्नोति। नैष दोषः। संबन्धमनुवर्तिष्यते इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ। इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावश् भवति। ततः द्वितीयाटौस्स्वेनः। इदमः एतदश्च। तृतीयादाविति निवृत्तम्। अथ वा मण्डूकगतयो ऽधिकाराः तद् यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः। अथ वा एकयोगः करिष्यते। इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावेतदस्त्रतसोस्त्रतसौ चानुदात्तौ। ततः द्वितीयाटौस्स्वेनः इदम एतदश्च। तृतीयादाविति निवृत्तम्। अथ वोभयं निवृत्तं तदपेक्षिष्यामहे। एनदिति नपुंसकैकवचने *। एनदिति नपुंसकैकवचने वक्तव्यम्। इदं कुण्डमानय प्रक्षालयैनत् परिवर्तयैनत्। यद्येनत्क्रियते एनो न वक्तव्यः। का रूपसिद्धिः। अथोएनम् अथो एने अथो एनानीति। त्यदाद्यत्वेन सिद्धम्। यद्येवमेनश्रितको न सिध्यति। एनच्छ्रितक इति प्राप्नोति। यथालक्षणमप्रयुक्ते। द्वितीयाटौ॥ अप्रयुक्ते शब्दे यथालक्षणं प्रयोगः कर्तव्यः

आर्धधातुके॥ ३५॥ जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन् विधानम्*। जग्ध्यादिष्वार्धधातुकाश्रयत्वात्सति तस्मिन्नार्धधातुके जग्ध्यादिभिर्भवितव्यम्। किमतो यत्सति भवितव्यम्। तत्रोत्सर्गलक्षणप्रतिषेधः *। तत्रोत्सर्गलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। भव्यं प्रवेयम् आख्येयम्। ण्यत्यवस्थिते ऽनिष्टे प्रत्यय आदेशः स्यात्। ण्यतः श्रवणं प्रसज्येत। नैष दोषः। सामान्याश्रयत्वाद्विशेषस्यानाश्रयः *। सामान्ये ह्याश्रीयमाणे विशेषोनाश्रितो भवति तत्रार्धधातुकसामान्ये जग्ध्यादिषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति। सामान्या- जातिपक्ष आर्धधातुके...

नमेव सत्तानुमानं स्यात्। मण्डूकगतय इति। इह केवलस्यादेशस्योपादानादवश्याक्षेप्यः स्थानी न तु पूर्वत्र। साक्षात् स्थानिनोनिर्देशादिति भावः। अथवैकयोग इति। एकं ग्रहणकवाक्यमित्यर्थः। तदपेक्षिष्यामहइति। लौकिकोधिकारो ऽपेक्षालक्षण आश्रीयते न तु शास्त्रीयः। अपेक्षा च लक्ष्यवशात्समुदायविषयैवेति भाव.। एनदिति। यद्येनादेशः क्रियते तदातोमित्यमभावे सत्येनमिति प्राप्नोति एनदिति चेष्यते इति वार्तिकारम्भः। एनच्छ्रितक इति प्राप्नोतीति अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधतइति त्यदाद्यत्वमकृत्वा लुक् क्रियते। लुकि च कृते प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाभाव इति भावः। यथालक्षणमिति। यस्य प्रयोगो नोपलभ्यते तल्लक्षणानुसारेण संस्कर्तव्यम्। तत्र यदा न लुमताङ्गस्येत्यत्राङ्गाधिकारो निर्दिश्यते तदा प्रत्ययलक्षणेनैनच्छ्रितक इति भाव्यम्। अथानाङ्गाधिकारविहितमपि अङ्गकार्यं निषिध्यते तदादेशाभावादेतच्छ्रितक इति भाव्यमित्याहु॥ ३४॥

आर्ध॥ जग्ध्यादिष्विति। व्यक्तौ पदार्थे परसप्तम्यां सत्यां परस्मिन् व्यवस्थिते आर्धधातुके आदेशेन भाव्यम्। तत्र विशिष्टार्धधातुकाश्रयेषु जग्ध्यादिषु यद्यपि दोषाभावस्तथापि भूवीख्याञ्सु दोषः। तत्रेति। उत्सर्गशब्देन स्थानी विवक्षित आदेशनापवादेन बाध्यमानत्वात्। सामान्याश्रयत्वादिति। आकृतिपदार्थाश्रयेणोत्तरम्।

श्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्गः * । सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यत्प्राप्नोति। लव्यं पव्यमिति। आर्धधातुकसामान्ये गुणे कृतेऽपि प्रत्ययसामान्ये च वान्तादेशे कृते हलन्तादिति ण्यत्प्राप्नोति । इह च दित्स्यं धित्स्य, आर्धधातुकसामान्ये अकारलोपे कृते हलन्तादिति ण्यत्प्राप्नोति । पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः * । पौर्वापर्याभावाच्च सामान्येन जग्ध्यादीनामनुपपत्तिः न हि सामान्येन पौर्वापर्यमस्ति । सिद्धं तु सार्वधातुके प्रतिषेधात् * । सिद्धमेतत् । कथम् । अविशेषेण जग्ध्यादीनुक्त्वा सार्वधातुके नेति प्रतिषेधं वक्ष्यामि । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं जग्ध्यादिष्वार्धधातुकाश्रयत्वात्साति तस्मिन् विधानमिति । परिहृतमेतत् । सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति ननु चोक्तं सामान्याश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्ग इति। नैष दोषः। वक्ष्यति तत्राज्ग्रहणस्य प्रयोजनमजन्तभूतपूर्वमात्रादपि यथा स्यादिति । यदप्युच्यते । पौर्वापर्याभावाच्च सामान्येनानुपपत्तिरिति । अर्थसिद्धिरेवैषा यत्सामान्येन पौर्वापर्यं नास्तीति। असति पौर्वापर्ये विषयसप्तमी विज्ञास्यते आर्धधातुके विषय इति । तत्रार्धधातुके विषये जग्ध्यादिषु यो यतः प्राप्नोति स ततो भविष्यति। अथ वा आर्धधातुकास्विति वक्ष्यामि । कासु। आर्धधातुकासु। उक्तिषु युक्तिषु रूढिषु प्रतीतिषु श्रुतिषु संज्ञासु । आर्धधातुके ॥

---

जातिपक्षस्य दोषवत्तां प्रतिपादयितुमाह उवर्णाकारान्तेभ्य इति । इदानीमाकृतिपक्षाश्रयस्यासंभवमाह पौर्वापर्याभावाच्चेति । सामान्यस्य व्यापकत्वान्नित्यत्वाच्च देशकालकृतं पौर्वापर्यं नास्ति सप्तम्या चेह परत्वं प्रतिपादितम् । तस्माद्व्यक्तिपक्षः परत्वोपपत्तयआश्रयणीयः । तत्र च भव्याद्यसिद्धिः । वक्ष्यति, तत्रेति । हलन्ताद् ण्यतो विधानादज्ग्रहणमन्तरेणाप्यजन्तादेव यति सिद्धेऽज्ग्रहणं भूतपूर्वस्याप्यजन्तस्य परिग्रहार्थमित्यर्थः । अर्थसिद्धिरिति । एषैव प्रयोजनसंपत्तिरित्यर्थः । विषये इति । बुद्धिस्थइत्यर्थः । अभिव्यङ्क्ष्यते तत्रार्धधातुकत्वमित्येवं बुद्ध्या निरूपित इति भावः । अथ वेति । व्यक्तिपक्षाश्रयणेऽपि न दोष इत्युक्तं भवति । नित्यानां भव्यादीनां शब्दानामनेन साधुत्वमात्रं प्रतिपाद्यते तत्रार्धधातुकं विद्यते यासु ता भव्यादय आर्धधातुकावयवाः शब्दसंहतय आर्धधातुकशब्देनार्श आदित्वादच्प्रत्ययान्तेनोच्यन्ते । उक्तिष्विति। उच्यन्ते उच्चार्यन्तइत्युक्तयस्ता एव शब्दसंहतयः । अन्ये तु उच समवायइत्यस्य क्तिन्युक्तिशब्दः संहतिपर्यायँ इत्याहुः । समवायो हि संहतिः । युक्तिष्विति । अर्थेन संबद्धास्वित्यर्थः । रूढिष्विति । परमार्थतो नित्यास्वित्यर्थः । प्रतीतिष्विति । अनेन नित्यत्वेपि व्यवहारानित्यत्वं प्रतिपाद्यते । तदेव दर्शयति श्रुतिष्विति । एवंभूतानामेव व्यवहारे श्रूयमाणत्वादित्यर्थः । संज्ञास्विति । बालव्युत्पत्तये प्रकृत्यादिविभागेन संज्ञायमानास्वित्यर्थः । ततश्च यस्य च भावेनेति सप्तमी । आर्धधातुकासु संहतिषु व्युत्पाद्यमानासु अस्त्यादीनां भ्वादय आदेशा इत्युक्तं भवति ॥ ३५ ॥

अदो जग्धिर्ल्यप्ति किति ॥३६॥ ल्यब्ग्रहणं किमर्थम् । न ति कितीत्येव सिद्धम् । ल्यपि कृते न प्राप्नोति । इदमिह संप्रधार्य ल्यप् क्रियतामादेश इति किमत्र कर्तव्यम् । परत्वाल्ल्यप् । अन्तरङ्ग आदेशः । एवं तर्हि सिद्धे सति यल्ल्यब्ग्रहणं करोति तज् ज्ञापयत्याचार्यः । अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधतइति । किमेतस्य ज्ञापने प्रयोजनम् । ल्यबादेशउपदेशिवद्वचनमनादिष्टार्थं बहिरङ्गलक्षणत्वादिति वक्ष्यति तन्न वक्तव्यं भवति । जग्धिविधिर्ल्यपि तच्चदकस्मात्सिद्धमदस्ति कितीति विधानात् । हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृते तद्धु विद्धि ॥ १ ॥ एष एवार्थः । जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनमिति ॥

लुङ्सनोर्घसॢ ॥ ३७ ॥ घस्लृभावे ऽच्युपसंख्यानम् * । घस्लृभावेऽच्युपसंख्यानं कर्तव्यम् । प्रात्तीति प्रघसः ॥

हनो वध लिङि ॥ ४२ ॥ लुङि च ॥ ४३ ॥ किमयमदन्त आहो स्विद्व्यञ्जनान्तः । किं चातः यदि व्यञ्जनान्तः । वधौ व्यञ्जनान्त उक्तम् * । किमुक्तम् । वध्यादेशे वृद्धितत्त्वप्रतिषेध इड्विधिश्चेति । अथादन्तः । न दोषो भवति यथा न दोषस्तथास्तु । हनो ॥

इणो गा लुङि ॥ ४५ ॥ इण्वदिकः * । इण्वदिक इति वक्तव्यम् । इहापि यथा स्यात् । अध्यगात् । अध्यगाताम् । अध्यगुः ॥

णौ गमिरबोधने ॥ ४६ ॥ इण्वदिक इत्येव । अधिगमयति । अधिगमयतः । अधिगमयन्ति ॥

---

अदो जग्धि ॥ अन्तरङ्ग आदेश इति । लकारादिप्रत्ययमात्रापेक्षत्वात् । ल्यबादेशस्तु पूर्वपदापेक्षसमासाश्रयत्वाद् बहिरङ्गः । अनादिष्टार्थमिति । प्रधाय प्रस्थायेत्यादौ हित्वादिष्वकृतेष्वेव ल्यब् यथा स्यादित्यर्थः । कथं न प्राप्नोतीत्याह बहिरङ्गलक्षणत्वादिति । अयमेवार्थो व्याघ्रभूतिनाप्युक्त इत्याह जग्धिविधिरिति । अकस्मादिति । निष्प्रयोजनमित्यर्थः । सिद्धमद इति । जग्धिविधानं सिद्धमित्यर्थः । ज्ञापनार्थं ल्यपि जग्धिविधानमित्याह हिप्रभृतीनिति । ल्यब्भरतीति । ल्यबादेशो हरत्यपनयति बाधतइत्यर्थः । तद्धु इति । उशब्दो निपातो ऽवधारणार्थः । तद्विद्ध्येवेत्यर्थः ॥ ३६ ॥

हनो वध ॥ किमयमिति । किं कार्यार्थो ऽकारो ऽथोच्चारणार्थ इति प्रश्नः । वृद्धितत्त्वप्रतिषेध इति । अवर्धादित्यत्रातो हलादेर्लघोरिति हलन्तलक्षणा वृद्धिः प्राप्नोति वधक इति ण्वुलि वधादेश औपसंख्यानिके कृते अत उपधाया इति वृद्धिः प्राप्नोति । इड्विधिश्चेति । सा जनिवध्योश्चेति प्रतिषिध्यते । स्थानिवद्भावात्तु तत्वं प्राप्तम् । इड्विधिश्चेति । अवधीदित्यादावेकाच्त्वादिट्प्रतिषेधः प्राप्नोतीतीड् विधेयः । अदन्तत्वे त्वल्लोपस्य स्थानिवत्त्वाद् वृद्धिनत्त्वादेरभावः । तत्वं त्वलोन्त्यस्य क्रियते । तत्राकारो लुप्तत्वात् स्थानिवत्त्वाद् वृद्धिनत्त्वादेरभावः । उपदेशेन भवति धकारोपि अल्लोपस्य स्थानिवत्त्वादन्त्यो न भवतीति तत्वाभावः । उपदेशेनेकाच्त्वाच्च प्रतिषेधाभावादिट्सिद्धिः ॥४२॥

**सनि च** ॥ ४७ ॥ इण्वदिक इत्येव । अधिजिगामिषति अधिजिगमिषतः अधिजिगमिषन्ति । सनि च ॥

**गाङ् लिटि** ॥ ४८ ॥ ङित्करणं किमर्थम् । गाङ्यनुबन्धकरणं विशेषणार्थम् * । गाङ्यनुबन्धकरणं क्रियते । विशेषणार्थम् । क्व विशेषणार्थेनार्थः । गाङ्कुटादिभ्यो ञ्णिन्ङिदिति । गाकुटादिभ्य इति ह्युच्यमाने इणादेशस्यापि प्रसज्येत । ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य * । अथ वैतज्ज्ञापयत्याचार्यः सानुबन्धकस्यादेशइत्कार्यं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । प्रयोजनं चक्षिङः ख्याञ् * । ङित इत्यात्मनेपदं न भवति । लटः शतृशानचौ प्रयोजनम् । पचमानो यजमान इति टित इत्येत्त्वं न भवति । युवोरनाकौ * । युवोरनाकौ च प्रयोजनम् । नन्दनः कारकः नन्दना कारिकेति । उगिल्लक्षणौ ङीम्नुमौ न भवतः । मेश्चाननुबन्धकस्याम्वचनम् * । मेश्चाननुबन्धकस्याम्वक्तव्यः । अचिनवम् । असुनवम् । अकरवम् । अत्यल्पमिदमुच्यते मेरिति । तिप्सिम्मिपामिति वक्तव्यम् । इहापि यथा स्यात् । वेद वेत्थ । अस्य ज्ञापकस्य सन्ति दोषाः सन्ति प्रयोजनानि । दोषाः समाः भूयांसो वा । तस्मान्नार्थो ज्ञापकेन । कथं यानि प्रयोजनानि । नैतानि सन्ति । इह तावच्चाक्षिङः ख्याञिति ञित्करणसामर्थ्याद्विभाषात्मनेपदं भविष्यति । लटः शतृशानचाविति । वक्ष्यत्येतत् । प्रकृतानामा-

---

गाङ् लिटि ॥ स्थानिवद्भावादेवसिद्धमात्मनेपदं मत्वाह ङित्करणमिति । इणादेशस्यापीति । ततश्चागासातां जगौ देवदत्तेनेत्यादौ ङित्वादीत्वप्रसङ्गः । गाङ्कुटादिभ्य इति तूच्यमानेस्यैव ग्रहणं भवति न तु गाङ् गताविन्यस्य । एतदुङकारस्यात्मनेपदविधौ चरितार्थत्वादादेशेनानन्यार्थङकारेण तुल्यताभावात् । ज्ञापकं वेति । सानुबन्धा यत्र षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्तते । कृतायां वेत्संज्ञायां तन्निबन्धनानि कार्याणि न प्रवर्तन्तइति ज्ञापनार्थं ङकारोच्चारणमित्यर्थः । शतृशानचाविति । सूत्रे सहनिर्दिष्टत्वादत्रापि सहोपादानम् । शानजेव त्वात्मनेपदत्वात्प्रयोजनम् । युवोरनाकाविति । भुज्युशंयूर्णायुप्रभृतिष्वादेशनिवारणायानुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ । तत्रादेशप्रवृत्तावेतस्माज्ज्ञापकादुगित्कार्यप्रवृत्तिरिति ङीम्नुमोरभावः । ज्ञापकस्यातिव्याप्तिं दृष्ट्वाह मेश्चेति । तस्थस्थमिपामित्यत्र मिब्ग्रहणमपनीय मिग्रहणं कर्तव्यमित्यर्थः । तेन सानुबन्धः स्थानी न भवतीति पित्कार्यं प्रवर्तते । अचिनवमिति । पित्वात् ङित्वाभावाद् गुणो भवति । मा हि स्म चिनवमिति चानुदात्तत्वम् । वार्तिककारस्याव्याप्तिमुद्भावयन्नाह अत्यल्पमिति । णलादिविधौ तु तिप्सिपोः सानुबन्धकयोरनुपादानान्नास्ति दोष इति चिन्त्यमेतत् । भूयांसो वेति । दोषबहुत्वारोपेण निन्दामाह तस्मादिति । विशेषणार्थं तु ङित्करणं स्थितम् । विभाषात्मनेपदमिति । कर्त्रभिप्राये क्रियाफले आत्मनेपदं नान्यत्रेत्यर्थः । प्रकृतानामिति । तिप्तस्झीत्यत्र यान्यात्मनेपदान्युपात्तानि तेषामित्यर्थः । सिद्धं त्विति । अनुनासिकयोरेवादेशो ना-

त्मनेपदानां टेरेत्वं भवतीति । युवोरनाकाविति । वक्ष्यत्येतत् । सिद्धं तु युवोरनुनासिकत्वादिति । गाङ् ॥

चक्षिङः ख्याञ् ॥ ५४ ॥ किमयं क्शादिराहो स्वित्ख्यादिः । चक्षिङः क्शाञ्ख्याञौ * । चक्षिङः क्शाञ् ख्याञ् इति क्शादिः ख्यादिश्च । ख्शादिर्वा * । अथ वा ख्शादिर्भविष्यति । केनेदानीं क्शादिर्भवति । चर्त्वेन । अथ । ख्यादिः कथम् । असिद्धे शस्य यवचनं विभाषा * । असिद्धे शस्य विभाषा यत्वं वक्तव्यम् । किं प्रयोजनम् । प्रयोजनं सौप्रख्ये वुञ्विधिः * । सौप्रख्य इति योपधलक्षणो वुञ्विधिर्न भवति । सौप्रख्यीयइति वृद्धाच्छ इति छो भवति । निष्ठानत्वमाख्यात आख्यात इति निष्ठानत्वं न भवति । रुविधिः पुंख्याने । पुंख्यानमिति रुविधिर्न भवति । णत्वं पर्याख्याने । पर्याख्यानमिति णत्वं न भवति । सस्थानत्वं नमः ख्यात्रे । नमःख्यात्रइति सस्थानत्वं न भवति । वर्जने प्रतिषेधः । वर्जने प्रतिषेधो वक्तव्यः । अवसंचक्ष्याः । परिसंचक्ष्याः । असनयोश्च । असनयोश्च प्रतिषेधो वक्तव्यः । नृचक्षा रक्षः विचक्षण इति । बहुलं तणि । बहुलं तणीति वक्तव्यम् । किमिदं तणीति । संज्ञाछन्दसोर्ग्रहणम् । किं प्रयोजनम् । अन्नवधकगात्रविचक्षणाजिराद्यर्थम् । अन्ना अन्नम् । वधक । वधकम् । गात्र । गात्रं पश्य । विचक्षण । विचक्षणः । अजिर । अजिरे तिष्ठति । चक्षि ॥

---

न्ययोरित्यर्थः । ततश्च स्थानिनोरेवोगित्त्वं नास्तीति कुतस्तदादेशयोरुगित्कार्यप्रसङ्गः ॥ ४६ ॥

चक्षिङः ॥ लक्ष्ये रूपद्वयदर्शनादेकतराश्रयणे इतरासिद्धिप्रसङ्गात् पृच्छति किमयमिति । असिद्ध इति । पूर्वत्रासिद्धमित्यधिकारे णत्वविधानानन्तरं शस्यैं यत्वं विभाषा वक्तव्यम् । तत्र यत्वस्य पूर्वत्रासिद्धत्वात्तन्निमित्तं कार्यं न प्रवर्तते शकारनिमित्तं च प्रवर्तते । चर्त्वे तु कर्तव्ये यत्वं सिद्धमिति खस्य चर्त्वाभावादाख्यातेत्यादि सिध्यति । सौप्रख्ये वुञ्विधिरिति । अकारप्रश्लेषात्सौप्रख्यशब्दे वुञ्विधिर्न भवतीत्यर्थः । सुप्रचष्ट इति सुप्रख्यः । आतश्चोपसर्गइति कः । यत्वस्यासिद्धत्वात् सुप्रख्यस्य भाव इति योपधलक्षणवुञभावात् ष्यञ् भवतीति । तथा सुप्रख्येन निर्वृत्तो देशस्सौप्रख्यस्तत्र भवः सौप्रख्यीय इति धन्वयोपधाद् वुञिति वुञभावे वृद्धाच्छो भवति । निष्ठानत्वमिति । न ध्याख्येति तु प्रतिषेधः ख्याप्रकथनइत्यस्यैव प्रतिपदोक्तत्वात् । अस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यते । पुंख्यानमिति । पुमः खय्यम्परइति रुत्वं न भवति यत्वस्यासिद्धत्वादम्परत्वाभावात् । णत्वमिति । ख्याप्रकथनइत्यस्मादपि परस्य लुब्योगाप्रख्यानादिति निपातनाण्णत्वाभावः । सस्थानत्वमिति । जिह्वामूलीयस्येयं पूर्वाचार्यसंज्ञा । शर्परे विसर्जनीय इत्येवात्र भवति । नृचक्षारक्ष इति प्रयोगश्छान्दसः । भाषायां तु नृचक्षो रक्ष इति । विचक्षण इति । अनुदात्तेतश्च हलादेरिति युच् । बहुलमिति । सर्वप्रकरणापेक्षमेतदुच्यते । अन्नशब्दे जग्ध्यभावः । वधकमिति । ण्वुलि घधादेशः । गात्रमिति । इण औणादिके ष्ट्रनि गादेशः । विचक्षणे ख्याञभावः । अजिरे वीभावाभावः । अजिरशिशिरेति निपातनमनपेक्ष्यैतदुक्तम् ॥ ५४ ॥

अजेर्व्यघञपोः ॥ ५६ ॥ घञपोः प्रतिषेधे क्यप उपसंख्यानम् * । घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्तव्यम् । इहापि यथा स्यात् । समजनं समज्येति । तर्हि वक्तव्यम् । न वक्तव्यम् । अपीत्येव भविष्यति । कथम् । अपीति नेदं प्रत्ययग्रहणम् । किं तर्हि । प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः । अपो ऽकारात्प्रभृत्या क्यपः पकारात् । यदि प्रत्याहारग्रहणम् । संवीतिर्न सिध्यति । एवं तर्हि नार्थ उपसंख्यानेन नापि घञपोः प्रतिषेधेन । इदमस्ति चक्षिङः ख्याञ् वा लिटीति । ततो वक्ष्यामि अजेर्वीभावो भवति वा । व्यवस्थितविभाषेति । तेनेह च भविष्यति । प्रवेता प्रवेतुं प्रवीता रथः संवीतिः । इह च न भविष्यति । समाजः समजः । उदाजः उदजः । समजनम् उदजनं समज्येति । तत्रायमप्यर्थः इदमपि सिद्धं भवति प्राजितेति । किं च भोः इष्यतएतद्रूपम् । बाढमिष्यते । एवं हि कश्चिद्वैयाकरण आह । कोस्य रथस्य प्रवेतेति । सूत आह । अहमायुष्मन्नस्य रथस्य प्राजितेति । वैयाकरण आह । अपशब्द इति । सूत आह प्राप्तिज्ञो देवानांप्रियः न त्विष्टिज्ञः । इष्यतएतद्रूपमिति । वैयाकरण आह । अहो खल्वनेन दुरुतेन बाध्यामहइति । सूत आह । न खलु वेञः सूतः सुवतेरेव सूतः यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् । न तर्हीदानीमिदं वक्तव्यं वाय्वाविति । वक्तव्यं च । किं प्रयोजनम् । नेयं विभाषा किं तर्ह्यादेशो विधीयते। घा इत्ययमादेशो भवत्यजेर्यौ परतः वायुरिति । अजेर्व्यं ॥

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥ अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानम् * । अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानं कर्तव्यम् । बौधिः पिता बौधिः पुत्त्रः औदुम्बरिः पिता औदुम्बरिः पुत्त्रः । अपर आह । अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यमिति । जाबालिः

---

अजेर्वी ॥ इदमपीति । वलादावार्धधातुके विकल्पः सिध्यतीति भावः । सूत आहेति । प्रयोगदर्शनेन विकल्पं द्रढयति प्राप्तिज्ञ इति । सौत्रामेव प्राप्तिं भवान् जानाति न त्वाचार्याणामिष्टिमित्यर्थः । देवानांप्रिय इति । देवशब्दो मूर्खवाची मूर्खाणाञ्च प्रिया मूर्खा एव भवन्ति । अथ वा सुखासक्ततया शास्त्रे ऽनभियोगो ऽनेन प्रतिपाद्यते । पराजितत्वादमर्षेणाह अहो नु खल्विति । वेञ उत्त इति यद्रूपं सास्य संज्ञा । पूजायां च सुशब्द इति मत्वा कुत्साप्रतिपादनायाह दुरुतेनेति । सूत आहेति । षूप्रेरणइ यस्माद् बहुलवचनात्कर्तरि गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्त. । रथवाहस्य रथप्रेरणात् सूत इति संज्ञा । वायुरिति । यजिमनीति बाहुलकाद्युचि रूपम् ॥ ५६ ॥

ण्यक्षत्रिया ॥ तद्राजादीति । ते तद्राजा इति तद्राजसंज्ञकप्रत्ययान्तात्परस्येत्यर्थः । बौधिरिति । बुधोदुम्बरशब्दाभ्यां साल्वावयवलक्षणइञ् तदन्ताद्यूनि यञिञोश्चेति फक् तस्य लुक् । जाबालिरिति । जाबालस्यापत्यमत इञ् । स च तद्राजो न भवतीति

पिता जाबालिः पुत्त्रः । अपर आह । अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानं कर्तव्यमिति । किं प्रयोजनम् । इदमपि सिद्धं भवति । भाण्डिजङ्घिः पिता भाण्डिजङ्घिः पुत्त्रः । कार्णखरकिः पिता कार्णखरकिः पुत्त्रः । इति द्वितीयाध्यायस्य चतुर्थे पादे प्रथमाह्निकम् ॥

तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६२ ॥ तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधः * । तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधो वक्तव्यः । प्रिय आङ्ग एषां तइमे प्रियाङ्गाः । प्रियः वाङ्ग एषां तइमे प्रियवाङ्गा इति । किमुच्यते समासबहुत्वे प्रतिषेध इति । यदा तेनैव चेत्कृतबहुत्वमित्युच्यते न चात्र तेनैव कृतं बहुत्वम् । भवति वै किं चिदाचार्याः क्रियमाणमपि चोदयन्ति तद्वा कर्तव्यं तेनैव चेद्बहुत्वमिति समासबहुत्वे वा प्रतिषेध इति । अबहुत्वे लुग्वचनम् * । अबहुत्वे च लुग्वक्तव्यः । अतिक्रान्तः अङ्गानतङ्ग इति । बहुवचने परतो यस्तद्राज इत्येवं च कृत्वा चोद्यते । अथ किमर्थं पुनरिदं न बहुवचन इत्येव सिद्धम् । न सिध्यति । बहुवचन इत्युच्यते । न चात्र बहुवचनं पश्यामः । प्रत्ययलक्षणेन । न लुमता तस्मिन्निति प्रत्ययलक्षणस्य प्रतिषेधः । न लुमताङ्गस्येति वक्ष्यामि । नैवं शक्यम् ।

द्वितीयं वचनमारब्धम् । तेनेऽन्तात् फको लुक् । अब्राह्मणगोत्रमात्रादिति । तेन वैदगोत्रादपि सिध्यति । व्यापकत्वाच्चेदमेव वचनं प्रमाणम् । भाण्डजङ्घकार्णखरकौ वैश्यौ ॥५८॥ इत्युपाध्यायजैयटपुत्रकैयटकृते द्वितीयाध्यायस्य चतुर्थपादे प्रथममाह्निकम् ॥

तद्राज ॥ इह तेनैवग्रहणाद्बहुशब्देन बहुवचनमुच्यत इति लक्ष्यते । संज्ञानां चैकदेशपदप्रयोगो दृश्यते यथा भीमसेनो भीम इति । अर्थग्रहणे तु तेनैवेति न वक्तव्यं प्रियवाङ्गा इत्यत्र बहुत्वे तद्राजस्य वृत्त्यभावाल्लुकः प्रसङ्गाभावाद्बहुवचनं तु परमिति लुक्प्रसङ्गे तन्निवृत्त्यर्थं तेनैव ग्रहणं कर्तव्यम् । अस्त्रियामिति तु प्रातिपद्यो बहुवचनग्रहणेऽनुपपन्नः । आङ्ग्यः स्त्रिय इत्यादौ स्त्रीप्रत्ययेन बहुवचनस्य व्यवधानाल्लुकः प्रसङ्गाभावात् । अर्थग्रहणे तु लुक्प्रसक्तोऽस्त्रियामिति निषिध्यते तदेव पक्षद्वयस्यापि लिङ्गदर्शनात्तद्गुणदोषनिरूपणाय विचारः क्रियते तत्र पूर्वं प्रत्यक्षपक्षो विचार्यते । तद्राजादीनामिति । आदिशब्देन वक्ष्यमाणा लुग्भाजो गृह्यन्ते । समासबहुत्व इति । समासार्थबाहुल्य इत्यर्थः । न चात्रेति । अन्यपदार्थकृतत्वादत्र बहुत्वस्य । भवति वै किं चिदिति । एतावदेकं वाक्यम् । एवंविधं किं चिद्भवतीत्यर्थः । किं तदित्याह आचार्या इति । सूत्रे क्रियमाणमपि कुर्वन्तीत्यर्थः । बहुवचनपक्षे सर्वथा वचनेनैव दोषा निराकार्या इति प्रतिपादनमस्योपन्यासस्य फलम् । प्रत्ययपक्षे दोषोद्भावनेनार्थग्रहणं स्थापयति । अबहुत्व इति । समासार्थस्याबहुत्वाद् बहुवचनपरत्वाभावेऽपि लुग्वक्तव्यः । प्रत्ययश्चेद्बहुत्व उत्पन्न इत्यर्थः । न बहुवचन इत्येवेति । शसमेवाश्रित्यान्तरङ्गत्वात् पूर्वं तद्राजस्य लुकरिष्यत इति भावः । न चात्रेति । अन्तरङ्गानपि विधीन् सुपो धातुप्रातिपदिकयोरित्ययं लुक् प्रत्ययोत्तरपदयोश्चेति ज्ञापकादस्यैवात्र संभवाद्बाधत इति भावः । न लुमताङ्गस्येति वक्ष्यामीति । यथास्थितमेव न्यासमेवं व्याख्यास्यामि । लुमता लुप्तो यः प्रत्ययस्त-

इह हि दोषः स्यात् । पञ्चभिर्गार्गीभिः क्रीतः पटः पञ्चगार्ग्यो दशागार्ग्यः । द्वन्द्वे ऽबहुषु लुग्वचनम् * । द्वन्द्वे अबहुषु लुग्वक्तव्यः । गर्गवत्सवाजा इति । इह च लुग्वक्तव्यः । गर्गेभ्य आगतं गर्गरूप्यं गर्गमयमिति । इह चात्रय इति उदात्तनिवृत्तिस्वरः प्राप्नोति । सिद्धं तु प्रत्ययार्थबहुत्वे लुग्वचनात् * सिद्धमेतत् । कथम् । प्रत्ययार्थबहुत्वे लुग्वक्तव्यः । यदि प्रत्ययार्थबहुत्वे लुगुच्यते तेनाप्यस्त्रियामिति वक्तव्यम् । इह मा भूत् । आङ्गयः स्त्रियः वाङ्गयः स्त्रिय इति । यस्य पुनर्बहुवचने परतो लुगुच्यते तस्य इकारेण व्यवहितत्वान्न भविष्यति । यस्यापि बहुवचने परतो लुगुच्यते तेनाप्यस्त्रियामिति वक्तव्यम् । आम्बष्ठ्याः स्त्रियः सौवीर्याः स्त्रिय इत्येवमर्थम् । अत्रापि चापा व्यवधानम् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । द्वन्द्वे ऽबहुषु लुग्वचनम् * । द्वन्द्वे अबहुषु लुग्वक्तव्यः । गर्गवत्सवाजा इति । गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् * गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । बिदानामपत्यं माणवको बैदः । बैदौ । किमर्थमिदम् । नाचीत्येवालुक् सिद्धः । अचीत्युच्यते । न चात्रा-

---

स्मिन् यदङ्गं तस्य यत्कार्यमङ्गाधिकारविहितमन्यद्वा तन्न भवति । लुक् च प्रत्ययस्य कार्यं न समस्तस्याङ्गस्येति प्रत्ययलक्षणेन भविष्यति । पञ्चभिरिति । क्रीतार्थस्यार्हीयस्य ठकोऽध्यर्द्धपूर्वेति लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । तत्र प्रत्ययलक्षणेन भिसमाश्रित्यात्र पक्षे यञञोश्चेति लुक् प्राप्नोति । न हि यञ लुगङ्गस्य कार्यमिति पञ्चगर्ग इति स्यात् । पञ्चगार्ग्य इति चेष्यते इत्यर्थः । अस्त्रियामिति चात्र प्रतिषेधो न भवत्यर्थान्तरे पुंसि संक्रान्तत्वाद्वृत्तिपदार्थस्येत्याहुः । द्वन्द्वे बहुष्वित्यत्राकारप्रश्लेषः । गार्ग्यश्च वात्स्यश्च वाज्यश्चेति द्वन्द्वः । अत्रैकैकस्य बहुवचनपरत्वं नास्ति यच्च समासाद् बहुवचनमुत्पद्यते तदन्त्यादेव परं न सर्वेभ्यः । प्रत्ययनिर्देशपक्षे तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानाद्व्यवहितस्य लुकोऽप्रसङ्गः । गर्गरूप्यमिति । सुबन्तेन केवलं वाक्यं क्रियते प्रत्ययस्तु प्रातिपदिकाधिकारात्प्रातिपदिकादेवोत्पद्यत इति बहुवचनपरत्वाभावाल्लुङ्न प्राप्नोति । अत्रय इति । अत्रेरपत्यानि । इतश्चानिञ इति ढक् कित इत्यन्तोदात्तत्वम् । तत्र यदि जसि परतो लुक् क्रियते तदा अनुदात्तस्य च यत्रोदात्तलोप इति जस उदात्तत्वप्रसङ्गः । अर्थनिर्देशाश्रयेण परिहारमाह सिद्धं त्विति । लुग्वचनात् । लुग्व्याख्यानादित्यर्थः । आम्बष्ठ्या इति । आम्बष्ठस्यापत्यानि बह्व्यः स्त्रिय इति वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङ् । यङश्चाबिति चाप् । एकादेशः । स चान्तवद्भावान्न व्यवधायक इति लुक्प्रसङ्गे प्रत्ययपक्षवादिनाप्यस्त्रियामिति प्रतिषेधो वक्तव्य इत्यर्थः । एकादेश इति । अचः परस्मिन्निति स्थानिवद्भावः । तदेवमर्थनिर्देशपक्ष एवास्त्रियामिति वक्तव्यम् । द्वन्द्व इति । एकस्मिन्नेवार्थे प्रत्ययोत्पत्तौ सत्यां बहुत्वाभावात् । प्रत्ययपक्षे त्वन्त्यस्य तावत्सिध्यतीति मन्यते । अर्थपक्ष एव दोषमाह गोत्रस्येति । अपत्यप्रत्ययो लोपभाग्यदा बहुष्वर्थेषूत्पन्नो युवापत्यविवक्षायामर्थान्तरं द्वित्वविशिष्टं एकत्वविशिष्टं वा संक्रामति

जादिं पश्यामः । प्रत्ययलक्षणेन । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि * । एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः । वैदस्यापत्यं बहवो माणवका विदाः । बैदयोर्वा विदाः । अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति । मा भूदेवम् । अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्यपा इति । ततोयमाह यस्य प्रत्ययार्थबहुत्वे लुक् । द्वन्द्वेऽबहुषु लुग्वचनमित्यस्य परिहारः । न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात् * । न वा एष दोषः । किं कारणम् । सर्वेषां द्वन्द्वे बह्वर्थत्वात् सर्वाणि द्वन्द्वे बह्वर्थानि ॥ कथम् । युगपदधिकरणाविवक्षायां द्वन्द्वो भवति । ततोयमाह यस्य बहुवचने परतो लुक् । यदि सर्वाणि द्वन्द्वे बह्वर्थानि अहमपीदमचोद्यं चोद्ये । द्वन्द्वे बहुषु लुग्वचनमिति । ममापि ह्यत्र सर्वत्र बहुवचनं परं भवति । लुकि कृते न प्राप्नोति । प्रत्ययलक्षणेन भविष्यति परं भवति । लुकि कृते न प्राप्नोति प्रत्ययलक्षणस्य प्रतिषेधः । न लुमताङ्गस्येति वक्ष्यामि । ननु चोक्तं नैवं शक्यम् । इह हि दोषः स्यात् पञ्चभिर्गार्गीभिः क्रीतः पटः पञ्चगार्ग्यो दशगार्ग्य इति । इष्टमेवैतत्संगृहीतं पञ्चगर्गो दशगर्ग इत्येव भवितव्यम् । तथेदमपरमचोद्यं चोद्ये- गर्गरूप्यं गर्गमयम् । अत्रापि बहुवचन इत्येव सिद्धम् । कथम् । समर्थात्तद्धित उत्पद्यते सामर्थ्यं च सुबन्तेन । ततोयमाह यस्य प्रत्ययार्थबहुत्वे लुक् । यदि समर्था-

---

तदा बहुषु तस्योत्पन्नत्वाल्लुक्प्राप्तावलुग्वक्तव्यः । प्रत्ययपक्षे तु बहुवचनपरत्वाभावाल्लुङ्न भवति । द्व्येकयोरिति । द्व्येकशब्दौ द्वित्वैकत्ववृत्ती उपात्तौ । अन्यथा बहुवचनं स्यात् । बैद इति । बिदस्यापत्यानि बहूनि इत्यञ्प्रत्ययः । तदन्ताद्यून्यत इञितीञ् तस्य ण्यक्षत्रियार्षञित इति लुक् । नाचीत्येवेति । गोत्रे लुगचीत्यनेन । अञन्तमिति । प्रत्ययग्रहणपरिभाषया तदन्तत्वे स्थिते बहुष्विति विशेषणं तदन्तस्यैवेति मन्यते । काश्यपा इति । कश्यपस्यापत्यं गोत्रमिति बिदादित्वादञ् ततः काश्यप इव तत्प्रतिकृतय इत्यत्रार्थे इवे प्रतिकृताविति कन्प्रत्ययस्तस्य जीविकार्थे चापण्य इति वा देवपथादिष्वर्चासु पूजनार्थासु चित्रकर्मध्वजेष्विति पाठाद्वा लुप् । एतदञन्तं बहुषु वर्तत इति लुक्प्रसङ्गः । अञ्प्रत्ययस्त्वेकस्मिन्नेवापत्य उत्पन्न इत्यत्र इत्यञो बहुष्विति विज्ञायमाने नास्ति लुक्प्राप्तिस्तस्मात्तदन्तविधिर्नाभ्युपगन्तव्यः । प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात्प्रत्यया एव कार्यभाक्त्वाद् बहुष्वित्यनेन विशेष्यन्ते । इदानीं पक्षद्वयेऽपि क्रमेण परिहार उच्यते ततोयमिति । नवेति । एकैकं प्रत्ययान्तमनेकार्थाभिधायीति लुक्सिध्यतीत्यर्थः । यश्च तदन्तपक्षे दोषः काश्यपा इति स उत्तरत्र परिहरिष्यते । अचोद्यं चोद्य इति । अचोदनार्हं वस्तु त्वया अहं चोद्य इत्यर्थः । चोदिः पृच्छत्यर्थत्वाद् दुहियाचीत्यत्रार्थग्रहणाद् द्विकर्मकः । लुकि कृत इति । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति भावः । पञ्चगर्ग इति । प्रत्ययलक्षणेन बहुवचनपरत्वाश्रयो लुक् प्रवर्तत इत्यर्थः । समर्थादिति । समर्थानां प्रथमाद्वेत्यधिकारादिति भावः । सामर्थ्यं च सुबन्तेनेति ।

त्ताद्धित उत्पद्यते। अहमपीदमचोद्यं चोद्ये गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुगिति। कथम्। यस्यापि बहुवचने परतो लुक् तेनाप्यलुग्वक्तव्यः। तस्यापि ह्यत्र बहुवचनं परं भवति। न वक्तव्यः अचीत्येवालुक् सिद्धः। अचीत्युच्यते न चात्राजादिं पश्यामः प्रत्ययलक्षणेन। ननु चोक्तं वर्णाश्रये नास्ति प्रत्ययलक्षणमिति। यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति। अथ वा विशेषेणालुकमुक्त्वा हलि नेति वक्ष्यामि। यद्येवमविशेषेणालुकमुक्त्वा हलि नेत्युच्यते बिदानामपत्यं बहवो माणवका बिदाः अत्रापि प्राप्नोति। अस्तु। पुनरस्य युवबहुत्वे वर्तमानस्य लुग् भविष्यति पुनरलुक्कस्मान्न भवति। समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम्। किं तर्हि द्वितीयमर्थमुपसंक्रान्तम्। अवश्यं चैतदेवं विज्ञेयम्। अत्रिभरद्वाजिका वसिष्ठकश्यपिका भृग्वङ्गिरसिका कुत्सकुशिकिका इत्येवमर्थम्। गर्गभार्गविकाग्रहणं वा नियमार्थम् *। गर्गभार्गविकाग्रहणं वा क्रियते तन्नियमार्थं भविष्यति। एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्या-

---

सुबन्तेन द्वितीयस्य पदस्य संबन्धवत्त्वं पदस्यैव प्रयोगार्हत्वात्। प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणार्थः। अहमिति। यो ह्युभयदोषो न तमेकश्चोद्यः। तस्यापि ह्यत्रेति। प्रत्ययलक्षणेन। अचीत्येवेति। अयं च द्वयोरपि साधारणः परिहारः। यदि वेति। यथैवेत्यर्थः। यथातृणेडितीमागमः। अयं भावः। यत्कार्यं वर्णरूपाश्रयं न प्रत्ययत्वाश्रयं तत् प्रत्ययलक्षणेन भवति। यथा गोहितमित्यादावबादयः। इमागमस्तु हलादिपिरसार्वधातुकाश्रयत्वात् प्रत्ययाश्रय इति प्रवर्तते। एवं गोत्रेलुगचीत्यजादिप्रत्ययाश्रयत्वादलुक् प्रत्ययलक्षणेन प्रवर्तते। हलि नेति। यथा गर्गरूप्यमिति। पुनरस्येति। अपत्याधिकारादन्यत्र लौकिकस्यापत्यमात्रस्य गोत्रस्य ग्रहणमिति युवबहुत्वे यञञोश्चेति लुग् भविष्यतीत्यर्थः। पुनरिति। लुक्छास्त्रवदलुक्छास्त्रस्यापि प्रवृत्तेरव्याघातादिति भावः। समर्थानामिति। प्रतियोगं समर्थानां प्रथमादित्यस्यानुवृत्तिस्तत्रायमर्थः। समर्थानां प्रथमस्य गोत्रप्रत्ययस्यालुग् भवतीति प्राथमकल्पिके च प्रत्ययार्थे वर्तमानस्य तस्य प्राथम्यं यथा गार्गीया इति। अत्र युवप्रत्ययस्य लुकि कृते युवलक्षणं द्वितीयमर्थमुपसंक्रान्तोऽञन्तः शब्द इति प्राथम्याभावः। अत्रिभरद्वाजिकेति। अत्रेरपत्यानीतीतश्चानिञ इति ढक्। भरद्वाजस्यापत्यानीति बिदादञ्। तत उभाभ्यां युवबहुत्वे इञ्। तस्य ण्यक्षत्रियार्षेति लुक् ढकोऽत्रिभृगुवतीति अञो यञञोश्चेति भावः। ततोऽत्रिभरद्वाजानां मैथुनिकेति द्वन्द्वाद्वुनिति वुन्। तस्याकादेश। यदि द्वितीयमर्थमुपसक्रान्तस्याप्यलुक् स्यात्तदा गोत्रे लुगचीति यथान्यासेऽपि अलुगञः प्रसज्येतेत्यर्थः। वसिष्ठकश्यपिकेति। वसिष्ठशब्दादृष्यण्। कश्यपादञ्। पूर्ववद्यून्यत इञ्। तस्य लुक्। ततोऽणञोर्लुक्। वुन्। भृग्वङ्गिरसिकेति। ऋष्यण्। यून्यत इञ् तस्य लुक् अणो लुक् वुन्। कुत्सकुशिकिकेति। कुत्सादृष्यण्। कुशिकादञ्। अन्यत् पूर्ववत्। गर्गभार्गविकेति। गर्गशब्दाद्यञ्। तस्य लुक्। भृगुशब्दाद-

लुग्भवति नान्यस्येति । यदप्युच्यते एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्य इति मा भूदेवम् । अञ्यो बहुषु यञ्यो बहुष्विति । अञन्तं यद्बहुषु यञन्तं यद् बहुष्विसेवं भविष्यति । ननु चोक्तं नैवं शक्यम् । इह हि दोषः स्यात्काश्यपप्रतिकृतयः काश्यपा इति । नैष दोषः । लौकिकस्य तत्र गोत्रस्य ग्रहणम् । न चैतल्लौकिकं गोत्रम् । यस्य बहुवचने परतो लुक् । समासबहुत्वे तेन नेति प्रतिषेधो वक्तव्यः । तेनैव चेत्कृतं बहुत्वमिति वा वक्तव्यम् । यस्य प्रत्ययार्थबहुत्वे लुक् तेनास्त्रियामिति वक्तव्यम् । यस्य बहुवचने परतो लुक् तस्यायमधिको दोषः । अत्रय इति उदात्तनिवृत्तिस्वरः प्राप्नोति । तस्मात्प्रत्ययार्थबहुत्वे लुगिसेष पक्षो ज्यायान् । अथेह कथं भवितव्यं गार्गी च वात्स्यश्च वाज्यश्चेति यदि तावदस्त्रीविधिनाश्रीयते अस्यत्रास्त्रीति कृत्वा भवितव्यं लुका । अथ स्त्रीप्रतिषेधेनाश्रीयते अस्त्यत्रस्त्रीति कृत्वा भवितव्यं प्रतिषेधेन । किं पुनरत्रार्थस्य तत्त्वम् । देवा ज्ञातुमर्हन्ति । अथ यो लोप्यलोपिनां समासस्तत्र कथं भवितव्यम् । उभयं हि दृश्यते । शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानामिति । तद्राजस्य ॥

यञञोश्च ॥ ६४ ॥ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥*।

ष्यण् । तदन्ताद्यून्यपत इञ् । तस्य लुक् । गर्गभृगूणां मैथुनिकेति वुन् । अत्र्यत्रिभृग्विति लुक् प्राप्तो गोपवनादिपाठेन प्रतिषिध्यते । यदि च द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक् स्याद्गोपवनादिषु न पठ्येत पठितस्तु यथोक्तार्थज्ञापनायेत्यर्थः । अर्थनिर्देशवादी परिहारमाह यदपीति । लौकिकस्येति । अपत्यस्येत्यर्थः । प्रकृतिबहुत्वे ऽयमञन्तो वर्तते न त्वपत्यबहुत्वइत्यर्थः । न चैतदिति । यद्यपि शास्त्रीयमपि न भवति तथापि स्थितपक्षाश्रयः परिहारो वक्तव्य इत्येवमुक्तम । इदानीं पक्षद्वये दोषपरिगणनमाह यस्येति । तस्मादिति । अर्थपक्षे लुकोपरनिमित्तकत्वादत्रय इत्युदात्तनिवृत्तिस्वराप्रसङ्गः । अस्त्रियामित्येतत्तु कृतमेव । गार्गी चेति । एकैकं शब्दरूपं स्त्रीपुंसात्मकसमुदायाभिधायि तत्र पर्युदासे सर्वेषां लुका भाव्यम् । प्रसज्यप्रतिषेधे तु न भाव्यमिति संदेहात् प्रश्नः । देवा इति । दिव्यदृशः देवा इति पण्डिता इत्यर्थः । तत्र पर्युदासस्यैकवाक्यतया लाघवात् न्याय्यत्वमिति केचिदाहुः । अन्ये तु ब्रुवते गार्गीशब्देन स्त्रीत्वयुक्तानामर्थानामभिधानाद् यञो लुका न भाव्यम् अन्येषां तु भाव्यमिति । अथेति । लोपभाजामन्येषां च य समास इत्यर्थः । यदा लोपभाग् युगपदर्थानामभिधानाद् बह्वर्थस्तदाश्रयेण किं तस्य लुक् क्रियतामथ तेनैवेति वचनादलोपिसन्निधिकृतं बहुत्वमितिमाकारि लुगिति प्रश्नः । उभयं हीति । ज्ञापकद्वयसद्भावादुभयं भवतीति भावः । भृगुवत्साग्रायणेष्विति । अत्र द्वौ लोपिनौ तृतीयस्तु नडादिफगन्तो न लोपी द्वयोश्च लुक् कृतः । अगार्ग्यकाश्यपगालवानामिति । द्वौ लोपिनौ गालवस्तु ऋष्यणन्तो न लोपी । न च लोपिनोर्लुक् कृतस्तदेवं ज्ञापकद्वयसद्भावात् प्रयोगद्वयोपपत्तिः ॥६२॥

यञ ॥ यञादीनामिति । इतः प्रभृति ये प्रत्यया बहुषु लुग्भाजस्ते यञादयः आदिशब्दस्य व्यवस्थावाचित्वात् ॥६४॥

यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानं कर्तव्यम् । गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलं वा गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा बैदस्य कुलं बैदकुलं बिदकुलं वा बैदयोः कुलं बैदकुलं बिदकुलं वा यञादीनामिति किमर्थम् । आङ्गस्य कुलं आङ्गकुलम् । आङ्गयोः कुलमाङ्गकुलम् । एकद्वयोरिति किमर्थम् । गर्गाणां कुलं गर्गकुलम् । तत्पुरुष इति किमर्थम् । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्य इति किमर्थम् । शोभनगार्ग्यः । परमगार्ग्यः । यञयो ॥

बह्वच इञः प्राच्यभरतेषु ॥ ६६ ॥ किमयं समुच्चयः प्राक्षु च भरतेषु चेति आहो स्विद्भरतविशेषणं प्राग्ग्रहणं प्राञ्चो ये भरता इति । किं चातः । यदि समुच्चयः । भरतग्रहणमनर्थकं न ह्यन्यत्र भरताः सन्ति । अथ प्राग्ग्रहणं भरतविशेषणम् । प्राग्ग्रहणमनर्थकं न ह्यप्राञ्चो भरताः सन्ति । एवं तर्हि समुच्चयः । ननु चोक्तं भरतग्रहणमनर्थकं न ह्यन्यत्र भरताः सन्तीति । नानर्थकम् । ज्ञापकार्थम् । किं ज्ञाप्यते । एतज्ज्ञापयत्याचार्यः अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । इञः प्राचां भरतग्रहणं न भवति । औद्दालकिः पिता । औद्दालकायनः पुत्र इति । बह्वच ॥

न गोपवनादिभ्यः ॥ ६७ ॥ गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः * । गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यो द्रष्टव्यः । हारितः हारितौ । बहुषु हरिताः । न गोपव ॥

उपकादिभ्योन्यतरस्यामद्वन्द्वे ॥ ६८ ॥ किमर्थमद्वन्द्वइत्युच्यते । द्वन्द्वे मा भूदिति । नैतदस्ति प्रयोजनम् । इष्यते द्वन्द्वे भ्राष्टकिकपिष्ठलाः । भ्राष्टकिकापिष्ठलय इति । अत उत्तरं पठति । अद्वन्द्वइति द्वन्द्वाधिकारनिवृत्त्यर्थम् * । अद्वन्द्वइत्युच्यते द्वन्द्वाधिकारनिवृत्त्यर्थम् । द्वन्द्वाधिकारो निवर्तते तस्मिन्निवृत्ते अविशेषणं द्वन्द्वे चाद्वन्द्वे च भविष्यति । उपकादिभ्यो ॥

---

बह्व ॥ द्वन्द्वतत्पुरुषयोर्द्वयोरपि संभावाद्दोषदर्शनाच्च प्रश्नः । किमयमिति । गोबलीवर्दवत्सामान्यविशेषवाचिनोरपि द्वन्द्वसंभवः । औद्दालकिरिति । उद्दालको नाम भरतकुलोत्पन्नः ॥६६॥

न गोप ॥ बिदाद्यन्तर्गणो गोपवनादि । न च तत्समाप्तये गणे वृत्करणं पठितमिति आगणान्ताद् ग्रहणं प्राप्नोतीत्याह गोपवनादिप्रतिषेध इति ॥६७॥

उपका ॥ द्वन्द्वेपि लुग्विकल्पस्येष्टत्वात् प्रश्नः । किमर्थमिति । भ्राष्टकिकापिष्ठलय इति । अस्माद्देचोदाहरणात्तिककितवादिष्वस्य पाठोनार्ष इति लक्ष्यते । द्वन्द्वाधिकारनिवृत्त्यर्थमिति । अधिकारशब्देनात्र शास्त्रीयोधिकारः स्वरितत्वनिमित्तो न गृह्यते न हि पूर्वसूत्रोपात्तो द्वन्द्वशब्द आसक्तस्वरितः । किं तर्हि लौकिकोधिकारोपेक्षालक्षणो निविवर्तयिषितः । द्वन्द्वशब्देन तद्विषयोधिकारोभिधीयते तस्य नञा निषेधो द्योत्यते तेनायमर्थो द्वन्द्व इह नापेक्ष्यते तदनपेक्षायां समान्येन द्वन्द्वे चाद्वन्द्वे च लुग्विकल्पसिद्धिः ॥६८॥

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥ आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनम् * । आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनं कर्तव्यम् । अगस्ति कुण्डिनजित्येतौ प्रकृत्यादेशौ भवत इति वक्तव्यम् । किं प्रयोजनम् । लुक्प्रतिषेधे वृद्ध्यर्थम् * । लुक्प्रतिषेधे वृद्धिर्यथा स्यात् । प्रत्ययान्तनिपातने हि वृद्ध्यभावः * । प्रत्ययान्तनिपातने हि सति वृद्ध्यभावः स्यात् । आगस्तीयाः कौण्डिना इति । यदि प्रकृतिनिपातनं क्रियते । केनेदानीं प्रत्ययस्य लोपो भविष्यति । अधिकारात्प्रत्ययलोपः * । अधिकारात्प्रत्ययलोपो भविष्यति । तत्तर्हि प्रकृतिनिपातनं कर्तव्यम् । न कर्तव्यम् । योगविभागः करिष्यते । आगस्त्यकौण्डिन्ययोर्बहुषु लुग्भवति । ततः अगस्तिकुण्डिनजित्येतौ च प्रकृत्यादेशौ भविष्यतः आगस्त्यकौण्डिन्ययोरिति । एवमपि प्रत्ययान्तयोरेव प्राप्नोति । प्रत्ययान्ताद्धि भवान् षष्ठीमुच्चारयति आगस्त्यकौण्डिन्ययोरिति । नैष दोषः । यथा परिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति प्रत्ययस्यैव भविष्यति । अवशिष्टस्यादेशौ भविष्यतः । आगस्त्य ॥

यङोऽचि च ॥ ७४ ॥ ऊतोऽचि * । ऊतः अचीति वक्तव्यम् । इह मा भूत् । सनीस्रसो दनीध्वस इति । अथ ऊत इत्युच्यते । इह कस्मान्न भवति । योयूपः रोरूपः । विहितविशेषणमूकारग्रहणम् । ऊकारान्ताद्यो विहित इति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इष्टमेवैतत्संगृहीतं सनीस्रंसो दनीध्वंस इत्येव भवितव्यम् । यङो ॥

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥ गापोर्ग्रहणं इण्पिबत्योर्ग्रहणम् * । गापोर्ग्रहणे इण्पिबत्योर्ग्रहणं कर्तव्यम् । इणो यो गाशब्दः पिबतेर्यः पाशब्द इति वक्तव्यम् । इह मा भूत् । अगासीन्नटः । अपासीद्धनमिति ।

---

आगस्त्य ॥ प्रकृतिप्रत्ययसमुदायस्य षष्ठीनिर्दिष्टत्वादादेशप्रसङ्गस्ततश्चागस्तीनां छात्रा इत्यत्रादेशे कृते वृद्धत्वात् छो न स्यादित्याह प्रकृतिनिपातनमिति । प्रकृतेरेवादेशौ निपातनीयावित्यर्थः । लुक्प्रतिषेध इति । गोत्रे लुगचीति । लुकि प्रतिषिद्धे तत्संनियोगशिष्टस्यादेशस्याप्यभाव इत्यागस्त्यशब्दाच्छः सिध्यति । प्रत्ययान्तनिपातने हीति । यदि प्रत्ययान्तस्यादेशः क्रियेतेत्यर्थः । कौण्डिना इति । कण्वादिभ्यो गोत्रइत्यण् । अस्य विशेषाभावप्रदर्शनायोपन्यासः । अधिकारादिति । लुग्ग्रहणमिहानुवर्तते तत्र प्रकृतेरादेशः प्रत्ययस्य लुगित्यर्थः संपद्यते । बहुषु लुग् भवतीति । बहुषु वर्तमानयोर्यः प्रत्ययस्तस्येत्यर्थः । प्रकृत्यादेशाविति । सामर्थ्यलभ्योऽयमर्थः । प्रत्यये हि लुप्ते प्रकृतिरेवावशिष्यते । एवमपीति । षष्ठीनिर्दिष्टस्यादेशविधानादिति भावः । ततश्च लुक् आदेशयोश्च पर्यायप्रसङ्गः । यथा परिभाषितमिति । तत्र स्थानिभेदात् पर्यायाभावः ॥७०॥

यङोऽचि ॥ सनीस्रस इति । यद्यत्र लुक् स्यात्तदा न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधान्नलोपो न स्यात् । अतो लोपः यस्य हल इति लोपे तु प्रत्ययलक्षणं भवत्येव७४

गाति ॥ पिबतेरिति । पिबतेर्यः स्थानी दृष्टः पाशब्द इत्यर्थः । शिति च पिबादेशो

तर्हि वक्तव्यम् । न वक्तव्यम् । इणग्रहणे तावद्वार्त्तं निर्देशादेव व्यक्तं लुग्विकरणस्य ग्रहणमिति । पाग्रहणे चापि वार्तमुक्तमेतत्सर्वत्रैव पाग्रहणे अलुग्विकरणस्य ग्रहणमिति । गातिस्था ॥

तनादिभ्यस्तथासोः ॥ ७९ ॥ तथासोरात्मनेपदवचनम् * । तथासोरात्मनेपदस्य ग्रहणं कर्तव्यम् । आत्मनेपदं यौ तथासाविति वक्तव्यम् । एकवचनग्रहणं वा * । अथ वा एकवचने ये तथासी इति वक्तव्यम् । तच्चावश्यमन्यतरत्कर्तव्यम् । अवचने ह्यनिष्टप्रसङ्गः * । अनुच्यमाने ह्येतस्मिन्ननिष्टं प्रसज्येत । अतनिष्ट यूयम् । असनिष्ट यूयमिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । यद्यपि तावदयं तशब्दो दृष्टापचारोऽस्त्यात्मनेपदम् । अस्ति च परस्मैपदम् । अस्त्येकवचनम् । अस्ति बहुवचनम् । अयं तु खलु थासशब्दोऽदृष्टापचार आत्मनेपदमेकवचनं च । तस्यास्य कोऽन्यः सहायो भवितुमर्हति अन्यदत आत्मनेपदादेकवचनाच्च । तद्यथा । अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इति । तनादि ॥

आमः ॥ ८१ ॥ आमो लेर्लोपे लुङ्लोटोरुपसंख्यानम् * । आमः लेर्लोपे लुङ्लोटोरुपसंख्यानं कर्तव्यम् । तां वैजत्रापयो विदामक्रन् । अस्य भवन्तो विदांकुर्वन्तु । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । लिग्रहणं निवर्तिष्यते । यदि निवर्तते । प्रत्ययमात्रस्य लुक् प्राप्नोति । इष्यतएव प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह कृञ्चानुप्रयुज्यते लिटीति । यदि च प्रत्ययमात्रस्य लुग् भवति तत एतदुपपन्नं भवति । आमन्तेभ्यो णलः प्रतिषेधः * । आमन्तेभ्यो णलः प्रतिषेधो वक्तव्यः । शशाम तताम । वृद्धौ कृतायामाम इति लुक् प्राप्नोति । आमन्तेभ्योर्थवद्ग्रहणाण्णलोऽप्रतिषेधः * आमन्तेभ्योर्थवद्ग्रहणाण्णलः अप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । लुक् कस्मान्न भवति । शशाम ततामेति । अर्थवद्ग्रहणात् । अर्थवत आम्शब्दस्य ग्रहणं न चैषोर्थवान् । आमन्तेभ्योर्थवद्ग्रहणाणलोऽप्रतिषेध इति चेदमः प्रतिषेधः * । वक्तव्यः । आम । उक्तं वा * । किमुक्तम् । सन्निपातलक्षणो

---

विहित इति पापान इत्यस्यैव भौवादिकस्य ग्रहणम् । अगासीदिति । गेशब्दे पारक्षणे अनयोर्यमरमनमातां सक् च इति सगागमः । सिचश्चेत् । निर्देशादिति । गातीत्यादादिकादेशानुकरणत्वाददादिलुका गातिशब्दः श्तिपा निर्दिष्टः । सर्वत्रेति । घुमास्थागापस्यादावपीत्यर्थ. । तेन पायतं इति पातेरीत्त्वाभावः । शोषणार्थस्य तु पायतेर्लाक्षणिकत्वात्पारूपस्य ग्रहणाभावः ॥७७॥

आमः । लिग्रहणमिति । निपातनादन्यत्र लुक् सिध्यति । तत्त्वनपेक्ष्यायं परिहार उक्तः । प्रत्ययमात्रस्येति । तरबादेरपीत्यर्थः । एवं ह्याहेति । व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थमेव यद्वचनमित्यर्थः । आमन्तस्यानभिव्यक्तपदार्थत्वाच्च स्वाभाविक्यत्रानुत्पत्तिस्तरबादेर्लुग्द्वारेणान्वाख्यायतइति भावः । अर्थवत इति । आंप्रत्ययो ऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीत्यर्थवान् । आम इति । अमगत्यादिष्वित्यस्य णलि वृद्धौ द्वितीय-

विधिरनिमित्तं तद्विघातस्येति । किं पुनर्लुगादेशापवादः आहो स्वित्कृतेष्वादेशेषु भवति । लुगादेशापवादः * । लुक् आदेशानामपवादः । तिङ्कृताभावस्तु * । तिङ्कृतस्य तु अभावः । कस्य । पदत्वस्य । सुबन्तत्वात्सिद्धम् * । सुबन्तं पदमिति पदसंज्ञा भविष्यति । कथं स्वाद्युत्पत्तिः । लकारस्य कृत्त्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् । लकारः कृत्कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा तदाश्रयं प्रत्ययविधानं प्रातिपदिकाश्रयत्वात्स्वाद्युत्पत्तिर्भविष्यति । यद्येवं सुपः श्रवणं प्राप्नोति । अव्ययादिति लुग् भविष्यति । कथमव्ययत्वम् । अव्ययत्वं मकारान्तत्वात् * । कृदन्तं मान्तमव्ययसंज्ञं भवतीति अव्ययसंज्ञा भविष्यति । स्वरः कथम् । यत्प्रकारयां चकार । स्वरः कृदन्तप्रकृतिस्वरत्वात् * । कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीत्येष स्वरो भविष्यति । तथा च निघातानिघातसिद्धिः * । तथा च निघातानिघातसिद्धिर्भवति । चक्षुष्कामं याजयांचकार । तिङ्ङतिङ इति तस्य वा निघातः । तस्माच्च निघातः सिद्धो भवति । नञा तु समासप्रसङ्गः * । नञा तु समासः प्राप्नोति । नकारयां नहारयाम् । नञ् सुबन्तेन सह समस्यत इति समासः प्राप्नोति । उक्तं वा * । किमुक्तम् । असामर्थ्यादिति । नात्र नञ आमन्तेन सामर्थ्यं केन तर्हि लिडन्तेन न चकार कारयां न जहार हारयामिति । आमः ॥

---

चनपकादेशे च यद्रूपमामिति तस्यार्थवत्त्वाण्णेला लुक्प्रसङ्गः । किं पुनरिति । यदा विशेषविधिः सामान्यविधिबाधक इति न्याय आश्रीयते तदा लकारान्तरेषु सावकाशास्तिबादयो विशेषविहितेन लुका बाध्यन्तइत्यादेशापवादो लुक् संपद्यते । अथ त्वविरोधादस्ति च संभवो यदुभयं स्यादित्याश्रीयते तदा कृतेष्वादेशेषु लुका भाव्यमिति संदेहात् प्रश्नः । लुगिति । सत्यपि संभवे बाधनं तत्कदानेनेव बुधिदानस्येति भावः । कस्येति । निघातादेस्तिङ्कार्यस्यानिष्टत्वात् प्रश्नः । कथमिति । आमः प्रत्ययत्वादप्रत्यय इति प्रातिपदिकसंज्ञानिषेधात् प्रश्नः । लकारस्येति । अतिङिति कृत्संज्ञाप्रतिषेधस्तिङ्भाविनो लकारस्य । अयं तु तिङ्भावी न भवतीति भावः । सुपः श्रवणमिति । यद्यप्येकवचनस्य हल्ङ्यादिलोपोऽस्ति तथापि द्विवचनबहुवचनश्रवणप्रसङ्गः । कृदन्तमिति । कृन्मेजन्त इत्यत्र कृदन्तस्य विशेषणं मेजन्तग्रहणं न तु कृतः स्वरादिषु पठ्यते तेन तद्धिप्रकरणात्तद्धितसाहचर्याद्वा तद्धित एव गृह्यते । यत्प्रकारयां चकारेति । अत्र प्रशब्दस्यानुदात्तत्वमिष्यते तच्च तिबादिलुकि सति गतिर्गतौ तिङि चोदात्तवतीति सिध्यति नान्यथेति भावः । कृदन्तप्रकृतिस्वरत्वादिति । प्रशब्दस्य कारयामित्यनेन समासे कृते समासस्वराव्ययपूर्वपदप्रकृतिस्वरयोः प्राप्तयोः कृत्स्वरस्ततः शेषनिघातेन गतेरनुदात्तत्वं सिध्यतीत्यर्थः । तस्य चेति । आमन्तस्य । तिङन्तत्वान्निघातो न प्रवर्तते । तस्मात्परं तिङन्तं तु चकारादि निहन्यते । न कारयामिति । ततश्च नलोपादिप्रसङ्गः । न चकारेति । नञोतिङन्तेन सामर्थ्यं प्रदर्शयति न त्वयं लौकिकः प्रयोगो व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वादनुप्रयोगारम्भस्य । प्राभिव्यक्पदार्थेन नञः सामर्थ्यं न त्वनभिव्यक्तार्थेनत्यर्थः ॥८१॥

**अव्ययादाप्सुपः** ॥ ८२ ॥ अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात् * । अव्ययादापः लुग्वचनमनर्थकम् । किं कारणम् । लिङ्गाभावात् । अलिङ्गमव्ययम् । किमिदं भवान् सुपो लुकं न मृष्यति आपो लुकं न मृष्यति । यथैव ह्यलिङ्गमव्ययमेवमसंख्यमपि । सत्यमेवमेतत् । प्रत्ययलक्षणमाचार्यः प्रार्थयमानः सुपो लुकं मृष्यति अपः पुनरस्य लुकि सति न किं चिदपि प्रयोजनमस्ति । उच्यमानेऽप्येतस्मिन् स्वाद्युत्पत्तिर्न प्राप्नोति । किं कारणम् । एकत्वादीनामभावात् । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । न चैषामेकत्वादयः सन्ति । अविशेषेणोत्पद्यन्ते । उत्पन्नानां नियमः क्रियते । अथ वा प्रकृतानर्थानपेक्ष्य नियमः क्रियते । के च प्रकृताः । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति । अथ वा आचार्यप्रवृत्तिर्ज्ञापयति । उत्पद्यन्ते ऽव्ययेभ्यः स्वादय इति । यदयमव्ययादाप्सुप इति लुकं शास्ति । अव्ययादा ॥

**नाव्ययीभावादतोऽम् त्वपञ्चम्याः** ॥ ८३ ॥ नाव्ययीभावादत इति योगव्यवसानम् * । नाव्ययीभावादत इति योगो व्यवसेयः । नाव्ययीभावादकारान्तात्सुपो लुग् भवति । ततोऽम् त्वपञ्चम्या इति । किमर्थो योगविभागः । पञ्चम्या अम्प्रतिषेधार्थः * । पञ्चम्या अमः प्रतिषेधो यथा स्यात् । एकयोगे ह्युभयोः प्रतिषेधः * । एकयोगे ह्युभयोः प्रतिषेधः स्यात् । अमः अलुकश्च । स तर्हि योगविभागः कर्तव्यः । न कर्तव्यः । तुर्नियामकः * । तुः क्रियते । स नियामको भविष्यति । अमेवापञ्चम्या इति । अमि पञ्चमीप्रतिषेधे ऽपादानग्रहणम् * । अमि पञ्चमीप्रतिषेधे अपादानग्रहणं कर्तव्यम् । अपादानपञ्चम्या इति वक्तव्यम् । किं प्रयोजनम् । कर्मप्रवचनीययुक्ते ऽप्रतिषेधार्थम् * । कर्मप्रवचनीययुक्ते मा भूदापाटलिपुत्रं वृष्टो देवः । न वोत्तरपदस्य कर्मप्रवचनीययोगात् समासात् पञ्चम्य-

---

अव्यया ॥ लिङ्गाभावादिति । न च स्त्रीसमानाधिकरणपक्षः स्त्रियामित्यत्राश्रितः भूतमियं ब्राह्मणी इत्यादौ भूतादिभ्य प्रत्ययप्रसङ्गादिति भाव. । किमिदमिति । संख्याया अप्यभावात् सुपापि नोत्पत्तव्यमिति भाव । प्रत्ययलक्षणमिति । स्वाभाविक्येव सुपोऽनुपलब्धिर्लुगद्वारेण पदत्वनिबन्धनरुत्वादिकार्यसिद्धयेऽन्वाख्यायत इत्यर्थः । उच्यमानेऽपीति । प्रसक्तादर्शनस्य लोपादिसंज्ञाविधानात् । अनुत्पन्नस्य सुपो लुगसंभवादिति भावः । एकत्वादिष्विति । वाक्यैकवाक्यतया विशिष्टपदार्थे स्वादिविधानादिति भावः । अविशेषेणेति । वाक्यान्तरानिरपेक्षत्वात्स्वादिविधिवाक्यस्येति भावः । यदयमिति । एकवाक्यतापक्षे ऽपि ज्ञापकात्सुबुत्पत्तिरित्यर्थः ॥८२॥

नाव्ययी ॥ योगव्यवसानमिति । योगविभाग इत्यर्थः । तुर्नियामक इति । अवधारणे तुर्वर्तते तेनामेवापञ्चम्या अलुक् तु पञ्चम्या अपीत्यर्थः संपद्यते । आपाटलिपुत्र-

भावः *। न वा वक्तव्यम्। किं कारणम्। उत्तरपदमत्र कर्मप्रवचनीययुक्तम्। उत्तरपदस्य कर्मप्रवचनीययोगात्समासात्पञ्चमी न भविष्यति। यदा च समासः कर्मप्रवचनीययुक्तः भवति तदा प्रतिषेधः। तद्यथा। आ उपकुम्भात्। आ उपमणिकात् इति। नाव्ययीभाव॥

तृतीयासप्तम्योर्बहुलम्॥ ८४॥ सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम्। सुमद्रं सुमगधम्। ऋद्धि। नदीसमास। उन्मत्तगङ्गं लोहितगङ्गम्। संख्यावयव। एकविंशतिभारद्वाजं त्रिपञ्चाशद्गौतमम्। तृतीयासप्त॥

लुटः प्रथमस्य डारौरसः॥ ८५॥ टितां टेरेविधेर्लुटो डारौरसः पूर्वविप्रतिषिद्धम् *। टितां टेरेविधेर्लुटो डारौरसो भवन्ति पूर्वविप्रतिषेधेन। टेरेत्वस्यावकाशः पचते पचेते पचन्ते। डारौरसामवकाशः श्वः कर्ता श्वः कर्तारौ श्वः कर्तारः। इहोभयं प्राप्नोति। श्वः अध्येता श्वः अध्येतारौ श्वः अध्येतार इति। डारौरसो भवन्ति पूर्वविप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। आत्मनेपदानां चेति वचनात्सिद्धम् *। आत्मनेपदानां च डारौरसो भवन्तीति वक्तव्यम्। तच्च समसंख्यार्थम् *। तच्चावश्यमात्मनेपदग्रहणं कर्तव्यं समसंख्यार्थं संख्यातानुदेशो यथा स्यात्। अक्रियमाणे ह्यात्मनेपदग्रहणे षट् स्थानिनस्त्रय आदेशाः वैषम्यात्संख्यातानुदेशो न प्राप्नोति। पूर्वविप्रतिषेधार्थेन तावन्नार्थ आत्मनेपदग्रहणेन। इदमिह संप्रधार्यं डारौरसः क्रियन्तामेत्वमिति। किमत्र कर्तव्यम्। परत्वादेत्वं, नित्या डारौरसः कृतेऽप्येत्वे प्राप्नुवन्त्यकृतेऽपि प्राप्नुवन्ति। टेरेत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोत्यकृतेष्वपि प्राप्नोति। अनित्यमेत्वमन्यस्य कृतेषु डारौरस्सु प्राप्नोत्यन्यस्याकृतेषु। शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। डारौरसोऽप्यनित्याः अन्यस्य कृते एत्वे प्राप्नुवन्त्यन्यस्याकृते।

---

मिति। आङ्योगेऽत्र पञ्चमी न त्वपादानइत्यम्भावो भवतीत्यर्थः। न वेति। अव्ययीभावाद्विहितायाः पञ्चम्या अमोदशप्रीतेष योत्र तूत्तरपदाद्विहिता पञ्चमी तस्याश्च समासप्रातिपदिकत्वाल्लुकि कृते समासात् सुशब्द उत्पद्यते तस्याम्भावः। भवति तदेति। श्रूयतएवेत्यर्थः। आ उपकुम्भादिति। कुम्भस्य समीपमित्यव्ययीभावः। तत आङ्योगे पञ्चमी॥८३॥

तृतीया॥ समुद्रमिति। मद्राणां समृद्धिरित्यव्ययीभावः। एकविंशतिभारद्वाजमिति। एकविंशतिर्भरद्वाजा वंश्यास्त्रिपञ्चाशद्गौतमा वंश्या इति संख्या वंश्येनेति समासः। तत्र वर्तिपदानां स्वार्थोपसर्जनार्थान्तराभिधायित्वाद् गौतमभारद्वाजशब्दयोरेकत्वविशिष्टेऽर्थान्तरे संक्रमाल्लुगभावः। ततः सप्तमी। नित्योभावः। बहुलग्रहणाल्लभ्यश्चायमर्थो दर्शित.॥८४॥

लुटः। श्वः कर्तेति। तिप्तस्झीनामत्र डारौरसः कृताः। आत्मनेपदानामिति। लुट आत्मनेपदानां च प्रथमसंज्ञकानां डारौरसो भवन्तीति वक्तव्यम्। ततश्च विशेषविहितत्वाद्बाधेरेत्वं बाध्यत। पूर्वविप्रतिषेधार्थेनेति। पूर्वविप्रतिषेधस्य यत्प्रयोजनं

शब्दान्तरस्य च प्राप्नुवन्तो ऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादेत्वम् । एत्वे कृते पुनः प्रसङ्गविज्ञानाद् डारौरसो भविष्यन्ति । समसंख्यार्थेन चापि नार्थ आत्मनेपदग्रहणेन । स्थानेन्तरतमेन व्यवस्था भविष्यति । कुत आन्तर्यम् । अर्थतः । एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः । अथ वा आदेशा अपि षडेव निर्दिश्यन्ते । कथम् । एकशेषनिर्देशोयम् । अथैतस्मिन्नेकशेषे सति किमयं कृतैकशेषाणां द्वन्द्वः डा च डा च डा । रौ च रौ च रौ । रश्च रश्च रः । डा च रौ च रश्च डारौरस इति । आहो स्वित्कृतद्वन्द्वानामेकशेषः । डा च रौ च रश्च डारौरसः । डारौरसश्च डारौरसश्च डारौरस इति । किं चातः । यदि कृतैकशेषाणां द्वन्द्वः अनिष्टः तमसंख्यः प्राप्नोति एकवचनद्विवचनयोर्डा प्राप्नोति बहुवचनैकवचनयोरौ प्राप्नोति द्विवचनबहुवचनयो रस् प्राप्नोति । अथ कृतद्वन्द्वानामेकशेषः । न दोषो भवति । यथा न दोषस्तथास्तु । किं पुनरत्र ज्यायः । उभयं हि दृश्यते बहुशक्ति किटिकं बहूनि शक्तिकिटिकानि । बहु स्थालीपिठरं बहूनि स्थालीपिठराणि । डारौरसः कृते टेरे यथा द्वित्वं प्रसारणे । समसंख्येन नार्थोस्ति सिद्धं स्थानेर्थतोन्तरः ॥ आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम् । टेरेत्वं च परत्वात्कृतेपि तस्मिन्निमे सन्तु ॥ डाविकारस्य शित्करणं सर्वादेशार्थम् * डाविकारः शित्कर्तव्यः । किं प्रयोजनम् । सर्वादेशार्थं शित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे अलोन्त्यस्य विधयो भवन्तीसन्त्यस्य प्रसज्येत । निघातप्रसङ्गस्तु *। निघातस्तु प्राप्नोति । श्वः कर्ता । तासेः परं लसार्वधातुकमनुदात्तं भवतीत्येष स्वरः प्राप्नोति यत्तावदुच्यते । डाविकारस्य शित्करणं सर्वादेशार्थमिति । सिद्धमलोन्त्यविकारात् *। सिद्धमेतत् । कथम् । आलोन्त्यविकारात् । अस्त्वयमलोन्त्यस्य । का रूपसिद्धिः । कर्ता । डिति टेर्लोपाल्लोपः *। डिति टेर्लोपेन लोपो भविष्यति । अभत्वान्न प्राप्नोति । डित्करणसामर्थ्याद्भविष्यति । अनित्त्वाद्वा * अथ वा अनित्त्वादेतत्सिद्धम् । किमिदमनित्त्वादिति । अन्त्यस्यायं

---

तत्प्रयोजनेनेत्यर्थः । किं पुनरिति । कस्य पक्षस्यन्यःयतरत्वात्प्रशास्यतरत्वामीति सामान्येन प्रश्न. । इह तु कृतैकशेषाणां द्वन्द्वो दुष्टत्वान्नैव प्रशस्यतइति न तदपेक्षः प्रश्नः । डारौरसः कृते टेरइति । परत्वाट्टेरेत्वे कृते पुनः प्रसङ्गविज्ञानाड्डारौरसो भवन्ति । यथा जतुरीजुरिति कृते संप्रसारणे द्विर्वचनम् । एष एवार्थ आर्यया दर्शितः । आन्तर्यत इति एवामी त्रयः श्रूयन्ते तएव सर्वेषां सन्तु । डाविकार इति । डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाशवक्तव्यः । श्वः कर्तेति । तिपो डादेशस्तस्य तास्यनुदात्तेन् ङिदित्यनुदात्तत्वं प्राप्नोति । यस्तु तिङ्ङतिङ इति निघातः स न लुङिति प्रतिषिद्धः । डितीति । आकारे ङिति परतः सतकारस्य टिसंज्ञकस्य लोपः । डित्करणसामर्थ्यादिति । तत एवानङ्गस्या-

स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेनेकाल् । यदानेकाल् तदा सर्वादेशः यदा सर्वादेशः तदा प्रत्ययः यदा प्रत्ययस्तदेत्संज्ञा यदेत्संज्ञा तदा लोपः । प्रश्लिष्टनिर्देशाद्वा*। अथवा प्रश्लिष्टनिर्देशोयं डा आ डा । सोनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति । यदा तर्ह्ययमन्त्यस्य स्थाने भवति तदातिङ्ग्रहणेन ग्रहणं न प्राप्नोति । तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात्*। एकदेशविकृतमनन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति । स्वरः कथम् । स्वरे विप्रतिषेधात्सिद्धम् *। डारौरसः क्रियन्तामनुदात्तत्वमिति । किमत्र कर्तव्यम् । परत्वादनुदात्तत्वं नित्या डारौरसः कृतेप्यनुदात्तत्वे प्राप्नुवन्त्यकृते ऽपि प्राप्नुवन्ति अनुदात्तत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोत्यकृतेष्वपि प्राप्नोति । अनित्यमनुदात्तत्वम् । अन्यस्य कृतेषु डारौरस्सु प्राप्नोत्यन्यस्याकृतेषु । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । डारौरसोऽप्यनित्याः । अन्यथा स्वरस्य कृते ऽनुदात्तत्वे प्राप्नुवन्ति । अन्यथा स्वरस्याकृते । स्वरभिन्नस्य च प्राप्नुवन्तो ऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनः प्रसङ्गविज्ञानात् डारौरसः । टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धम् । न सिध्यति । किं कारणम् । अन्तरङ्गत्वाद् डारौरसः । तत्रान्तरङ्गत्वाड्डारौरस्सु कृतेषु अनुदात्तत्वं क्रियतां टिलोप इति । किमत्र कर्तव्यम् । परत्वाट्टिलोपेन भवितव्यम् । एवं तर्हि स्वरविप्रतिषेधात् सिद्धम् । न्याय्य एवायं स्वरविप्रतिषेध इदमिह संप्रधार्यम् । अनुदात्तत्वं क्रियतामुदात्तनिवृत्तिस्वर इति । किमत्र कर्तव्यम् । परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनः प्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भविष्यति । तदेतत्क सिद्धं भवति यत्र पिद्वचनम् । यदपिद्वचनं तत्र न सिध्यति । तत्रापि सिद्धम् । कथम् । इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः ।

---

पीति बोद्धव्यं न ह्यन्तस्य डादेशे कृते सतकारमङ्गं प्रत्यये परतोङ्गसंज्ञाविधानात् । अनित्त्वादिति । अनित्संज्ञकत्वादित्यर्थः । अन्त्यस्येति । प्रत्ययस्य ह्यवयवः स्यान्न तु प्रत्ययस्तकारादेः समुदायस्य प्रत्ययत्वात् । प्रश्लिष्टनिर्देशादिति । तत्रानेन कृतैकादेशेन समुदायः प्रत्याय्यते सोनेकाल्त्वात् सर्वादेशः प्रवर्तते । सर्वादेशे च तस्मिन् कृते एकादेशः क्रियते । सिद्धमलोन्यविकारादिति यदुक्तं तत्र दोषमुद्भावयति यदा तर्हीति । भक्तपरिमाणस्य तिङ्संज्ञासंबन्धात्तिशब्दस्यान्त्यादेशे कृते रूपान्तरयोगात्तिङ्ग्रहणात्पदत्वं न स्यादित्यर्थः । एकदेशविकृतमिति । पचतु पचन्त्वित्यादौ यथा । न्याय्य एवायमिति । पूर्वप्रदर्शितो हि डारौरसामन्तरङ्गत्वादन्याय्योयं तु न्याय्यः । अथ वा परविप्रतिषेध एवायं न पूर्वविप्रतिषेध इति न्याय्यत्वमुच्यते । इदमिहेति । डारौरस्सु कृतेषु टिलोपे च कृते संप्रधारणीयम् । नन्वकृते ऽनुदात्तत्वे उदात्तनिवृत्तिस्वरो नैव प्राप्नोति । तत्कथमनयोर्विप्रतिषेध इत्याह तदेतदिति । तिपोनुदात्तस्य स्थाने डादेशः स्थानिवद्भावा-

न चापवादविषये उत्सर्गोऽभिनिविशते पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते । तत्र तावदत्र कदाचित्प्रत्ययस्वरो भवति अपवादं लसार्वधातुकानुदात्तत्वं प्रतीक्षते । तत्रानुदात्तत्वं क्रियतां लोप इति । यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तत्वे अनुदात्ते उदात्तो लुप्यते । प्रत्ययस्वरापवादो लसार्वधातुकानुदात्तत्वम् । तेन तत्र न प्रसक्तः प्रत्ययस्वरः कदाचित् ॥ प्रत्ययस्वरश्च तासेर्वृत्तिसंनियोगशिष्टः । तेन चाप्यसावुदात्तो लोप्स्यते तथा न दोषः ॥ ॥ इति श्रीभगवत्पञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् । समाप्तश्चायं पादोऽध्यायश्च ॥

---

दनुदात्तस्तत्रोदात्तनिवृत्तिस्वरस्सिध्यति । यस्तु तशब्दस्य स्थाने क्रियते तत्र परत्वाद्विलोपे कृते ऽनुदात्ते उदात्तलोपो न कृत इत्युदात्तनिवृत्तिस्वरो न सिध्यति । पुनः प्रसङ्गविधानात्त्वनुदात्तत्वमेव स्यादित्यर्थः । सोसाविति । शास्त्रीयस्तत्रानुदात्तो न गृह्यते किं तर्हि उदात्तत्वाभावयुक्त इत्यर्थः । वृत्तिसन्नियोगशिष्ट इति । वृत्तिः प्रवृत्तिर्यदैव तासिः प्रवर्तते तदैवापवादाभावादुदात्तत्वयुक्त इत्यर्थः । पूर्वोक्त पदार्थः श्लोकेन संगृहीतः ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकं समाप्तम् ॥ समाप्तश्चायं पादोऽध्यायश्च ॥



श्रीगणेशाय नमः ।

# अथ प्रदीपसहिते महाभाष्ये तृतीयाध्यायस्य प्रथमः पादः ।

---

प्रत्ययः ॥ १ ॥ अधिकारेणेयं प्रत्ययसंज्ञा क्रियते । सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः । प्रकृति । गुप्तिज्किद्भ्यः । उपपद । स्तम्बकर्णयोः । उपाधि । हरतेर्दृतिनाथयोः पशौ । एतेषां प्रतिषेधो वक्तव्यः । किं च स्यात् । यद्येते-

---

प्रत्ययः ॥ अधिकारेणेति । यदि तु प्रकारान्तरेण संज्ञिस्वरूपनिर्देशादिना संज्ञा क्रियते ततो न स्यादतिप्रसङ्गः । यदा तु गौरवादिप्रसङ्गपरिहारायाधिकारेण क्रियते ततोऽतिप्रसङ्ग इत्यर्थः । तत्र यदि सर्वे संज्ञिनः स्वरूपेण निर्दिश्येरन् ततो गौरवं स्यात् । अथ सप्प्रत्यय इति सनः सकारादारभ्य कपः पकारेण प्रत्याहाराश्रयणेन संज्ञा विधीयते तदानेकस्य पकारस्य संभवात् संदेहः स्यात् । ननु प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात् प्रकृत्यादीनां प्रत्ययसंज्ञा न भविष्यति । तथा हि । हरतेर्धातोर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्तरीन्प्रत्ययो भवतीत्येकं वाक्यम् । ते च हरतिदृतिनाथपशवः प्रत्ययसंज्ञा इति द्वितीयं वाक्यम् । न चैकवाक्यतायां संभवन्त्यां वाक्यभेदो युक्तः । नैतदस्ति । सनादीनामपि वाक्यभेदेनैव संज्ञा विधेया न ह्यसतः संज्ञिनः संज्ञाविधानमुपपद्यते । तत्रैकेन वाक्येन सनादीनां विधिः । अपरेण तेषामेव संज्ञाविधिः । ततश्च यथा सनादीनां वाक्यभेदेन संज्ञाविधिः एवं प्रकृत्यादीनामपि प्रतिसंज्ञि प्रत्ययसंज्ञोपस्थानसामर्थ्यात् संज्ञासंज्ञिसम्बन्धप्रतिपत्तियोग्यविभक्त्यन्तराध्याहारेण प्राप्नोति । सनाद्युत्पत्तिवाक्य एव प्रथममेतेषां पारार्थ्यमवगतम् । द्वितीये तु संज्ञासंज्ञिसंबन्धप्रतिपादनवाक्ये संबन्धप्रतिपत्तौ स्वार्थता स्यात् यथा च सप्तमीनिर्दिष्टस्य वाक्यभेदेनोपपदसंज्ञाधिकाराद्भवति तथा प्रत्ययसंज्ञापि प्राप्नोति । उपाधिशब्देन चेह तुल्यन्यायत्वाद्विशेषणमप्युच्यते क्वचित्तु तयोर्भेदेन व्यवहारो दृश्यते । यथा नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति । अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः । अनुपाधिरतोऽन्यः स्याच्छ्लाघादिविशेषणं यद्वत् ॥ इति । किंच स्यादिति । नहि संज्ञाप्रवृत्तिमात्रादेव दोषो भवति । किन्तु तन्निमित्तकार्यप्रवर्तनात् । न च प्रकृत्यादीनां किञ्चित्तन्निमित्तं कार्यं संभवति परत्वं तावदवधिविशेषोपादानेन सनादिभिरेव प्रतिपन्नम् । न च गुपादीनां सनादीनां च परस्परापेक्षं परत्वं युज्यते, विरोधात् । उपपदस्यापि समासे सति पूर्वनिपातेन भवितव्यमिति परत्वाभावः । उपाधेरपि पौर्वापर्यस्य लौकिके प्रयोगे नियमाभावात् स्थितस्यैव च परत्वस्य शास्त्रेणानुवादाच्छास्त्रस्य विधायकत्वाभावादनुवादकत्वादर्थस्य चोपाधित्वात्तस्य च परत्वासंभवात्परत्वाभावः । आद्युदात्तत्वमपि न भविष्यति । यथास्वंलक्षणेन तेषां स्वरस्य विहि-

षामपि प्रत्ययसंज्ञा स्यात् परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधयः प्रसज्येरन्। अत उत्तरं पठति। प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः *। अधिकारेणापि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेधः। अनर्थकः प्रतिषेधो ऽप्रतिषेधः। प्रत्ययसंज्ञा कस्मान्न भवति। निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि *। निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति। किं पुनर्निमित्तम्। को वा निमित्ती प्रकृत्युपपदोपाधयो निमित्तं प्रत्ययो निमित्ती। अन्यत्रापि चैष न्यायो दृष्टः नावश्यमिहैव। क्वान्यत्र। लोके। तद्यथा। बहुष्वासीनेषु कश्चित्कं चित्पृच्छति कतरो देवदत्तः कतमो यज्ञदत्त इति। स आह योऽश्वे यः पीठ इति। योऽश्वे यः पीठ इत्युक्ते निमित्तस्य निमित्तिकार्यार्थत्वादध्यवस्यति। अयं देवदत्तो ऽयं यज्ञदत्त इति। नेदानीमश्वस्य पीठस्य वा देवदत्त इति संज्ञा भवति। किं पुनर्निमित्तं को वा निमित्ती। निर्ज्ञातोऽर्थो निमित्तम्। अनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययः अनिर्ज्ञातः प्रकृत्युपपदोपाधयो निर्ज्ञाताः। क्व। धातूपदेशे प्रातिपदिकोपदेशे च। ते निर्ज्ञाता निमित्तत्वेनाश्रीयन्ते। प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् *। अथ वा प्रधाने कार्यसंप्रत्ययो भवति। किं च प्रधानम्। प्रत्ययः। तद्यथा। बहुषु यात्सु कश्चित्कं चित् पृच्छति। को यातीति। स आह। राजेति राजे-

---

त्वात्। अङ्गसंज्ञा च विधानप्रतिबद्धा न च प्रकृत्यादयः कुतश्चिद्विहिता इति तेषु परतस्सा नान्यस्य भविष्यतीति प्रश्नः। परत्वमिति। प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात् शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य। उपपदस्यापि परत्वादुपसर्जनं पूर्वमित्येतद्राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात्। भोक्तुं व्रजतीत्येव च नित्यं स्याद् न तु व्रजति भोक्तुमिति। उपाधिवाचिनापि प्रयोगानियमे प्राप्ते परश्चेति नियमः स्यात्। यः प्रत्ययस्स पर इति परिभाषणात् आद्युदात्तत्वमपि स्वरान्तरं बाधित्वा स्यात्। अङ्गसंज्ञेति। ननु विधानप्रतिबद्धाङ्गसंज्ञा, न चेह प्रकृत्यादयो विधीयन्ते। नैष दोषः। सिद्धशब्दान्वाख्यानाय तेषामपि शास्त्रेण विधानात् परत्वेन च पूर्वस्यावधेराक्षेपात् ननु पूर्वाक्षेपेपि परत्वे तस्माद्विधिर्नास्तीत्यङ्गसंज्ञा न भविष्यतीति चिन्त्यमेतत्। निमित्तस्येति। प्रकृत्यादीनां भूतविभक्त्या निर्देशात् सनाद्युत्पत्तौ निमित्तभावेनोपादानात् पारार्थ्यात् स्वसंस्कारं प्रति प्रयोजकत्वाभावादित्यर्थः। तत्र वाक्यभेदेनापि विधीयमाना प्रत्ययसंज्ञा सनादिभिरेव संबद्ध्यते तेषामेव निमित्तित्वात्तां प्रति प्रयोजकत्वात्। संज्ञासंबन्धप्रतिपत्तियोग्यविभक्तिनिर्देशाद् द्वयोश्च परस्पराकाङ्क्षायां संबन्धः न त्वन्यतराकाङ्क्षायां सीतारावणयोरिवेति सत्यामपि संज्ञाया आकाङ्क्षायां प्रकृत्यादीनां विशेषणत्वादनाकाङ्क्षत्वात् संज्ञासंबन्धाभाव इत्युक्तं भवति। किं पुनरिति। नित्यत्वाच्छब्दानां निमित्तनिमित्तिभावो नोपपद्यत इति प्रश्नः। प्रकृतीति। प्रतिपादकानां शब्दानामुपायभावेन शास्त्रेण व्यवस्थापनात्तदनुगुणविभक्तिनिर्देशादस्ति निमित्तनिमित्तिभावः। कतर इति। किं यत्तदोर्निर्धारणे द्वयोरेकस्य

त्युक्ते प्रधाने कार्यसंप्रत्ययाद्यः पृच्छति यश्च कथयति उभयोः संप्रत्ययो भवति। किं कृतं पुनः प्राधान्यम्। अर्थकृतम्। यथा पुनर्लोकेऽर्थकृतं प्राधान्यम्। शब्दस्येदानीं किंकृतं प्राधान्यम्। शब्दस्यापूर्वोपदेशः प्राधान्यम्। यस्यापूर्वोपदेशः स प्रधानम्। प्रकृत्युपपदोपाधयश्च निर्दिष्टाः। क। धातूपदेशे प्रातिपदिकोपदेशे च। यद्येव निमित्तस्य निमित्तिकार्यार्थत्वात् यद्वा प्रधाने कार्यसंप्रत्ययात्प्रकृत्युपपदोपाधीनां न भवति। विकारागमानां तु प्राप्नोति। हनस्त च। त्रपुजतुनोः षुक्। एतेषां ह्यपूर्वोपदेशात्प्राधान्यं निमित्तिनश्चैवैते। विकारागमेषु च परविज्ञानात् *। विकारागमेषु च परविज्ञानात् प्रत्ययसंज्ञा न भविष्यति। प्रत्ययः परो भवतीत्युच्यते। न च विकारागमाः परे संभवन्ति। किं पुनः कारणं समाने अपूर्वोपदेशे प्रत्ययः परो न विकारागमाः परे। षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् *। षष्ठीनिर्दिष्टं विकारागमयुक्तं भवति। पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते। प्रत्ययविधानानुपपत्तिस्तु *। प्रत्ययविधिस्तु नोपपद्यते। क। यत्र विकारागमाः

---

डतरच् वा बहूनां जातिपरिप्रश्ने डतमजिति सूत्रद्वयउपाधिप्रत्याख्यानाद् बहूनामप्येकस्य निर्धारणे कतरशब्दः प्रयुक्तः। प्रधान इति। प्रत्ययसंज्ञा स्वविषयप्रकल्पने प्रधानमपेक्षते न तु पारतन्त्र्यादप्रधानमित्यर्थः। किं कृतमिति। भवतु राज्ञः प्राधान्यं तदधीनस्थितित्वादन्येषामिह तु कथमिति प्रश्नः। अर्थकृतमिति। प्रयोजनकृतमित्यर्थः। यस्यापूर्व इति तदर्थत्वादन्येषां तस्यैव प्राधान्यमित्यर्थः। यद्येवेति। ननु ये तावत् प्रकृतेर्विकारागमास्ते प्रकृत्यनुप्रवेशात्प्रकृतिवत् संज्ञया न संभन्त्स्यन्ते। ये तु प्रत्ययस्य ते तद्ग्रहणेन गृह्यन्तएवेति नास्त्यनिष्टप्रसङ्गः। नैतदस्ति। प्रकृतिविकारागमानां तत्सम्बन्धित्वेपि प्रयोजकत्वात् प्रधानत्वाच्च स्यादेव प्रत्ययसंज्ञा। प्रत्ययसम्बन्धिनामपि तदवयवत्वे सिद्धे पृथक् प्रत्ययसंज्ञा स्यादेव योग्यतासम्भवात्। विकारागमेष्विति। यः परः स प्रत्ययः न च विकारागमाः परे। तेन ते प्रत्ययसंज्ञा न भविष्यन्तीत्येवं न व्याख्येयम्। न हि परत्वनिमित्ता प्रत्ययसंज्ञा अपि तु प्रत्ययसंज्ञानिमित्तं परत्वम्। तथा च परत्वाभावेऽपि श्नम्बहुजकचां प्रत्ययसंज्ञा भवति। तस्मादेवं व्याख्यायते। प्रयोजनाभावाद्विकारागमानां प्रत्ययसंज्ञा न भवति। तथा हि। परविज्ञानं प्रत्ययसंज्ञाफलम्। तत् तेषां न सम्भवति। षष्ठ्या स्थानसम्बन्धस्यावयवसम्बन्धस्य च प्रतिपादनादागमानां चानुदात्तत्वेन भवितव्यमित्याद्युदात्तत्वाभावः। विकारा अपि येऽनच्कास्ते न स्वरभाजः ये तु साच्कास्ते प्रवृत्तिकालपक्षान्तरङ्गत्वात् स्थानिस्वरयुक्ताः। अङ्गसंज्ञापि तन्निमित्तान्यस्य न प्राप्नोति। सा हि प्रत्ययविधानपरत्वनिबद्धा। प्रयोजनाभावे तु श्नम आगमत्वेऽपि शकारस्येत्संज्ञार्थं प्रत्ययसंज्ञा प्रवर्तत एव। परविज्ञानादिति। विभाषा गुण इति हेतौ पञ्चमी फलमपि प्रयोजकत्वाद्धेतुरित्युच्यते। यथाध्ययनेन वसतीति। तत्रायमर्थः। प्रत्ययसंज्ञायां परत्वं फलम्। तच्चात्र न संभवतीति प्रत्ययसंज्ञा प्रयोजनाभावान्न भविष्यति। किं पुनरिति। परत्वमेव भवतु प्रत्ययसंज्ञाप्रयोजनमिति भावः। षष्ठीनिर्दिष्टस्येति। षष्ठ्या च पूर्वोदितस्य सम्बन्धस्य प्रतिपादनाद्विरोधात् परस्याभाव

शिष्यन्ते । हनस्त च । त्रपुजतुनोः षुक् इति । किं पुनः कारणं न सिध्यति । विकारागमयुक्तत्वात् । अपञ्चमीनिर्दिष्टत्वाच्च । तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् * । तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः । न कर्तव्यः । इह तावद्धनस्तचेति धातोरिति वर्तते । त्रपुजतुनोः षुक् इति प्रातिपदिकादिति वर्तते । यद्येवं हनस्त च धातोः क्यप् भवतीति धातुमात्रात् क्यप् प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न धातुमात्रात् क्यप् भवतीति । यदयमेतिस्तुशास्वृदृजुषः क्यबिति परिगणनं करोति । अथ वा हन्तिरेवात्र धातुग्रहणेनाभिसंभन्त्स्यते । हन्तेस्तो भवति धातोः क्यप् भवतीति, कस्माद्धन्तेरिति । अर्थाश्रयत्वाद्वा * । अथ वा अर्थाश्रयः प्रत्ययविधिः यः स्वमर्थं प्रत्याययति स प्रत्ययः । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । प्रत्यय इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् । अन्वर्थसंज्ञा यथा विज्ञायेत । प्रत्याययतीति प्रत्ययः । यदि प्रत्याययतीति प्रत्ययः अविकादीनां प्रत्ययसंज्ञा न प्राप्नोति । न हि ते किंचित्प्रत्याययन्ति । एवं तर्हि

इत्यर्थः । पञ्चमीनिर्दिष्टाच्चेति । पञ्चमीनिर्देशे पर्यायेण पूर्वपरत्वयोः प्राप्तयोः परश्चेत्यनेन परत्वं नियम्यतइति नास्ति कश्चिद्विरोध इत्यर्थः । प्रत्ययेति । षष्ठीनिर्देशेष्वितिभावः । क्वेति । णापांष्ठगित्यादावानन्तर्यसंबन्धे षष्ठीविज्ञानादुपपद्यतएव प्रत्ययविधिरिति प्रश्नः । हनस्त चेति । श्रुतयोरेव स्थान्यादेशयोरागमागमिनोश्च सम्बन्धप्रतिपादने वाक्यस्योपयोगाद्वाक्यान्तराभावाच्च प्रत्ययविधिर्न प्रकल्पतइत्यर्थः । इह तावदिति । प्रकृतिप्रत्ययानुवृत्तिसामर्थ्यात् प्रत्ययोऽपि विधास्यते विकारागमा अपीत्यर्थः । यद्येवमिति । हन्तेरादेशविधावुपयोगाद्विविभक्तित्वाच्च धातोरविशेषितत्वादिति भावः । अथ वेति । पूर्वलिङ्गेन धातुश्रुतिर्हन्तावुपसंहृता । इदानीं वाक्यभेदेन सन्निधानाद्धन्तिस्तकारसम्बन्धं च प्रतिपद्यते धातुश्च विशिनष्टीत्युच्यते । अर्थाश्रयत्वाद्वेति । अन्वर्थसंज्ञाश्रयेणार्थवतः संज्ञाविधानाद्विकारागमानाञ्चानर्थकत्वात् प्रत्ययसंज्ञा न भवतीत्यर्थः । किं वक्तव्यमिति । पूर्वाचार्यपरित्यागेन स्वरूपेणैव संज्ञात्वं संज्ञाशब्दा अनुभवन्तीति प्रत्यायकः प्रत्यय इत्येवं वक्तव्यमिति मत्वा प्रश्नः । महतीति । महत्त्वात् प्रत्ययशब्दस्यावृत्तिरनुमीयते । तेन यः प्रत्यायकस्स प्रत्ययः । महत्त्वसूचितं प्रकारान्तरमपि यत्र भवति तत्सर्वादिसूत्रे व्याख्यातं तत एवावधारणीयम् । न हि तइति । अन्वयव्यतिरेकाभ्यां कादीनां वाच्योऽर्थो नावधार्यते । तदभावेपि केवलाया एव प्रकृतेस्तदर्थावगमात् । नापि तरबादिवत्काश्चिद् द्योत्योऽर्थ इति भावः । यदप्युच्यते अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति प्रकृत्यर्थ एव तेषामर्थ इति । तदपि कल्पनामात्रम् । सत्यर्थवत्त्वे प्रत्ययसंज्ञया भाव्यमिति अभिहिते तदभावे स्वार्थावगमादर्थवत्त्वं कादीनां नोपपद्यतइत्युक्तस्य दुरुत्तरत्वात् । प्रत्याय्यतइति । अभिधेयधर्मस्याभिधानउपचारादेवमुक्तम् । अयमत्रार्थः यस्यार्थः प्रकृत्या प्रत्याय्यमानार्थत्वात् प्रत्याय्यमानः स्वार्थिकः प्रत्ययसंज्ञो भवति । एवमपीति । न हीच्छाद्यर्थे विधीयमानाः सनादयः प्रकृत्या प्रत्याय्यमानार्थाः

प्रत्याय्यत इति प्रत्ययः । एवमपि सन्नादीनां न प्राप्नोति । एवं तर्ह्युभयसाधनोयम् । कर्तृसाधनः कर्मसाधनश्च । एवमसि कुत एतत् समाने अपूर्वोपदेशे त्रापुषं जातुषमित्यत्राकारस्तमर्थं प्रत्याययति न पुनः षकार इति । अन्यत्राप्यकारेण तस्यार्थस्य प्रत्यायनान्मन्यामहे अकारस्तमर्थं प्रत्याययति न पुनः षकार इति । क्वान्यत्र । बिल्वादिभ्योण् । बैल्वः ॥

परश्च ॥ २ ॥ किमर्थमिदमुच्यते । परोयं यथा स्यात् पूर्वो मा भूदिति । नैतदस्ति प्रयोजनम् । यमिच्छति पूर्वं, माह तं विभाषा सुपो बहुच् पुरस्तादिति । मध्ये तर्हि मा भूदिति । मध्येपि यमिच्छाति आह तमव्ययसर्वनाम्नामकच् प्राक् टेरिति । य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं पर एव भविष्यतीति नार्थः परवचनेन । एवमपि येषामेव प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युः । य इदानीमनियतदेशः स कदा चित्पूर्वः कदा चिन्मध्ये स्यात् । तद्यथा । मातुर्वत्सः कदा चिदग्रतः कदा चित्पृष्ठतः कदा चित्पार्श्वतो भवति । पर एव यथा स्यादित्येवमर्थं परवचनम् । परवचनमनर्थकं पञ्चमीनिर्दिष्टाद्धि परस्य * । परग्रहणमनर्थकम् । किं कारणम् ।

इति भावः । यो गुपादिसन् स प्रकृत्या प्रत्याय्यमानार्थ इतीच्छासनेघात्राभिप्रेतः । एवन्तर्हीति । एक एव शब्दोनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्तद्वयोधिक्रियते । तत्र यथासम्भवं निमित्ताश्रयणेन सनादीनां कादीनां च प्रत्ययसंज्ञा प्रवर्तते । ण्यन्तस्य निपातनादचि णिलुक् । एवमपीति । आगमस्यार्थवत्त्वं निराकर्तुमुपन्यासः । अन्यत्रापीति । । प्रत्ययस्यागममन्तरेणापि प्रयोगादर्थवत्तावगतिः । आगमस्य तु प्रत्ययमन्तरेण प्रयोगाभावादन्वयव्यतिरेकाभ्यामर्थवत्त्वं नावधार्यतइत्यर्थः ॥ १ ॥

परश्च ॥ किमर्थमिति पञ्चमीनिर्देशे परशब्दाध्याहारेण पञ्चमीविधानात् परत्वं सिद्धम् । षष्ठीनिर्देशेपि गापोष्टगित्यादावानन्तर्यसंबन्धे षष्ठीविधानादिति भावः । पर इति । पूर्वशब्दाध्याहारेणापि पञ्चमीविधानात् पूर्वत्वमपि स्यादिति नियमार्थं परवचनम् । तथानन्तर्यस्य पूर्वत्वेऽपि भावात् षष्ठीनिर्देशेपि नियमार्थमित्यर्थः । यमिच्छतीति । बहुजेव पुरस्ताद्भवति नान्यः प्रत्यय इति बहुचि पूर्वदेशस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यतीत्यर्थः । मध्ये तर्हीति । षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेणापि षष्ठीविधानं स्यादिति भावः । मध्येपीति । अव्ययसर्वनाम्नामिति मध्यशब्दाध्याहारेण षष्ठीविधानादकच् प्राक् टेः सिद्ध एवेति प्राक्टेरिति नियमार्थम् । अकजेव प्रकृतिमध्ये भवति नान्य इति । मध्यमात्रपरिग्रहेण च नियमो विज्ञायते न त्वकजेव प्राक् टेरित्येवं मध्यविशेषाश्रयेण । अन्यथा मध्यान्तरे प्रत्ययान्तरं स्यात् । मध्यविशेषे तु यन्मध्यसामान्यमस्ति तदाश्रयेण नियमे विज्ञायमाने नास्ति दोषः । एवमपीति । बहुजकचोर्विधेयतया प्राधान्यात्तावेव देशविशेषे नियम्ययाताम् । पुरस्तादेव बहुच् प्राक् टेरेवाकजित्येवमिति भावः । देशो नियम्यतइति । प्रत्ययनियमेप्यनियतदेशप्रसङ्गं विशिष्टदेशप्रतिपादनमेव देशनियम इत्यभिप्रेत्यैतदुक्तम् । मातुर्वत्स इति । अनेन प्रकृतेः कार्यशब्ददर्शने मातृस्थानीयत्वमुच्यते ।

पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते। तद्यथा। द्व्यन्तरुपसर्गेभ्यो ऽप ईदिति। विषम उपन्यासः। सतस्तत्र परस्य कार्यमुच्यते। इहेदानीं कस्य सतः परस्य कार्यं भवितुमर्हति। इहापि सत एव। कथम्। स्वाभाविकं परत्वम्। अथ वाचनिके परत्वे सति परग्रहणे नार्थः स्यात्। वाचनिके च नार्थः। एतद्धि परस्य कार्यम्। यदसौ परः स्यात्। अथ वा यदस्य परस्य सतः संज्ञा स्यात्। यत्र तर्हि पञ्चमी नास्ति तदर्थमयं योगो वक्तव्यः। क्व च पञ्चमी नास्ति। यत्र विकारागमाः शिष्यन्ते। क्व च विकारागमाः शिष्यन्ते। हनस्त च त्रपुजतुनोः षुक् इति। विकारागमेषु चोक्तम्। किमुक्तम्। प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धमिति। असन्तापरदृष्टानां वा परभूतलोपार्थम् * असन्तापरदृष्टानां तर्हि परभूतलोपार्थं परग्रहणं कर्तव्यम्। य एते ऽसन्तापरदृष्टाः क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यात् अपरभूतानां मा भूदिति। किं पुनरत्यन्तापरदृष्टानां परभूतलोपवचने प्रयोजनम्। किति णितीति कार्या-

---

परवचनमिति। तस्मादित्युत्तरस्येत्यनेनैव नियमस्य सिद्धत्वादिति भावः। सतस्तत्रेति। यत्र विद्यमानमेव कार्यान्तरविधानार्थं कार्यित्वेन निर्दिश्यते तत्र तस्मादिति परिभाषा नियमार्थावतिष्ठते। अत्र तु सनादयो ऽपूर्वा एवोत्पद्यन्तइति न तस्याः परिभाषायाः प्रवृत्तिरिति भावः। कस्य सत इति। असन्नेव सनादिर्भाव्यत इति भावः। इहापीति। नित्याः शब्दाः प्रयोगस्थास्तत्र स्वभावत एव गुपादिभ्यः परस्य सनादेः साधुत्वमात्रं प्रतिपाद्यत इत्यर्थः। एतद्धीति। तस्मादित्युत्तरस्येत्येतस्य प्रदेशेषु अर्थाभिव्यक्तिर्भवति। ततश्च यत्र सदेव कार्यित्वेनोपादीयते तत्रोत्तरस्य कार्यं भवतीति कार्यापेक्षासंबन्धे षष्ठी। यत्र त्वसत एवोत्पत्तिः क्रियते तत्रोत्तरस्य भावो भवतीति भावापेक्षया कर्तुः षष्ठी विज्ञायत इत्यर्थः। परस्य कार्यमिति। उत्पत्तिरेव कार्यमित्यर्थः। नन्वेवं सति सन्नित्यादिप्रथमानिर्देशः षष्ठीप्रकल्पने सति निरर्थकोऽकृतार्थत्वात् स्यात्। नैष दोषः। निर्देशमात्रार्था प्रथमा स्यात्। उत्तरकालन्तु षष्ठी प्रकल्पते यत्त्वन्यत्रोच्यते न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका इति तदस्मिन् सूत्रे स्थित इति द्रष्टव्यम्। अथ वेति। अयमर्थः। उत्पत्तिः सनादेरनियतदेशा भवतु। पश्चात्तु सत एव परस्य यत् कृत् कृत्यप्रत्ययादिसंज्ञाशास्त्रकं यं विधीयते तन्नान्यदेशस्य। यद्देशस्य च शास्त्रीयं कार्यं तद्देशस्यैव साधुत्वात् प्रयोगो भविष्यतीत्यर्थः। विकारागमेष्विति। तदेवेहाप्यनुगन्तव्यमित्यर्थः। गापोष्टगित्यादौ धातोरित्यधिकाराद् धातोः परष्टग् भवति। गापोस्त्वनन्तर इति व्याख्येयम्। अत्यन्तापरदृष्टानां वेति। वाशब्दस्तदर्थोपरेण प्रधानेन प्रमाणेन प्रत्यक्षेण न क्वचिद्दृष्टा ये क्विबादयः तेषां नित्यशब्ददर्शने कार्यदर्शने वा सत्ताया अभावात्तस्मादित्युत्तरस्येत्यस्योपस्थानाभावादनियतदेशो लोपः स्यादिति परभूतलोपार्थमेतद्वचनम्। अस्मिन् हि सति क्विबादयः परभूता लुप्यन्त इति बुद्धिरुपजायते। तत्राग्निचिदित्यादौ प्रत्ययलक्षणेन परभूतप्रत्ययाश्रयास्तुगादयः सिद्ध्यन्ति न तु पूर्वभूतक्विबादिलोपे इति भावः। ननु कार्यदर्शने उत्तरस्य भाव इत्येव व्याख्यातत्वात्परभूता-

णि यथास्युरिति । एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति असन्तापरदृष्टाः परभूता एव लुप्यन्त इति । यदयं तेषु कादीननुबन्धानासजति । कथं कृत्वा ज्ञापकम् । अनुबन्धासञ्जने एतत्प्रयोजनम् । किति णितीति कार्याणि यथा स्युरिति । यदि चासन्तापरदृष्टाः परभूता लुप्यन्ते । ततोऽनुबन्धासञ्जनमर्थवद् भवति । प्रयोगनियमार्थं वा । प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम् । परभूतानां प्रयोगो यथा स्यात् । अपरभूतानां मा भूदिति । अस्ति पुनः किंचिदनिष्टं दृश्यते यदर्थो नियमः स्यात् । अस्तीत्याह । प्रकृतेरर्थाभिधाने ऽप्रत्यय-दर्शनात् * । प्रकृतिरर्थाभिधाने अप्रत्ययिका दृश्यते । क्व स देवदत्तः क्व स यज्ञदत्तः बभ्रुः मण्डुः लमक इति । बाभ्रव्यो माण्डव्यो लामकायन इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति प्रयुज्यते । द्वयसादीनां च केवलदृष्टत्वात् * । द्वयसादीनां च केवलानां प्रयोगो दृश्यते । किमस्य द्वयसं किमस्य मात्रं काद्यतिथीति । द्वयसजादयो वृत्तिजसदृशाः अवृत्तिजाः यथा बहुस्तथा । वावचने चानुत्पत्त्यर्थम् * ।

---

क्विबादयो भविष्यन्ति । नैतदस्ति । न हि तेषु भावबुद्धिरस्ति । लोपविधानेनाभावबुद्धेरुत्पादात् । स्वरूपलाभो हि भावः नैते कदाचित्स्वरूपत्वं लभन्ते शशविषाणतुल्यत्वात् । अत एवात्यन्तापरदृष्टानामित्युक्तम् । केवलं प्रत्ययलोपवचनेन कार्यमात्रं तेषामत्यन्तासत्त्वे ऽपि विधीयते । यदयमिति । यदि पूर्वभूता लुप्येरन् तदानुबन्धासङ्गो-ऽनर्थकः स्यात् । सर्वस्यानुबन्धकार्यस्य परभूतप्रत्ययाश्रयत्वात् । नन्वनियतदेशत्वे ऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति केचिदाहुः । तदयुक्तम् । एवं पक्षे ऽनुबन्धासङ्गस्यानर्थक्यमभ्युपगतं स्यात् । स्पृशोऽनुदक इत्यादौ च सकृत्पञ्चमी श्रुता सा किं पूर्वशब्दाध्याहारेण भवत्यथ परशब्दाध्याहारेणेति संदेहे पूर्वशब्दाध्याहारेण पञ्चम्यां सत्यामानर्थक्यमेवानुबन्धासङ्गस्येति कथं परभूतलोपे ऽनुबन्धासङ्गो न लिङ्गं स्यादिति भाष्यविद आहुः । प्रयोगनियमार्थं वेति । पूर्वे प्रयोजनं स्थितमिति वार्त्तिककारेण विकल्पार्थो वाशब्दः पठितः । भाष्यकारेण तु लिङ्गेन पूर्वप्रयोजनस्य निराकरणात्तदर्थे व्याख्यातः । क्व स देवदत्त इति । देवदत्तादयस्तदपत्येषु वर्तमाना दृश्यन्ते तेषामनेन नियमेनासाधुत्वं प्रतिपाद्यते । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः प्रयोक्तव्य इति । ननु सोयमित्यभिसंबन्धादभेदोपचारादपत्ये प्रयोगात् कथमसाधुत्वम् । नैतदस्ति । भृत्यादेरपि साहचर्य्यादिनिमित्ताभेदाध्यारोपदर्शनादपत्यार्थो नियमेन न प्रतीयते । तदुक्तं हरिणा । सोयमित्यभिसंबन्धात्तद्धितेन विना यदि । बभ्र्वादयः प्रयुज्येरन्नपत्ये नियमो भवेदिति ॥ तस्मादभेदोपचाराद्विनाऽपत्यविवक्षायां गर्गा इति बहुवचनान्तवदेकवचनान्ता बाभ्रवयो मा प्रयुक्षतेति नियमार्थं वचनम् । क्व स देवदत्त इत्यत्र केचिदाहुः । क्व स इति यथा सुपो लुग्लोपयोः कृतयोः केवला प्रकृतिः प्रयुज्यमाना दृश्यते । तथा बभ्र्वादयोपीति दृष्टान्तोपन्यासः । किमस्य द्वयसमिति । किमस्य प्रमाणमित्यत्रार्थे ऽयं प्रयोगो दृश्यते तत्र गार्ग्यादिवदेवमादीनामनेनासाधुत्वं प्रतिपाद्यते । काद्यतिथीति । काद्यादिसंख्यायाः

वावचने चानुत्पत्त्यर्थं परग्रहणं कर्तव्यम् । वावचने चानुत्पत्तिर्यथा स्यात् । अथ क्रियमाणेपि वै परग्रहणे कथमिव वावचनेनानुत्पत्तिर्लभ्या । क्रियमाणे परग्रहणे वावचने वा पर इत्येतदभिसंबध्यते । अक्रियमाणे परग्रहणे वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । वावचने चोक्तम् * । किमुक्तम् । वावचनानर्थक्यं च तत्र नित्यत्वात्सन इति । प्रयोगनियमार्थमेव तर्हि परग्रहणं कर्तव्यम् । अथैतस्मिन् प्रयोगनियमार्थे क्रियमाणे प्रत्ययनियमः प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः अप्रकृतिपरो नेति । आहो स्वित्प्रकृतिनियमः प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या अप्रत्ययपरा नेति । कश्चात्र विशेषः । तत्र प्रत्ययनियमे प्रकृतिनियमाभावः * । तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति । अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति । क्व स देवदत्तः क्व स यज्ञदत्तः बभ्रुः मण्डुर्लमक इति । अस्तु तर्हि प्रकृतिनियमः । प्रकृतिनियमे प्रत्ययानियमः * । प्रकृतिनियमे सति प्रत्ययनियमो न प्राप्नोति । किमस्य द्वयसं किमस्य मात्रं कादयतिथीति । अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति । सिद्धं तूभयनियमात् * । सिद्धमेतत् । कथम् । उभयनियमात् । उभयनियमोयं प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । परग्रहणसामर्थ्यादन्तरेणापि परग्रहणं स्यादेवायं परः । पर एव स्यादित्येवमर्थं परग्रहणम् ॥

---

पूरणीत्यर्थः । बहुतिथीत्यादौ च तिथीशब्दमुपलभ्य भ्रान्त्या केवलमपि प्रयुञ्जते यस्तु तिथीशब्दान्ङीपि कृते तिथीशब्दः स साधुरेव । द्वयसजादय इति । अवृत्तिजा अपि भ्रान्त्या केवला लोके प्रयुज्यमाना दृश्यन्त इत्यर्थः । यथा बहुरिति । ईषदसमाप्तौ यो बहुच्प्रत्ययस्तत्सदृशो बहुशब्दस्संख्यावैपुल्यवाची यथा लोके प्रयुज्यते तथा द्वयसजादयोपीति के चिद्व्याचक्षते । अन्ये त्वाहुः । केवल एवेषदसमाप्तौ यो बहुशब्दो लोके प्रयुज्यते स दृष्टान्तो साधुत्वे द्वयसजादीनामुपात्तः । वावचने चेति । तस्मादित्युत्तरस्येत्येव प्रत्ययस्य सिद्धं परत्वे पुनः परवचनं वावचनेन प्रत्ययस्य पक्षेऽनुत्पत्तिं प्रतिपादयति । वा परः सन् भवति परत्वोपलक्षितस्सन् पक्षे भवति । पक्षे तु नैवोत्पद्यत इत्यर्थः । न त्वत्र परत्वं विकल्प्यते । पक्षे पूर्वो भवतीति । परत्वस्य प्रयोगे नियतत्वात् तस्मादिति वचनाद्वा नियतत्वात् । अक्रियमाण इति । प्रतियोगं प्रत्ययसंज्ञोपस्थानात्तस्या एव विकल्पः स्यात् । कृते त्वस्मिन् पराधिकारे प्रतियोगमुपस्थिते परो वा भवति परत्वोपलक्षितः पक्षे भवति पक्षे नैव भवतीत्यर्थः संपद्यते । नित्यत्वात्सन इति । वृत्तिपक्षे नित्यं एव सन्निष्यते कर्तुमिच्छतीत्यवृत्तिपक्षे नैव सन उत्पत्तिः प्राप्नोतीति । प्रत्याख्याते वावचने प्रयोगनियमार्थमिदम् । सिद्धं तस्मादिति वचनात् परत्वं नित्यं परः प्रत्ययो यथा स्याद् मा कदा चित्परो न प्रयोजि इत्येवं सामर्थ्यादुभयनियमलाभः ॥२॥

आद्युदात्तश्च॥३॥किमर्थमिदमुच्यते। आद्युदात्तो यथा स्यात्। अन्तोदात्तो मा भूदिति। नैतदस्ति प्रयोजनम्। यमिच्छत्यन्तोदात्तं करोति तत्र चकारमनुबन्धम्। आह च चितोन्तोदात्त इति। मध्योदात्तस्तर्हि मा भूदिति। मध्योदात्तमपि यमिच्छति तत्र रेफमनुबन्धं करोति। आह चोपोत्तमं रितीति। अनुदात्तस्तर्हि मा भूदिति। अनुदात्तमपि यमिच्छति तत्र पकारमनुबन्धं करोति। आह च अनुदात्तौ सुप्पितावीति। स्वरितस्तर्हि मा भूदिति। स्वरितमपि यमिच्छति करोति तत्र तकारमनुबन्धम्। आह च तित्स्वरितमिति। य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेणापि वचनमाद्युदात्त एव भविष्यतीति नार्थ आद्युदात्तवचनेन। एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव नियतस्वराः स्युः य इदानीमनियतस्वरः स कदा चिदाद्युदात्तः कदा चिदन्तोदात्तः कदा चिन्मध्योदात्तः कदा चिदनुदात्तः कदा चित्स्वरितः स्यात्। आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते। अथ किमर्थं प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वमनुदात्तत्वं चोच्यते। न यत्रैवान्यः स्वरः तत्रैवायमप्युच्येत ञ्नित्यादिर्नित्यम्। प्रत्ययस्य च। अदुपदेशाल्लसार्वधातुकमनुदात्तम्। सुप्पितौ चेति। तत्रायमप्यर्थः। द्विराद्युदात्तग्रहणं द्विश्चानुदात्तग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। अत उत्तरं पठति। आद्युदात्तस्य प्रत्ययसंज्ञासन्नियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम् *। आद्युदात्तस्य प्रत्ययसंज्ञासंनियोगकरण एतत् प्रयोजनं यस्य संज्ञा क्रियते तस्याद्युदात्तत्वं यथा स्यात्। असन्नियोगे हि यस्मात्स विहितस्तदादेराद्युदात्तत्वं तदन्तस्य चानुदात्तत्वम्। अक्रियमाणे हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति तदादेरेवाद्युदात्तत्वं प्रसज्येत तदन्तस्य चानुदात्तत्वम्। अथ क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वं अनुदात्तत्वे च कस्मादेव तदादेराद्युदात्तत्वं न भवति तदन्तस्य वानुदात्तत्वम्। उत्पन्नः प्रत्ययः प्रत्ययाश्रयाणां कार्याणां निमित्तं भवति नोत्पद्यमानः। तद्यथा। कृतो घटो घटाश्रयाणां कार्याणां निमित्तं भवति न क्रियमाणः। न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादिरग्रहणस्य *। न वैष दोषः। किं कारणम्। यदयं ञ्नित्यादिर्नित्यमिति प्रकृतेराद्युदात्तत्वं शास्ति। तज् ज्ञापयत्याचार्यः न तदादेराद्युदात्तत्वं भव-

---

आद्युदात्तश्च॥ अस्वरकस्याच उच्चारणाभावात् स्वरान्तरस्य प्रत्ययान्तरेषु नियतत्वात्पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यतीति मत्वा प्रश्नः। किमर्थमिति। येषामेवेति। षिदादीनामनियतस्वरप्राप्तावन्योदात्त एव चिदित्येवं नियमात्तेषामेव नियतस्वरत्वं स्यात्। अन्येषां त्वनियतस्वरप्रसङ्ग इत्यर्थः। प्रत्ययाश्रयाणामिति। तदन्तग्रहणादीनामित्यर्थः। आद्युदात्तश्चेत्यस्य तु प्रतियोगमुपस्थानं सत्युत्पद्यमान एव तव्यादिराद्यु-

तीति। तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति। प्रकृतिस्वरस्य विधानसामर्थ्याद् प्रत्ययस्वराभावः॥ यद्वयं धातोरन्तः प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः न तदन्तस्यानुदात्तत्वं भवतीति। कथं कृत्वा ज्ञापकम्। यत्र ह्यनुदात्तः प्रत्ययः प्रकृतिस्वरस्तत्र प्रयोजयति। आगमानुदात्तार्थं वा॥ आगमानुदात्तार्थं तर्हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते आगमा अनुदात्ता यथा स्युरिति। न वागमानुदात्तवचनात्॥ न वा एतदपि प्रयोजनमस्ति। किं कारणम्। आगमानुदात्तवचनात्। आगमा अनुदात्ता भवन्तीति वक्ष्यामि। के पुनरागमा अनुदात्तत्वं प्रयोजयन्ति। इट्। लविता। इट् तावन्न प्रयोजयति। इदमिह संप्रधार्यम्। इट् क्रियतामाद्युदात्तत्वमिति। किमत्र कर्तव्यम्। परत्वादिट्। नित्यमाद्युदात्तत्वम्। कृते पीटि प्राप्नोति। अकृते पि प्राप्नोति। इडपि नित्यः। कृतेप्याद्युदात्तत्वे प्राप्नोति अकृतेपि। अनित्य इट्। अन्यथा स्वरस्य कृते आद्युदात्तत्वं प्राप्नोति। अन्यथा स्वरस्याकृते प्राप्नोति। स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति। आद्युदात्तत्वमपि अनित्यम्। अन्यस्य कृते इटि प्राप्नोति। अन्यस्याकृते। शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादिडागमः। अन्तरङ्गं तर्हि आद्युदात्तत्वम्। काऽन्तरङ्गता। उत्पत्तिसन्नियोगेनाद्युदात्तत्वमुच्यते। उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्येडागमः। आद्युदात्तत्वमपि नान्तरङ्गम्। यावता प्रत्यय आश्रिते प्रकृतिरप्याश्रि-

---

दात्तो भवत्येवं तिबादिरनुदात्त इति दोषाभावः। घटाश्रयाणामिति। उदकाहरणादीनामित्यर्थः। यदयमिति। प्रत्ययस्येत्यनेनाद्युदात्तत्वे सिद्धे अनित्यादिर्नित्यमित्यनारम्भणीयं स्याद् यदि तदादेर्ग्रहणं स्यादित्यर्थः। यत्र हीति। यातीत्यादौ पिति प्रत्यये धातोरुदात्तत्वं भवति। यातो यान्तीत्यादौ तु प्रत्ययाद्युदात्तत्वेन सति शिष्टत्वाद् बाध्यते। कृष्णतर इत्यादौ च प्रातिपदिकान्तोदात्तत्वं श्रूयते। यदि च प्रत्ययान्तस्यानुदात्तत्वं स्याद् निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यादित्यर्थः। आस्ते शेत इत्यादौ लसार्वधातुकानुदात्तत्वे सति धातुस्वरस्य सविषयत्वादज्ञापकत्वमिति चेत्। तत्रापि तदन्तविधिप्रसङ्गाद् ज्ञापकत्वमेव। आगमानुदात्तार्थं वेति। वाशब्दस्तदर्थे। लवितव्यमित्यादौ तव्यस्योत्पत्तिकाल एवाद्युदात्तत्वे कृते पश्चादिडागम क्रियमाणः शेषनिघातेनानुदात्तो भवति। अन्यथा परत्वादिडागमे कृते तस्य तद्भक्तत्वात् प्रत्ययग्रहणेन ग्रहणादाद्युदात्तत्वं क्रियमाणमिट एव प्रसज्येतेत्यर्थः। के पुनरिति। अन्योत्र प्रष्टा द्रष्टव्यः न तु येन नवेत्युक्तं स एव पृच्छति विरोधात्। लवितेति। लुट्। तिप्। डा। तासिः। इट्। अत्र यदीटोऽनुदात्तत्वं न स्यात् तदा तासिभक्तत्वादिडुदात्तः स्यात्। शेषनिघातेन च तास्याकारोनुदात्त इत्युदात्तलोपाभावादुदात्तनिवृत्तिस्वर आकारस्य न स्यात्। इटस्त्वनुदात्तत्वे सति तास्याकार एवोदात्त इत्युदात्तनिवृत्तिस्वरः सिध्यति। स्वरभिन्नस्येति। रूपवत् स्वरोपि श्रुतिभेदहेतुत्वात् शब्दान्तरत्वमेव करोतीति भावः। प्रकृतिर-

ता भवति । अन्तरङ्गमेवाद्युदात्तत्वम् । कथमिदानीमेव ह्युक्तं न प्रत्ययस्वरविधौ तदादिविधिर्भवतीति । सीयुट् तर्हि प्रयोजयति । अवचने हि सीयुडादेराद्युदात्तत्वम् * । अक्रियमाणे हि आगमानुदात्तत्वे क्रियमाणेपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येत । लविषीय पविषीय । तर्हि वक्तव्यम् आगमा अनुदात्ता भवन्तीति । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति । आगमा अनुदात्ता भवन्तीति । यदयं यासुट् परस्मैपदेषूदात्तो ङिच्चेत्याह । नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत् । यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति । शक्यमनेनैवं वक्तुं यासुट् परस्मैपदेषु भवति । अपिच्च लिङ् भवतीति । सोयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते । तज् ज्ञापयत्याचार्यः । आगमा अनुदात्ता भवन्तीति । शक्यमेवं लब्धुम् । यद्येव वचनादथापि ज्ञापकाद् आगमा अनुदात्ता भवन्तीति । आगमैस्तु व्यवहितत्वादाद्युदात्तत्वं न प्राप्नोति आगमा अविद्यमानवद्भवन्तीति वक्ष्यामि । यद्यागमा अविद्यमानवद्भवन्तीत्युच्यते । लविता अवादेशो न प्राप्नोति । स्वरविधाविति वक्ष्यामि । एवमपि लविता । उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वं न प्राप्नोति । षाष्ठिके स्वर इति वक्ष्यामि । एवमपि चिन्तितः । निष्ठा च द्व्यजनादिस्येष स्वरः प्राप्नोति । प्रत्ययस्वरविधाविति वक्ष्यामि । तर्हि आगमा अविद्यमानवद्भवन्तीति वक्तव्यम् । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति । आगमा अविद्यमानवद्भवन्तीति । यदयं यासुट् परस्मैपदेषूदात्तो ङिच्चेत्याह । नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत् । यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति । शक्यमनेन वक्तुं यासुट् परस्मैपदेषु भवति अपिच्च लिङ् भवतीति सोयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज् ज्ञापयत्याचार्यः आगमा अविद्यमानवद्भवन्तीति । आद्युदात्तस्य वा लोपार्थम् * । आद्युदात्तस्य तर्हि लोपार्थं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते । प्रत्ययसंज्ञा संनियोगेनाद्युदात्तत्वे कृते

---

त्याश्रितेति । प्रत्ययग्रहणपरिभाषयेति भावः । अन्तरङ्गमेवेति । तत इण् न प्रयोजयतीत्यर्थः । लविषीयेति । आशिषि लिङ् । अत्र विशेषविहितत्वाद्वा पूर्वं सीयुट् क्रियते पश्चाल्लादेशः । तत्र प्रत्ययाद्युदात्तत्वं क्रियमाणं सीयुट एव स्यात् । आगमा अनुदात्ता इति तु वचनात्सीयुटोनुदात्तत्वे सतिइटो दित्यकारस्योदात्तत्वं सिध्यतीत्यर्थः । पिदर्थमिति । चिनुयादित्यादौ पित्भक्तत्वाद्यासुटोनुदात्तत्वप्रसङ्गे उदात्तवचनमित्यज्ञापकमित्यर्थः । आगमैरिति । विच्छिन्नत्वादादित्वस्य लविषीयेत्यादौ प्रत्ययस्याद्युत्तत्वं न प्राप्नोतीत्यर्थः आरब्धे तु सूत्रे प्रत्ययसंज्ञासन्नियोगेन कृते आद्युदात्तत्वे भवन्त्यागमा इति न दोषः । एवमपि लवितेति । तृजन्तत्वादाद्युदात्तमेतत् । यदयमिति । यदि प्रत्ययाद्युदात्तत्वे कर्तव्ये आदित्वमागमा विहन्युः तदा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तन्न कुर्यात् । कृतन्तु प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमानामविद्यमानत्वं ज्ञाप-

लोप उदात्तनिवृत्तिस्वरः सिद्धो भवति । सौघ्नी। माथुरी । अत्र हि परत्वाल्लोपः स्वरं बाधेत । नवा बहिरङ्गलक्षणत्वात् * । न वैतदपि प्रयोजनमस्ति । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणो लोपः । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे । अवश्यं चैषा परिभाषा आश्रयितव्या । अवचने हि ञ्नित्कित्स्वतिप्रसङ्गः * । अक्रियमाणायां ह्यस्यां परिभाषायां क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे ञ्नित्कित्सु अतिप्रसङ्गः स्यात् । औत्सी कंसिकी आत्रेयीति । अत्र हि परत्वाल्लोपो ञिन्नित्कित्स्वरान् बाधेत । नैष दोषः । ञ्नित्कित्स्वराः प्रत्ययस्वरस्यापवादाः । न चापवादविषये उत्सर्गोभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयं तत उत्सर्गोभिनिविशते । न तावदत्र कदाचित्प्रत्ययस्वरो भवति अपवादान् ञ्नित्कित्स्वरान् प्रतीक्षते । कंसिक्यां भूयान् परिहारः । अन्यस्यात्र उदात्तत्वमन्यस्य लोपः । आदेरुदात्तत्वमन्त्यस्य लोपः । इदं तर्हि आत्रेयी परत्वाल्लोपः कित्स्वरं बाधेत । तस्मादेषा परिभाषाश्रयितव्या एतस्यां च सत्यां शक्यं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमवक्तुम् । प्रत्ययाद्युदात्तत्वात् धातोरन्तः * । प्रत्ययाद्युदात्तत्वाद् धातोरन्त इत्येतद्भवति विप्रतिषेधेन । प्रत्ययाद्युदात्तत्वस्यावकाशः यत्रानुदात्ता प्रकृतिः । समत्वम् । सिमत्वम् । धातोरन्त इत्येतस्यावकाशः यत्रानुदात्तः प्रत्ययः पचति पठतीति । इहोभयं प्राप्नोति गोपायति धूपायति । धातोरन्त इत्येतद्भवति विप्रतिषेधेन । पित्स्वरात्तित्स्वरश्चापि * । पित्स्वरात्तित्स्वरश्चापि भवति विप्रतिषेधेन । पित्स्वरस्यावकाशः । पचति पठति । तित्स्वरस्यावकाशः ।

---

यतीत्यर्थः । स्रौघ्नीति । विभज्यान्वाख्याने स्रौघ्न अ ई इति स्थिते प्रत्ययस्य चेत्याद्युदात्तत्वात्परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्त्यभावादुदात्तनिवृत्तिस्वर ईकारस्य न स्यात् । प्रत्ययसंज्ञासन्नियोगेन त्वाद्युदात्तविधाने न दोषः । बहिरङ्गलक्षण इति । स्वार्थादीनां क्रमेण प्रतीतिरिति स्त्रीत्वनिमित्त ईकारो बहिरङ्ग इति तन्निमित्तो लोपो बहिरङ्गः । अथ वाङ्गस्य भस्येत्याद्यपेक्षणाल्लोपो बहिरङ्गः । औत्सीति । उत्से जाता । उत्सादिभ्योऽञ् ङीप् । यद्यत्र परत्वाल्लोप आद्युदात्तत्वं ञिल्लक्षणं बाधेत तदा प्रत्ययस्याद्युदात्तत्वादुदात्तनिवृत्तिस्वर ईकारस्य स्यादेव । कंसिकीति । कंसेन क्रीता । कंसाट्टिठनिति टिठनि ङीपि च ठकारस्याकृत इकादेशे उदात्तत्वं मन्यते । आत्रेयीति । अत्रेरपत्यं स्त्री । इतश्चानिञ इति ढक् । आयनादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति पूर्वमेयादेशः ङीप् । अत्रोदात्तनिवृत्तिस्वरो न स्यात् । अन्तरङ्गत्वे तु स्वरस्याश्रीयमाणे दोषाभावः । कंसिक्यामिति । ठचश्चित्करणात् पूर्वमिकादेशः ततः प्रत्ययांद्युदात्तत्वमिति नास्त्युदात्तलोप इत्यर्थः । कित्स्वरामिति । तत उदात्तनिवृत्तिस्वरो न स्यादित्यर्थः । इदानीं प्रत्ययसंज्ञासन्नियोगेन स्वरविधौ प्रयोजनमाह प्रत्ययाद्युदा-

कार्यं हार्यम् । इहोभयं प्राप्नोति । कार्या हार्या । तित्स्वरो भवति विप्रतिषेधेन । चित्स्वरश्चापि पित्स्वरात् * । पित्स्वराच्चित्स्वरश्चापि भवति विप्रतिषेधेन । चित्स्वरस्यावकाशः । चलनः कम्पनः । पित्स्वरस्य स एव । इहोभयं प्राप्नोति आम्बष्ठ्या सौवीर्या । चित्स्वरो भवति विप्रतिषेधेन । न वाद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात् * । न वार्थो विप्रतिषेधेन । किं कारणम् । आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात् । प्रत्ययसंज्ञा सन्नियोगेनाद्युदात्तत्वे कृते सति शिष्टत्वाद्धातुस्वरो भविष्यति । अयं चाप्ययुक्तो विप्रतिषेधः । पित्स्वरस्य तित्स्वरस्य च । किं कारणम् । टापि स्वरितेनैकादेशः * । टाप्यपि स्वरितेनैकादेशो भविष्यति । इदमिह संप्रधार्यम् । स्वरितत्वं क्रियतामेकादेश इति । किमत्र कर्तव्यम् । परत्वात्स्वरितत्वं नित्य एकादेशः । कृते स्वरितत्वे प्राप्नोत्यकृतेपि । स्वरितत्वमपि नित्यम् । कृतेप्येकादेशे प्राप्नोत्यकृतेपि । अनित्यं स्वरितत्वम् । अन्यस्य कृते एकादेशे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति । एकादेशोप्यनित्यः । अन्यथा स्वरस्य कृते स्वरितत्वे प्राप्नोति अन्यथा स्वरस्याकृते । स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यो भवति । अन्तरङ्गस्तर्हि एकादेशः । कान्तरङ्गता । वर्णावाश्रित्यैकादेशः । पदस्य स्वरितत्वम् । स्वरितत्वमप्यन्तरङ्गम् । कथम् । वक्ष्यत्येतत् । पदग्रहणं परिमाणार्थमिति । उभयोरन्तरङ्गयोः परत्वात् स्वरितत्वम् । स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति । अयं चाप्ययुक्तो विप्रतिषेधः । पित्स्वरस्य चित्स्वरस्य च । किं कारणम् । चापि चित्करणात् * । चापि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति ॥

**गुप्तिज्किद्भ्यः सन् ॥ ५ ॥** गुपिज्कितमाना अनुदात्तेतः । गुपादिष्व-

---

त्त्वादिति । यदा अनित्यादिर्नित्यमित्यस्यानन्तरं प्रत्ययस्य चेत्युच्येत तदा परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधते । यथान्यासे तु प्रत्ययस्वरं धातुस्वरो बाधते । पित् स्वरादिति । एतदत्रानुदात्तत्वविधाने सिद्ध्यति नान्यत्रेति भावः । कार्येति । स्वरितत्वात् प्रागेकादेशं मन्यते । तत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्तित्स्वरः प्राप्नोति । परं प्रत्यादिवद्भावात् तु पित्स्वरप्रसङ्गः । न वेति । प्रत्ययसंज्ञासन्नियुक्तस्वरस्यान्तरङ्गत्वान्नास्ति विप्रतिषेध इति भावः । परत्वात्स्वरितत्वमिति । अन्तरङ्गत्वं स्वरितत्वस्यानपेक्ष्यैतदुक्तम् । स्त्रीत्वापेक्षटाप्निमित्तो ह्येकादेशो बहिरङ्गः । आन्तर्यत इति । स्वरिते त्वनुदात्तोपि विद्यतइति स्वरितानुदात्तयोः स्वरितोन्तरतम । चापीति । यदि सामान्यग्रहणाविघातार्थत्वमेव चकारस्याभविष्यत् टाप्प्रकरण एव यङश्चाप् व्यधास्यतेति भावः ॥ ३ ॥

गुप्तिज्कि ॥ गुपेति । अनुक्रमप्रदर्शनाय कितिः पठितो न त्वयमनुदात्तेत् । गुपादिष्विति । नित्यसन्विषयत्वात्केवलेभ्यो लडाद्यनुत्पादात् प्रश्नः । आत्मनेपदार्थमिति । सन्नन्तेभ्य इति भावः । पूर्ववदिति । लिङ्गातिदेशादिति भावः । न चैतेभ्य इति । कार्यातिदे-

नुबन्धकरणं किमर्थम् । गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् * । गुपादिष्वनुबन्धाः क्रियन्ते । आत्मनेपदं यथा स्यात् । अथ क्रियमाणेष्वप्यनुबन्धेषु आत्मनेपदं न प्राप्नोति । किं कारणम् । सना व्यवहितत्वात् । पूर्ववत्सन इत्येवं भविष्यति । पूर्ववत्सन इत्युच्यते न चैतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्यामः । एवं तर्ह्यनुबन्धकरणसामर्थ्याद्भविष्यति । अथ वा अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा । गोः सक्थनि कर्णे वा कृतं लिङ्गं गोर्विशेषकं भवति । यदि अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तदा जुगुप्सयति मिमांसयतीत्यत्रापि प्राप्नोति । अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं यो ऽवयवो न व्यभिचरति । सनन्तमेव च न व्यभिचरति । णिजन्तं पुनर्व्यभिचरति । तद्यथा । गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥ अभ्यासदीर्घे ऽवर्णस्य दीर्घप्रसङ्गः * । अभ्यासदीर्घत्वे ऽवर्णस्य दीर्घत्वं प्राप्नोति । मीमांसते । ननु च इत्वे कृते दीर्घत्वं भविष्यति । कथं पुनरुत्पत्तिसन्नियोगेन दीर्घत्वमुच्यमानमित्वं प्रतीक्षते । अथ कथमभ्यासं प्रतीक्षते । वचनादभ्यासं प्रतीक्षते । अभ्यासस्य दीर्घत्वविधानात् इत्वं पुनर्न प्रतीक्षते । न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात् * । न वैष दोषः । किं कारणम् । अभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात् अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्तइत्येवं दीर्घत्वमुच्यमानमित्वं न बाधिष्यते । अथ वा मान्बधदान्शान्भ्य ई चाभ्यासस्येति वक्ष्यामि । एवमपि हलादिशेषापवाद ईकारः प्राप्नोति । ई चाच इति वक्ष्यामि । अथ वा मान्बधदान्शान्भ्यो दीर्घश्चेतोभ्यासस्येति वक्ष्यामि । सिद्ध्यति सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमभ्यासदीर्घत्वे अवर्णस्य दीर्घत्वप्रसङ्ग इति । परिहृतमेतत् । न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वादिति । अथ वा नैवं विज्ञायते दीर्घश्चाभ्यासस्येति । कथं तर्हि । दीर्घश्च अभ्यासस्येति । किमिदमाभ्यासस्येति । अभ्यासस्य विकार आभ्यासः तस्येति ॥

---

शेषौ लिङ्गातिदेशे तु अनुचिकीर्षतीत्यादावप्यात्मनेपदप्रसङ्ग इति भावः । एवं तर्हीति । सना व्यवधाने ऽपीति भावः । अथ वेति । यत्रावयवे लिङ्गासङ्गस्य प्रयोजनं नास्ति तत्र समुदायार्थ एवासाविति भावः । शिष्टं भाष्यं पूर्ववत्सन इत्यत्र विस्तरेण व्याख्यातं तत एवावधार्यम् ॥ ५ ॥

मान्बध ॥ सामान्यविधेर्विशेषविधिर्बाधक इत्याह अभ्यासदीर्घ इति । अथ कथमिति । यथाभ्यासस्येति वचनाद्दीर्घत्वमभ्यासमपेक्षते तथा वचनान्तरविहितमित्वमपीति भावः । अभ्यासविकारेष्विति । एतच्च दीर्घोकितइत्यत्राकिद्ग्रहणेन ज्ञापयिष्यते ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥** धातोरिति किमर्थम् । प्रकर्त्तुमैच्छत् प्राचिकीर्षत् । सोपसर्गात्तुत्पत्तिर्मा भूदिति कर्मग्रहणात्सन्निधौ धातुग्रहणमानर्थक्यम् * । कर्मग्रहणात्सन्निधौ धातुग्रहणमनर्थकम् । कर्मणः सामानकर्तृकादिच्छायां वा सन् भवतीत्येव धातोरुत्पत्तिर्भविष्यति । सोपसर्गं चै कर्म * । सोपसर्गकमिह वै कर्म । तत उत्पत्तिः प्राप्नोति । सोपसर्गं कर्मेति चेत् कर्मविशेषत्वात् उपसर्गस्यानुपसर्गं कर्म * । सोपसर्गं कर्मेति चेत् कर्मविशेषक उपसर्गः । अनुपसर्गमेव हि कर्म । अवश्यं चैतदेवं विज्ञेयम् । सोपसर्गस्य हि कर्मत्वे धात्वधिकारेपि सनो ऽविधानकर्मत्वात् * । यो हि मन्यते सोपसर्गं कर्मेति क्रियमाणे पि तस्य धातुग्रहणे सनो ऽविधिः स्यात् । किं कारणम्, कर्मकत्वात् । इदं तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्मा भूत् । सुबन्ताच्चाप्रसङ्गः क्यजा-

———————

ई चाच इति । अजन्तस्येत्यर्थः । न चा कृते हलादिशेषे ऽजन्तत्वं भवति । अभ्यासस्य विकार इति । सचेत्वमेव । तथाहि । लोपस्य तावदादेशो विधातुमशक्यः तस्याभावरूपत्वात् । यदि च ह्रस्वस्य दीर्घत्वं स्यात् तद्धितनिर्देशोनर्थकः स्यात् । दीर्घश्रुत्याचपरिभाषोपस्थानादजन्तस्य दीर्घविधानात् दीर्घस्य ह्रस्वस्य वा दीर्घविधाने विशेषाभावात्समादित्वमेव तद्धितेन प्रत्याय्यते । अथ वाहत्य सनि यो विहितो विकारः सन्यत इति तस्यैव ग्रहणं विज्ञायते । ह्रस्वश्च मानादीनामिव वध्रेरपि पर्जन्यवल्लक्षणप्रवृत्त्या भवति ६।

धातोः कर्मणः ॥ धातोरर्थद्वारके कर्मत्वसमानकर्तृकत्वे । ते चेच्छायाः प्रत्ययार्थत्वे ऽपि सन्निधानात्तदपेक्षे एव गृह्येते । एवं च प्रकृत्यर्थोपसर्जनः प्रत्ययार्थो भवति । अन्यथा प्रकृतिप्रत्ययार्थयोरसम्बन्धः स्यात् । वार्त्तिकावतारणाय प्रश्नं करोति धातोरिति किमर्थमिति । अयं भावः । धातुरेव क्रियावाची । उपसर्गस्तु विशेषकः । ततश्चार्थद्वारके कर्मत्वसमानकर्तृकत्वे धातोरेव संभवत इति । सोपसर्गादिति । संघातेन विशिष्टा क्रिया प्रतिपाद्यतइति तत एव सनुत्पत्तिप्रसंगः । ततश्च संघातादेरेव द्विर्वचनादिप्रसङ्ग इति भावः । कर्म्मग्रहणादिति । एतदुपलक्षणम् । तेन समानकर्तृकग्रहणादित्यपि बोद्धव्यम् । सोपसर्गमिति । संघतस्य क्रियाविशेषाभिधायित्वादिति भावः । कर्मविशेषक इति । अत एव वचनात् षष्ठीसमासप्रतिषेधो ऽनित्यार्थः । अयमर्थः । धातुरेव क्रियावाचीति तदर्थस्यैव कर्म्मत्वम् । न तूपसर्गार्थस्यापि । यथोक्तम् । कट एव कर्म्म तत्सामानाधिकरण्यात्तु भीष्मादिभ्यो द्वितीया भविष्यतीति । अथापि विशेषणस्य पृथक्कर्मत्वम् । यथोक्तम् । कटोपि कर्म भीष्मादयोपीति तथापि कर्म्मसमुदायस्याकर्मत्वात्समुदायादुत्पत्तिर्न भविष्यति । सोपसर्गस्य हीति । यदि संघातस्यार्थद्वारकं कर्मत्वं स्यात् तदा अवयवस्याकर्मत्वात्ततः सन्प्रत्ययो न स्यात् । कर्म्मणइत्येषा हि पञ्चमी । षष्ठ्यां तु सत्यां कर्मणोवयवाद्धातोः सन्नित्याश्रीयमाणे ऽनुपसर्गाच्च स्यात् । तस्मात् । अडादीनां व्यवस्थायै पृथक्त्वेन प्रकल्पनात् । धातूपसर्गयोर्धातुः क्रियावाचीति निर्णयः ॥ सुबन्तादिति । विकल्पितत्वात्सनः पक्षे सावकाशाः क्यजादय इति भावः । प्रातिपदिकादिति तु नोक्तम् । सति कर्म्मण इति वचनात्कर्मत्वे च सुबन्ततायां

दीनामपवादत्वात् *। सुबन्ताच्च सनो ऽप्रसङ्गः। किं कारणम्। क्यजादीनामपवादत्वात्। सुबन्तात्क्यजादयो विधीयन्ते। ते अपवादत्वात् बाधका भविष्यन्ति। अनभिधानाद्वा *। अथ वा अनभिधानात्सुबन्तादुत्पत्तिर्न भविष्यति। न हि सुबन्तादुत्पद्यमानेन सना इच्छाभिधानमस्ति। इयं तावदगातिका गतिः। यदुच्यते अनभिधानादिति। यदप्युच्यते। सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वादिति। भवेत्कस्माच्चिदप्रसङ्गः स्यादिति आत्मेच्छायाम्। परेच्छायां तु प्राप्नोति राज्ञः पुत्रमिच्छतीति। एवं तर्हि इदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति। किम्। समानकर्तृकादिच्छायां वेत्युच्यते न च सुबन्तस्य समानः कर्तास्ति। एवमपि भवेत् कस्माच्चिदप्रसङ्गः स्यात् यस्य कर्ता नास्ति। इह तु प्राप्नोति। आसितुमिच्छति शयितुमिच्छतीति। इच्छायामर्थे सन् विधीयते इच्छार्थेषु च तुमुन्। तत्र तुमुनोक्तत्वात्तस्यार्थस्य सन् न भविष्यति। एवमपीह प्राप्नोति। आसनमिच्छति शयनमिच्छतीति। इह यो विशेष उपादीयते उपाधिर्वा द्योत्यते तस्मिंस्तेन भवितव्यम्। यश्चेहार्थो गम्यते आसितुमिच्छति शयितुमिच्छतीति स्वयं तां क्रियां कर्तुमिच्छतीति नासाविह गम्यते। आसनमिच्छाति शयनमिच्छतीति। अन्यस्याप्यासनमिच्छतीत्येषोऽर्थो गम्यते। अवश्यं चैतदेवं विज्ञेयम्। यो

---

अवश्यं भावात्। क्यजादीनामिति। कर्ममात्रात्सन्विधिः कर्मविशेषात्सुबन्तात् क्यजादय इति भाव.। यत्र चोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्त उत्सर्गो न भवति। अपि तु वाक्यमेव। इयं तावदिति। लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्या लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्तराभावादिति भावः। व्यपदेश्यं सदिति। सच्छोभनं यद्व्यपदेशार्थं तन्न व्यपदिशति। न च सुबन्तस्येति। पुत्रादेः सत्त्वभूतार्थाभिधायित्वात्साध्यस्यैव साधनसम्बन्धयोग्यत्वादिति भावः। कटं करोतीत्यादावपि सुबन्तेन सिद्धरूपोऽर्थोऽभिधीयत इति। शब्दान्तरसन्निधानात्तु साध्यता प्रतीयते। यथोक्तं हरिणा। निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः। क्रियाणामेव साध्यत्वात्सिद्धरूपोऽभिधीयतइति ॥ आसितुमिच्छतीति। तुमुन्नन्तस्य साध्यरूपाभिधायित्वादस्ति कर्त्रा योग इति भावः। क्याच्च मान्ताव्ययप्रतिषेधे इति क्यजत्र प्रतिषिद्धः। तुमुनोक्तत्वादिति। तुमुन्निमित्तेनेच्छतीत्यनेनेत्यर्थः। न चेच्छतीत्यस्य प्रयोगं बाधित्वा सन् भवतीति युज्यते वक्तुम्। उपपदनिमित्तत्वात्तुमुनस्तदभावे अभावसप्रङ्गात्। आसनमिच्छतीति। ल्युट् भावमात्रे विधीयते न त्विच्छार्थेषूपपदेष्विति भावः। धातुवाच्यक्रियापेक्षं च समानकर्तृकत्वमस्ति। इह यो विशेष इति। समानशब्दस्तदन्तवाच्योऽर्थ उपाधिरन्यस्तु विशेष इति भावः। क चिरवभेदेन व्यवहारः। आसितुमिच्छतीति। वृत्तिसमानार्थेन वाक्येन भवितव्यम्। आसिसिषतइत्यस्य चासितुमिच्छतीति समानार्थं भवतीति भवत्यासेः सन्प्रत्ययः। आसनमिच्छतीत्यत्र तु किमात्मन आसनमिच्छति

हिं मन्यते अद्योक्ते तस्मिंस्तेन भवितव्यमिति । क्रियमाणे पि हि तस्य धातुग्रहण इह प्रसज्येत संगतमिच्छति यज्ञदत्तो देवदत्तेनेति । कर्मसमानकर्तृकग्रहणानार्थक्यं चेच्छाभिधाने प्रत्ययविधानात् * । कर्मसमानकर्तृकग्रहणं चानर्थकम् । किं कारणम् । इच्छाभिधाने प्रत्ययविधानात् । इच्छायामभिधेयायां सन् विधीयते । अकर्मणो ह्यसमानकर्तृकाद्वानभिधानात् * । इच्छायामभिधेयायां सन् विधीयते । न चाकर्मणोऽसमानकर्तृकाद्वा उत्पद्यमानेन सना इच्छाया अभिधानं स्यात् । अनभिधानात् तत उत्पत्तिर्न भविष्यति । अङ्गपरिमाणार्थं तु * । अङ्गपरिमाणार्थं तर्ह्यन्यतरत्कर्तव्यं धातुग्रहणं कर्मग्रहणं वा । अङ्गपरिमाणं ज्ञास्यामीति । किं पुनरत्र ज्यायः । धातुग्रहणमेव ज्यायः । अङ्गपरिमाणं चैव विज्ञातं भवति । अपि च धातोर्विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञो भवतीति सन आर्द्धधातुकसंज्ञापि सिद्धा भवति । यच्चाप्येतदुक्तं कर्मग्रहणात् सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गे कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वादिति । स्वपक्षोनेन वर्णितः युक्तमिह

---

अथ परस्येति संदेहात्समानकर्तृकत्वाप्रतिपत्तिरित्यासनशब्दात्सन् प्रत्ययो न भविष्यति । न ह्यतः सनुत्पद्यमानः समानकर्तृकत्वलक्षणं विशेषमन्तर्भावयितुं शक्नोतीति भावः । संगतमिच्छतीति । केवलस्य धातोः प्रयोगाभावात् क्तप्रत्ययोपादानं, धातोरेव तु सन्प्रसङ्ग इत्युच्यते । अत्र च किमात्मकर्तृकं संगतमिच्छति अथ परकर्तृकमिति संदेहाद्यदा समानकर्तृकत्वं नावधार्यते तदा न भाव्यम् । यदा तु समानकर्तृकत्वं प्रतिपिपादयिषितं तदा भवितव्यमेव सना संजिगंसते वत्सो मात्रेति । कर्मेति । इच्छायाः कर्मणावश्यं भाव्यमिति प्रत्यासत्त्या प्रकृत्यर्थ एव कर्मत्वेनाश्रयिष्यत न तु तद्व्यतिरिक्तमिति गमनेनेच्छतीति सन्न भविष्यति । प्रत्यासत्त्यैव च समानकर्तृकत्वमाश्रयिष्यतइति देवदत्तस्य भोजनमिच्छतीत्यत्रापि न भविष्यतीत्येतन्न्यायमूलमनभिधानम् । इह नित्यानां शब्दानां संकीर्णप्रयोगदर्शने सति साध्वसाधुविभागाय शास्त्रारम्भो न च गमनेनेच्छति देवदत्तस्य भोजनमिच्छतीत्यत्रार्थे जिगमिषति बुभुक्षतइत्यादिप्रयोगोस्तीति किं तन्निवृत्त्यर्थेन विशेषणोपादानेनेत्यर्थः । अङ्गपरिमाणार्थं त्विति । इच्छायां वेत्येतावत्युच्यमाने यद्यपि प्रत्ययपरत्वेन पूर्वा प्रकृतिराक्षिप्यते तथापि प्राचिकीर्षदित्यादौ सोपसर्गस्याङ्गत्वं स्यात् । यदा तु साक्षात् प्रकृतिर्विशिष्टा निर्दिश्यते तदाङ्गपरिमाणं ज्ञायते अन्यतरदिति, त्रितये प्रत्याख्याते अन्यतममिति वक्तव्ये समानकर्तृग्रहणं न कर्तव्यमेव गौरवप्रसङ्गादिति मत्वान्यतरदित्युक्तम् । धातुग्रहणमेवेति । कार्यान्तरस्यापि संपादनादित्यर्थः । धातुशब्दोच्चारणेन धातोर्विहितस्यार्द्धधातुकसंज्ञोक्ता । तथा च पूर्वसूत्रद्वयविहितस्य सनस्तदभावाज्जुगुप्सतइत्यादाविडभावः । एतत्सूत्रविहितस्य तु सन आर्द्धधातुकत्वाच्छिशयिषतइत्यादाविड्गुणौ भवतः । नन्विको झलिति कित्त्वमार्द्धधातुकत्वनिमित्तगुणनिषेधार्थं सन आर्द्धधातुकसंज्ञापकं भविष्यति । नैतदस्ति । सामान्येन ज्ञापके व्याख्यायमाने सर्वत्र सनः प्रसङ्गः । विशे-

द्रष्टव्यं किं न्याय्यं कर्मेति । एतच्चात्र युक्तम् । यत्सोपसर्गं कर्म स्यात् ननु चोक्तम् । सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मकत्वादिति । नैष दोषः । कर्मण इति नैषा धातुसमानाधिकरणा पञ्चमी कर्मणो धातोरिति । किं तर्ह्यवयवयोगे एषा षष्ठी कर्मणो यो धातुरवयव इति । यद्यवयवयोगा षष्ठी केवलादुत्पत्तिर्न प्राप्नोति चिकीर्षति जिहीर्षतीति । एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति । कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः । महान्तं पुत्त्रमिच्छतीति कर्मणो यत्सुबन्तमवयव इति । न कर्तव्यः । असामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । वावचनानर्थक्यं च तत्र नित्यत्वात्सनः * । वावचनं चानर्थकम् । किं कारणम् तत्र नित्यत्वात्सनः । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । स्वभावतश्चैतद्भवति वाक्यं च प्रत्ययश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थो वावचनेन । तुमुन्नन्ताद्वा तस्य च लुग्वचनम् । * तुमुन्नन्ताद्वा सन् वक्तव्यः तस्य च तुमुनो लुग्वक्तव्यः । कर्तुमिच्छति चिकीर्षतीति । लिङन्तमाद्वा * । लिङन्तमाद्वा सन् वक्तव्यः । तस्य च लिङो लुक् वक्तव्यः । कुर्यामितीच्छति चिकीर्षति । आशङ्का-

---

षविषये त्विगन्तप्रकृतेरेव स्यादिति धातुग्रहणं कर्तव्यम् । स्वपक्ष इति । यद्यपि सर्वः स्वपक्षं वर्णयति । तथापि परपक्षदूषणाभिनिवेशादयुक्तोऽपि स्वपक्षो वर्णित इत्युक्तं भवति । युक्तमिति । यदेव न्याय्यं तदेव ग्राह्यम् । न तु दुरभिनिवेशः कार्य इत्यर्थः । यत्सोपसर्गमिति । धातूपसर्गसंघातेन हि क्रियाविशेषस्य प्रक्रमादर्थद्वारकं तस्यैव कर्मत्वमित्यर्थः । विशिष्टैव च क्रिया साधनेन निर्वर्त्यते न तूत्पन्ना सती विशेषणेनान्यत उत्पन्नेनाभिसंबध्यते । तत्र यद्यपि धातुर्वाचक उपसर्गस्तु द्योतकः तथाप्यसति धातुग्रहणे वाचकद्योतकविभागस्य शब्देनहानङ्गीकृतत्वात् संघातादेवोत्पत्तिः स्यादिति भावः । उपपदमतिङित्यत्र साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि इत्युत्पत्तिविशिष्टाया एव क्रियाया आश्रित्योक्तमित्यविरोध । अथ वा सत्यपि धातोः पूर्वं साधनयोगे इषिकर्मत्वमिह विशिष्टायाः एव क्रियायाः प्रतिपाद्यमिति पूर्वमुपसर्गेण सम्बन्धे धातुग्रहणेऽसति सोपसर्गात्सन उत्पत्तिप्रसङ्ग एव । किं तर्हीति । व्याप्तिग्रहणाय षष्ठीपक्ष आश्रीयते पञ्चम्यां हि सत्यामनुपसर्गादेवोत्पत्तिः स्यान्न तु सोपसर्गात् । षष्ठीपक्षे तु सोपसर्गादपि सिध्यति । एषोऽपीति । प्रयोगभेदान्नानारूपस्य कर्माभिधायिनोऽवयवः सन् प्रकृतित्वेनाश्रीयमाणो धातुरित्यर्थः । काममिति इच्छयेत्यर्थः । इच्छाया व्याघाताभावादित्यर्थः । असामर्थ्यादिति । सुबन्तात् क्यज्विधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भावः । सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिः । अथ वा धातुरेव विशिष्टां क्रियामाह उपसर्गस्तु द्योतक इति सापेक्षत्वाभावः । वावचनानर्थक्यं चेति । वृत्तेरेकार्थीभावविषयत्वाद् व्यपेक्षाविषयत्वाच्च वा-

यामचेतनेषूपसंख्यानम् * । आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम् । अश्मा लुलुठिषते । कूलं पिपतिषति । किं पुनः कारणं न सिध्यति । एवं मन्यते चेतनावत एतद्भवतीच्छेति । कूलं चाचेतनम् । अचेतनग्रहणेन नार्थः । आशङ्कायामित्येव । इदमपि सिद्धं भवति श्वा मुमूर्षतीति । न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः * । न वा वक्तव्यम् । किं कारणम् । तुल्यकारणत्वात् । तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने । किं कारणम् । इच्छाया हि प्रवृत्तितउपलब्धिर्भवति । योऽप्यसौ कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति किं तर्हि सन्नद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते । कूलस्यापि पिपतिषतो लोष्टाः शीर्यन्ते भिदा उपजायते देशान्तरमुपसंक्रामति । श्वानः खल्वपि मुमूर्षवः एकान्तशीलाः शूनाक्षाश्च भवन्ति । उपमानाद्वा सिद्धम् * । उपमानाद्वा सिद्धमेतत् । लुलुठिषतइव लुलुठिषते । पिपतिषति इव पिपतिषति । न वै तिङन्तेनोपमानमस्ति । एवं तर्हि इच्छेवेच्छा । सर्वस्य वा चेतनावत्त्वात् * । अथ वा सर्वं चेतनावत् एवं ह्याह कंसकाः सर्पन्ति शिरीषोयं स्वपिति सुवर्चला

---

क्यस्य भिन्नार्थत्वाद् बाध्यबाधकभावाप्रसङ्गादिति भावः । न च संज्ञाया इति । अनर्थः प्रत्युत वाग्रहणाद्भवति प्रत्ययसंज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गात् । तुमुन्नन्तादिति लघ्वेवं लक्षणं भवतीति भावः । वचनसामर्थ्याच्चोपपदश्रवणं बाधित्वा पक्षे तदर्थे ऽर्थे सन् प्रत्ययो भवति । इच्छाग्रहणं प्रत्ययार्थनिर्देशायावश्यं कर्तव्यम् । अत्र चोदयन्ति । तुमुनन्तस्य पदत्वात्तुमुनो लुकि कृते जिघांसतीत्यादौ नलोपादीनि प्राप्नुवन्तीति । नैष दोषः । तुमुनो लुको बहिरङ्गत्वादसिद्धत्वान्नलोपादीनि न भविष्यन्तीति । एतस्मिंस्तु सूत्रन्यासे धातोरिति सनो विधानाभावादार्द्धधातुकसंज्ञा न प्राप्नोतीति इको झलिति किन्त्वविधानं ज्ञापकमाश्रयणीयमिष्टसिद्धये । आशङ्का संभावना तद्विशिष्टार्थाभिधायिनो धातोः स्वार्थे प्रत्ययः । लुलुठिषत इति । रुठ लुठ प्रतीघात इति द्युतादिषु पठ्यते । वर्तमानसामीप्यइति लट्प्रत्ययः । श्वा मुमूर्षतीति । शुनश्चैतन्ये ऽपि जीवितस्य प्रियत्वाद्व्याध्यभिभवे ऽपि तिर्यक्त्वान्मर्तुमिच्छा नास्ति । न चेति । कार्येणेच्छानुमीयतइतीच्छानुमानकारणं कार्यं लिङ्गं तुल्यमिति वास्तवसदसत्त्वानपेक्षलौकिकव्यवहाराश्रयकार्यानुमेयेच्छाश्रयेण सन् प्रयुज्यते इत्यर्थः । उपमानाद्वेति । यदिच्छानिमित्तं कार्यं तदचेतनेषु नास्ति । यच्चास्ति, न तदिच्छायाः कार्यमिति मत्वा परिहारान्तरोपन्यासः । न वै तिङन्तेनेति । तिङन्तार्थेनेत्यर्थः । क्रियायाः सध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदं तदिति परामर्शविषयवस्तुगोचरत्वादुपमानोपमेयभावस्येदं तदिति परामर्शाभावादिति भाव । इवशब्दप्रयोगे तु अध्यारोपस्तु विद्यते । रोदितीव गायति नृत्यतीव गच्छति देवदत्त इति । परिपूर्णेन च न्यूनस्योपमानं भवति । क्रिया च सर्वा स्वाश्रये समाप्तेति न्यूनत्वासंभवस्तस्याम् । तदुक्तम् । येनैव हेतुना हंसः पततीत्यभिधीयते । आतौ तस्य समाप्तत्वादुपमार्थो न विद्यतइति ॥ भिन्नजातीयानां च क्रियाणां सादृश्यान्नास्ति भुङ्क्त इव गच्छतीति । एवं तर्हीति । इच्छाशब्दस्य

आदित्यमनुपर्येति । आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति । अयस्कान्तमयः संक्रामति । ऋषिः पठति । शृणोत ग्रावाणः । इमे इषवो वहवः पत्स्यन्ते । तत्र न ज्ञायते कस्यायमर्थे सन् विधीयतइति । एषेश्छत्वभाविनः । यद्येवं कर्तुमन्विच्छति कर्तुमन्वेषणा अत्रापि प्राप्नोति । एवं तर्हि यस्य क्रियामिच्छेस्तेतद्रूपं निपात्यते । कस्य चैतन्निपात्यते । कान्तिकर्मणः । अथेह ग्रामं गन्तुमिच्छतीति कस्य किं कर्म । इषेरुभे कर्मणी । यद्येवं ग्रामं गन्तुमिच्छति ग्रामाय गन्तुमिच्छतीति । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ न प्राप्नुतः एवं तर्हि गमेर्ग्रामः कर्म । इषेर्गमिः कर्म। एवमपीष्यते ग्रामो गन्तुमिति । परसाधनउत्पद्यमानेन लेन ग्रामस्याभिधानं न प्राप्नोति । एवं तर्हि गमेर्ग्रामः कर्म इषेरुभे कर्मणी । अथ सन्नन्तात्सना भवितव्यम् । चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति न भवितव्यम् । किं कारणम्। अर्थगत्यर्थः शब्दप्रयोगः । अर्थं प्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम् । उक्तार्थानामप्रयोग इति । न तर्हीदानीमिदं भवति । एषितुमिच्छति एषिषिषतीति । अस्त्यत्र विशेषः । एक-

---

सत्त्वभूतार्थाभिधायित्वादस्ति तदर्थस्योपमानत्वं ततश्चेच्छासदृशेपि व्यापारे सन् भवति । गौणमुख्यन्यायश्च क्वचिल्लक्ष्यापेक्षया नाङ्गीक्रियते । सर्वस्य वेति । आत्माद्वैतदर्शनेनेति भावः । ऋषिरिति । वेदः सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः । वैचित्र्येण च पदार्थानामुपलम्भात्सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीयः । इमइति। शश्चाद्यन्विकरणाश्रय इत्यर्थः । तत्रेति । इच्छेति निपातनं त्रयाणामपि संभवतीति मन्यते । छत्वभाविन इति । इच्छेति शप्रत्ययो यगभावश्च निपात्यते । छत्वं तु लक्षणेनैव सिद्धं तच्च शविकरणस्यैव विहितमित्यर्थः । यद्येवमिति । अन्विच्छतीति तौदादिकस्यैव रूपमिति भावः । एवं तर्हीति । अर्थविशेषे निपातनमाश्रितमिति भाव । कान्तिकर्मण इति । कान्तिः कामाभिलाषस्तत्क्रियस्येत्यर्थः । अन्विच्छतीत्यस्य गवेषयतीत्यर्थः न तु कामयतइति सन्न भवति । अथेहेति । क्रियाद्वयनाभिधानाच्चङ्क्रमणादिकामस्य गमनमात्रेप्सासंभवादन्यस्य चोभयेप्सासंभवात् प्रश्नः । इषेरुभे इति। यो हि ग्रामगमनमिच्छति तस्येषिक्रिययोभयमीप्सितं न केवलो ग्रामो नापि केवलं गमनमित्यर्थः । यद्येवमिति । इषिकर्मत्वे ग्रामस्य गतिकर्मत्वाभावादिति भाव । परसाधन इति । परस्येषेः साधनं यत्कर्म तत्र लकार उत्पद्यते । तच्च गमनमेव न तु ग्राम इत्यर्थ । एवं तर्हीति । इष्यते ग्रामो गन्तुमित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्भिन्नकक्ष्ययोः कर्मणोरेकेन शब्देनाभिधानासंभवात् प्रधाने कार्यसंप्रत्ययाद् ग्रामस्यैवाभिधानं लकारेण भवति । इषिक्रियायाश्चाख्यातवाच्यत्वात् प्राधान्यमिति प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तेरभिहितवच्चकासनाद् गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न भवतः । अथेति । प्रयोगदर्शनाल्लक्षणसद्भावाच्च पृच्छति न भवितव्यमिति । प्रकृत्यादिच्छयाः तस्याश्च पूर्वोत्पन्नेनाभिहितत्वाद् परः सन्न भवतीत्यर्थः । न तर्हीति । इषिणैव धातुनेच्छाया अभिधानात् सन्न प्राप्नोतीति भावः । एकस्येति । इच्छ-

स्यात्र इषेरिषिः साधनं वर्तमानकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः । इहापि तर्ह्येकस्येषेः करोतिविशिष्ट इषिः साधनं वर्तमानकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः । येनैव खल्वपि हेतुना एतद्वाक्यं भवति । चिकीर्षितुमिच्छतीति तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मात्सन्नन्तात्सनः प्रतिषेधो वक्तव्यः । तं चापि ब्रुवता इषि सन इति वक्तव्यम् । भवति हि जुगुप्सिषते मीमांसिषते । इति शैषिकान्मतुबर्थीयाच्छैषिको मतुवर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते इति ॥

इति श्रीमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे प्रथमाह्निकम् ॥

सुप आत्मनः क्यच् ॥ ८ ॥ किमर्थश्चकारः । स्वरार्थः । चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् । विशेषणार्थस्तर्हि । क विशेषणार्थेनार्थः । अस्य च्वौ क्यचि चेति । क्य इति ह्युच्यमाने अपि काकः श्येनायते अत्रापि प्रसज्येत । नैतदस्ति । तदनुबन्धकग्रहणे अतदनुबन्धकस्य ग्रहणं नेत्येवमेतस्य न भविष्यति । सामान्यग्रहणाविघातार्थस्तर्हि । क च सामान्यग्रहणाविघातार्थेनार्थः । नः क्यइति । अथात्मग्रहणं किमर्थम् । आत्मेच्छायां यथा स्यात् परेच्छायां मा भूत् । राज्ञः पुत्रमिच्छतीति । क्रियमाणे ऽपि वै आ-

---

तीत्यत्र य इषिस्तस्यैषितुमित्येतत्पदवाच्य इषिः कर्मेत्यर्थः । तथा हि । कश्चिदालस्याद्युपहतो ऽध्ययनादिविषयामिच्छामेवेच्छति । सर्वकालइति । समानकर्तृकेषु तुमुनित्यनेन तुमुनः कालसामान्ये विधानात् । शैषिकादिति । सन्प्रसङ्गेनान्योऽप्यनिष्टप्रत्ययो निवार्यते । प्रतिव्यक्ति लक्षणप्रवृत्तौ वाचनिको निषेधः । आकृतिपक्षे तु सकृल्लक्षणप्रवृत्तौ तत्प्रवृत्ते. प्राक्तत्प्रत्ययान्तप्रकृत्यसंभवात्तदन्तात् प्रत्ययोत्पत्तिर्न भवतीति न्यायादनुवादोयं संपद्यते । तत्र शैषिकाच्छैषिकः सरूपो न भवति शालायां भव शालीयो घटः तत्र भवमुदकमिति पुनश्छो न भवति । विरूपस्तु भवति । अहिच्छत्रे भवः आहिच्छत्रः तत्र भव आहिच्छत्रीयः । तथा दण्डीस्यास्तीति दण्डिक. सोस्यास्तीति पुनष्ठन्न भवति । विरूपस्तु भवति । दण्डिमती सेनेति । सन्नन्तान्न सनिष्यतइति । सरूप इत्यपेक्ष्यते सारूप्येण चात्र सादृश्यं लक्ष्यते तच्चार्थद्वारकमिति इच्छासन्नन्तादित्यर्थो लभ्यते ॥७॥

इति जैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥

सुप आत्मनः ॥ किमर्थ इति । वक्ष्यमाणोभिप्रायः । शिष्यबुद्धिपरीक्षार्थं परिहाराभासमाह चित इति । प्रत्ययस्वरेण वेति । यद्यप्यत्र धातुस्वरेण भाव्यं तथापि पूर्वं प्रत्ययस्वरो भवति । पश्चात्सति शिष्टे धातुस्वर इति क्रम । तदनुबन्धकेति । स एव यस्यानुबन्धः तस्य ग्रहणम् । यस्य तु स चान्यश्च तस्य न ग्रहणमित्येवमेतद्वचनसामर्थ्यादाश्रीयते । आत्मेच्छायामिति । आत्मन इच्छेति शेषषष्ठ्या समासः न तु कर्तृषष्ठ्या । सुबन्तद्वारकश्चात्मन इच्छया संबन्धः न तु साक्षात्तेनायमर्थः । आत्मनः सुबन्तार्थे

त्मग्रहणे परेच्छायां प्राप्नोति । किं कारणम् । आत्मन इतीयं कर्तरि षष्ठी । इच्छेसकारो भावे । स यद्येवात्मन इच्छति । अथापि परस्य । आत्मन एवेच्छासौ भवति । नैष दोषः । नात्मग्रहणेनेच्छाभिसंबध्यते । किं तर्हि । सुबन्तमभिसंबध्यते । आत्मनो यत्सुबन्तमिति । यद्यात्मग्रहणं क्रियते । छन्दसि परेच्छायां न प्राप्नोति । मा त्वा वृका अघायवो विदन् । तस्मान्नार्थ आत्मग्रहणेन । कस्मान्न भवति राज्ञः पुत्रमिच्छतीति । असामर्थ्यात् । कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । छन्दस्यपि तर्हि न प्राप्नोति । मा त्वा वृका अघायवो विदन् । अस्त्यत्र विशेषः । अन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते । कथं पुनरन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते । ते चैव हि वृका एवमात्मका हिंस्राः । कश्चात्मनो ऽघमेषितुमर्हति । अतोन्तरेणापि तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते । यथैव तर्हि च्छन्दस्यघशब्दात् परेच्छायां क्यज् भवति । एवं भाषायामपि प्राप्नोति अघमिच्छतीति । तस्मादात्मग्रहणं कर्तव्यम् । छन्दसि कथम् । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्यघशब्दात् छन्दसि परेच्छायां क्यजिति । यदयमाह अश्वाघस्यादिति क्यचि प्रकृते इत्वबाधनार्थमाकारं शास्ति । अथ सुब्ग्रहणं किमर्थम् । सुबन्तादुत्पत्तिर्यथा स्यात् प्रातिपदिकान्मा भूदिति । नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः । सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा । अयमस्ति विशेषः । सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति । प्रातिपदिकात्पुनरुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति । ननु च प्रातिपदिकादप्युत्पत्तौ सत्यां पदसंज्ञा सिद्धा । कथम् । आरभ्यते नः क्यइति । तच्चावश्यं वक्तव्यम् । सुबन्तादुत्पत्तौ सत्यां नियमार्थम् । तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति । इदं तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्यथा स्यात् धातोर्मा भूदिति । एतदपि नास्ति प्रयोजनम् । धातोः सन् विधीयते स बाधको भविष्यति । अनवकाशा हि विधयो बाधका भवन्ति न सावकाशाः । सावकाशश्च सन् । कोवकाशः । परेच्छा । न परेच्छायां सना भवितव्यम् । किं कारणम् । समानकर्तृकादित्युच्यते यावच्चेहात्मग्रहणं तावच्च तत्र समानकर्तृकग्रहणम् । इदं तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्यथा स्याद्वाक्यान्माभूदिति । महान्तं पुत्रमिच्छति ।

---

यदेच्छति तदा यथा स्यादिति । एवं परेच्छायामिति व्याख्येयम् । आत्मन इतीयमिति । क्रियाकारकसंबन्धस्यान्तरङ्गत्वादिति भावः । नात्मग्रहणेनेति । आत्मग्रहणोपादानसामर्थ्यात् । न ह्येषितारमन्तरेणेच्छा भवतीति व्यभिचाराभावादिच्छाया विशेषणस्य निष्फलत्वात् । कश्चात्मन इति । अघं व्यसनं दुःखमुच्यते । तच्चात्मनो न कश्चिदिच्छतीत्यर्थः । यदयमिति । न च तदाचारक्यजर्थम् । छन्दस्यघशब्दादाचारे क्यचः प्रयो-

न वा भवति महापुत्रीयतीति । भवति यदैतद्वाक्यं भवति महान् पुत्रो महापुत्रः महापुत्रमिच्छति महापुत्रीयतीति । यदा त्वेतद्वाक्यं भवति महान्तं पुत्रमिच्छतीति । तदा न भवितव्यम् । तदा च प्राप्नोति । तदा मा भूदिति । अथ क्रियमाणेपि सुब्ग्रहणे कस्मादेवात्र न भवति । सुबन्तं ह्येतद् भवति वाक्यम् । नैतत् सुबन्तम् । कथम् । प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति । अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति । समानाधिकरणानां सर्वत्राद्वृत्तिरयोगादेकेन॥ समानाधिकरणानां सर्वत्र वृत्तिर्न भवति । क्व सर्वत्र । समासविधौ प्रत्ययविधौ च। समासविधौ तावत् । ऋद्धस्य राज्ञः पुरुषः महत्कष्टं श्रित इति । प्रत्ययविधौ । ऋद्धस्योपगोरपत्यं महान्तं पुत्रमिच्छतीति । किं पुनः कारणं समानाधिकरणानां सर्वत्र वृत्तिर्न भवतीति । अयोगादेकेन । न ह्यत्र एकेन पदेन योगो भवति । इह तावत् ऋद्धस्य राज्ञः पुरुष इति षष्ठ्यन्तस्य सुबन्तेन सामर्थ्ये सति समासो विधीयते । यच्चात्र षष्ठ्यन्तं न तस्य सुबन्तेन सामर्थ्यम् । यस्य च सामर्थ्यं न तत् षष्ठ्यन्तं वाक्यं तत् । ऋद्धस्योपगोरपत्यमिति षष्ठीसमर्थादपत्येन योगे प्रत्ययो विधीयते यच्चात्र षष्ठ्यन्तं समर्थं न तस्यापत्येन योगः । यस्य चापत्येन योगो न तत् षष्ठीसमर्थम् । वाक्यं तत् । समानाधिकरणानामित्युच्यते । अथ कथं व्यधिकरणानां राज्ञः पुत्रमिच्छतीति। एवं तर्हि इदं पठितव्यं सविशेषणानां सर्वत्रावृत्तिरयोगादेकेनेति । द्वितीयानुपपत्तिस्तु ॥ द्वितीया तु नोपपद्यते महान्तं पुत्रमिच्छतीति । किं कारणम् । न पुत्र इषिकर्म । दधिपुत्रो नेषिकर्म । न चावश्यं द्वितीयैव किं तर्हि सर्वा अत्र द्वितीयादयो विभक्तयो न स्युः । महता पुत्रेण कृतं महते पुत्राय देहि महतः पुत्राद् आनय महतः पुत्रस्य स्वं महति पुत्रे निधेहीति । तस्मान्नैतच्छक्यं वक्तुं न पुत्र इषिकर्मेति । पुत्र एवेषिकर्म । तत्सामानाधिकरण्यान्महतोपि द्वितीयादयो भविष्यन्ति । वृत्तिस्तर्हि कस्मान्न भवति । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्तव्यम् । यदि तर्हि सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यतइति उच्यते ।

---

गाभावादिति भावः । महान्तं पुत्रमिच्छतीति । यद्यत्र सुबन्तसमुदायात् परः क्यच्प्रत्ययः स्यात् तदा प्रत्ययार्थाभिधाने पदद्वयस्य प्रवर्तनात्परस्परस्य समासाभावादुत्तरपदनिबन्धनमात्वं न स्यात् । समानाधिकरणानामिति । समानाधिकरणानां पदानां मध्ये एकेन पदेनायोगात्समुदायेनैव योगाद् वृत्तिर्न भवतीत्यर्थः । सगुणस्य हि पुत्रस्येषिणा संबन्धो न केवलस्येति भावः । द्वितीयानुपपत्तिस्त्विति । यदि केवलस्य प्रातिपदिकार्थस्येषिसंबन्धी नेष्यते तदा कर्मत्वाभावात् केवलात् प्रातिपदिकाद् द्वितीया न प्राप्नोति । नापि समुदायात्तस्याप्रातिपदिकत्वाद् गुणे च संख्याया विवक्षित-

मुण्डयति माणवकमत्र वृत्तिर्न प्राप्नोति । एवं तर्ह्यमुण्डादीनामिति वक्तव्यम् । तत्तर्हि वक्तव्यम् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते । अमुण्डादीनामिति न वक्तव्यम् । वृत्तिस्तर्हि कस्मान्न भवति । महान्तं पुत्रमिच्छतीति । अगमकत्वात् । इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते महान्तं पुत्रमिच्छतीति । नासौ जातु चित्प्रत्ययान्तेन गम्यते महान्तं पुत्रीयतीति । एतस्माद्धेतोर्ब्रूमः अगमकत्वादिति । न ब्रूमः अपशब्दः स्यादिति । यत्र च गमकत्वं भवति तत्र वृत्तिस्तद्यथा मुण्डयति माणवकमिति । अथास्य क्यजन्तस्य कानि साधनानि भवन्ति । भावः कर्ता च । अथ कर्म । नास्ति कर्म । ननु चायमिषिः सकर्मकः । यस्यायमर्थे क्यज्विधीयते । अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः संपन्नः । न चेदानीमन्यत्कर्मास्ति येन सकर्मकः स्यात् । कथं तर्ह्ययं सकर्मको भवति । अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति । अस्त्यत्र विशेषः । द्वे ह्यत्र कर्मणी । उपमानकर्मोपमेयकर्म च । उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति । तद्यथा । अपि काकः श्येनायतइति । अत्र द्वौ कर्तारौ । उपमानकर्ता उपमेयकर्ता च । उपमानकर्तान्तर्भूतः उपमेयकर्त्रा सकर्तृको भवति । अयं तर्हि कथं सकर्मको भवति मुण्डयति माणवकमिति । अत्रापि द्वे कर्मणी सामान्यं कर्म विशेषकर्म च । सामान्यं कर्मान्तर्भूतं विशेषकर्मणा सकर्मको भवति । ननु च वृत्त्यैवात्र न भवितव्यम् । किं कारणमसामर्थ्यात् ।

---

त्वात् । तस्यैवेप्सिततमत्वाद् गुणानां चेप्साप्रकर्षाभावात् । स्त्वयमकर्मत्वेपि तत्सामानाधिकरण्यनिबन्धना विभक्तिरित्यर्थः । सविशेषणानामिति । एकस्यैकदा व्यपेक्षैकार्थीभावविरोधादिति भावः । अगमकत्वादिति । लौकिके प्रयोगे ऽनुमानादपि गाव्यादिभ्यो गवाद्यर्थप्रतिपत्तिवद् महान्तं पुत्रमिच्छतीत्यादिवाक्यार्थस्य महान्तं पुत्रीयतीत्यादेः प्रतीतिर्नास्तीत्यर्थः । सिद्धानां च शब्दानां संकरनिरासाय अन्वाख्यानं क्रियते न त्वप्रयुक्तापूर्वशब्दव्युत्पादनाय । न ब्रूम इति । अपशब्दो हि लोके प्रयुज्यते साधुशब्दसमानार्थश्च अयं त्वप्रयुक्तत्वादपशब्दव्यपदेशस्यापि न भाजनमित्यर्थः । भावकर्ता चेति । कर्माभावप्रतिपादनपरमेतत् । अधिकरणादौ हि ल्युडादयो यथायोगं भवन्त्येव । भावस्य च लकाराद्युत्पत्तिनिमित्ततया साधनव्यपदेशः । अभिहितमिति । ततश्च जीवतीत्यादिवदिच्छाक्यजन्तस्याकर्मकत्वात्कर्मणि लाद्यभावः । न चेदानीमिति । नियतविषयाया इच्छायाः क्यजन्तेन प्रतिपादनात्तस्याश्च वस्त्वन्तरविषयीकरणाभावादिति भावः । कथं तर्हीति । अत्रापि पुत्रपुत्रकर्मणोऽस्त्यन्तर्भाव इति प्रश्नः । द्वे इति । वाक्या एव कर्मद्वयमाकाङ्क्षितमित्यर्थः । मुण्डयतीति । मुण्डगुणविशिष्टद्रव्यकर्मणो धात्वर्थेन्तर्भावादिति भावः । अत्रापीति । ण्यन्तो धातुर्द्रव्यमान्तर्भावयितुं शक्नोति न तु विशेषणं माणवकादिकमिति भावः । ननु चेति । यद्यप्येतच्चोदितं च परिहृतं च तथापि गमकत्वागमकत्वविषयविभागप्रदर्शनाय पुनरुपन्यासः । नात्रोभाविति ।

कथमसामर्थ्यम् । सापेक्षमसमर्थं भवतीति । नैष दोषः । नात्रोभौ करोतियुक्तौ मुण्डो माणवकश्च । नहि माणवकत्वं क्रियते । यदा चोभौ करोतियुक्तौ भवतः न भवति तदा वृत्तिः । तद्यथा । बलीवर्दं करोति मुण्डं चैनं करोतीति । कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः । माणवकं मुण्डमिच्छतीति । नोभाविषियुक्ताविति । न कर्तव्यः । उभावत्रेषियुक्तौ मुण्डो माणवकश्च । कथम् । न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति माणवकस्थमसौ मौण्ड्यमिच्छति इहापि तर्हि न० प्राप्नोति मुण्डयति माणवकमिति । अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च । न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति किं तर्हि माणवकस्थमसौ मौण्ड्यं निवर्तयति । एवं तर्हि मुण्डादयो गुणवचनाः । गुणवचनाश्च सापेक्षाः । तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यति । अथ वा धातव एव मुण्डादयः । न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते । अथ वा नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च । यदा वाक्यं न तदा प्रत्ययः । यदा प्रत्ययः सामान्येन तदा वृत्तिर्भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । मुण्डयति कं माणवकमिति । मुण्डविशिष्टेन वा करोतिना तमाप्तुमिच्छति । अथ वोक्तमेतत् । नात्र

---

मौण्ड्यमेव करोतियुक्तमिति मौण्ड्यङ्करोतीत्यत्रैवार्थे मुण्डयतीति णिजुत्पद्यतइत्यर्थः। मुण्डं करोति माणवकमित्यत्र तु वाक्ये कर्मत्वमेकस्यैव तत्सामानाधिकरण्यात्तु द्वितीयस्माद् द्वितीयोत्पत्तिः । गुणप्रधानभावश्च विवक्षावशादनियत इति माणवकादयो मौण्ड्याधारविशेषप्रतिपत्त्यर्थमुपादीयमानाः करोतियुक्ता न भवन्तीत्यर्थः । मुण्ड्यतेश्च क्रियाविशेषवाचित्वात्तदपेक्षं माणवकादेः कर्मत्वमिति माणवकं मुण्डयतीत्यादिप्रयोगोपपत्ति । तद्यथेति । बलीवर्दमेवात्मसंबन्धित्वेन करोति तं च मुण्डं करोतीति युगपदुभयोः करोतिकर्मत्वे विवक्षिते मुण्डयति बलीवर्दमिति प्रयोगो न भवतीत्यर्थः । कामन्तर्हीति । अत्रापि मौण्ड्यमेवेष्यते माणवकस्तु तदाधारविशेषप्रतिपादनायोपात्त इति भावः । उभावत्रेति । माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादुभयोः कर्मत्वं सापेक्षत्वादेकतरस्मात्प्रत्ययोत्पत्तिर्न भवतीत्यर्थः । गुणवचनाश्चेति । वचनसामर्थ्यात्सापेक्षेभ्योऽपि मुण्डादिभ्यः प्रत्ययो भवति क्यच्प्रत्ययस्तु निरपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति माणवकं मुण्डमिच्छतीत्यादौ सापेक्षेभ्यो न भवति । नन्वयमपि णिज् गुणमात्रविवक्षायां सावकाशो मुण्डयत्ययं नापितः प्रवीणो मौण्ड्यकरणइत्यर्थावगमात् । ततश्च द्रव्यविशेषापेक्षायां प्रत्ययो न प्राप्नोति । नैष दोषः । तत्करोतीति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि मौण्डादिभ्यो यथा स्यादित्येवमर्थमेव । धातव इति । सौत्रा धातवो मुण्डादयस्तेभ्यश्चुरादिवत्स्वार्थिको णिजित्यर्थः । न चैवेति । यद्यपि क्रियाविशेषाभिधायित्वं मुण्डादीनां नैवोपात्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदवसीयतइत्यर्थः । यथा कण्ड्वादयो द्विविधास्तथा मुण्डादय इति भावः । मुण्डविशिष्टेनेति । पूर्वस्मिन् परिहारे कर्मविशेषानपेक्षायां प्रत्ययोत्पत्तिरित्युक्तम् । अस्मिंस्तु यथा गां दोग्धि पय इति शुद्धस्य दुहेर्गवा पूर्वं संबन्धः पश्चात्तु

व्यापारोनुगन्तव्यः। गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकमिति। अथेह क्यचा भवितव्यम्। इष्टः पुत्रः। इष्यते पुत्रः। केचित्तावदाहुः। न भवितव्यमिति। किं कारणम्। स्वशब्देनोक्तत्वात्। अपरआहुः। भवितव्यमिति। किं कारणम्। धात्वर्थेयं क्यज्विधीयते। स च धात्वर्थः केन चिदेव शब्देन निर्देष्टव्य इति। इह भवन्तस्तावदाहुः। न भवितव्यमिति। किं कारणम्। समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते। इष्टः पुत्रः इष्यते पुत्र इति। नासौ जातु चित्प्रत्ययान्तेन गम्यते। न गम्यते। क्यचि मान्ताव्ययप्रतिषेधः *। क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः। इह मा भूत्। इदमिच्छति। किमिच्छति। उच्चैरिच्छति। नीचैरिच्छतीति। गोसमानाक्षरनान्तादित्येके वक्तव्यमित्याहुः। गामिच्छति गव्यति। समानाक्षर। घटीयति दधीयति मधूयति कर्त्रीयति। नान्तात्। राजीयति तक्षीयति॥

काम्यच्च॥ ६॥ किमर्थश्चकारः। स्वरार्थः। चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्। नैतदस्ति प्रयोजनम्। धातुस्वरेणाप्येतत्सिद्धम्। ककारस्य तर्हीत्संज्ञापरित्राणार्थं आदितश्चकारः कर्तव्यः। अत उत्तरं पठति। काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात् *। काम्यचश्चित्करणमनर्थकं ककार-

---

गोदुहिना पयसः। एवं शुद्धः करोतिर्मौण्ड्येन संबध्यते मौण्ड्यविशिष्टन्तु माणवकेनेत्युच्यते। अनेनैव न्यायेन माणवकं मुण्डमिच्छतीति क्यच् प्राप्नोतीत्याशङ्क्याह अथ वेति। व्यापारो नाश्रयणीयः। प्रयत्नमन्तरेणापीष्टस्य सिद्धत्वादित्यर्थः। क्यच्च गमकत्वान्न भवति। तदुक्तं हरिणा। सदपीच्छाक्यचः कर्म तदाचारक्यचा हृतम्। वाक्यवाच्यमतो व्यक्तेर्यथाभ्यासः क्रमादिष्विति॥ अथेहेति। इच्छाक्यजन्तात्कर्मणि प्रत्ययोत्पत्तिः प्रकारान्तरेणाशङ्क्यते। तथा हि। यद्यत्र क्यज् भवति तदेच्छामात्रस्य क्यचाभिधानादवश्यं कर्मणोभिधानाय तद्वाचिना प्रत्ययेनोत्पत्तव्यम्। यथा पुत्रीयतीति कर्त्रभिधानाय तिपा। स्वशब्देनेति। इष्टमब्दसामानाधिकरण्यात्पुत्र इत्यनेन निर्भुक्तेप्सिक्रियापेक्षकर्मभावस्यार्थस्य प्रतिपादनादित्यर्थः। अयमर्थः यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितं तदा, वाक्यमेव प्रयुज्यते पुत्र इष्ट इत्यादि। न तु क्यजन्तः। तस्याकर्मकत्वात् कर्मणि प्रत्ययानुत्पादात्। स च धात्वर्थ इति। इच्छायाः प्रत्ययार्थत्वं दर्शयितुं वाक्यमुपादेयम्। तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यतां कर्मप्रत्ययो वा। प्रत्यये तूत्पन्ने ऽकर्मकत्वात्कर्मप्रत्ययो न भवति। नासौ जातुचिदिति। प्रत्ययान्तस्याकर्मकत्वात्कर्मणि प्रत्ययोत्पत्त्यसंभवादित्यर्थः। गोसमानाक्षरेति। अकारादयो दश समानाः। तत्र लृवर्णान्तस्य प्रातिपदिकस्यासंभवादृकारान्तस्य च सप्तानां ग्रहणम्। अस्मिंस्तु न्यासे ऽव्याप्तिः। वाच्यतीत्याद्यसिद्धिप्रसङ्गात्। भाष्यकारेण तु मतभेदप्रदर्शनायोपन्यासि॥ ८॥

काम्यच्च॥ आदित इति। अन्तेऽपि कृत आदिकृतफलसंपादनादादितः संपद्यते।

स्येत्संज्ञा कस्मान्न भवति । इदर्थाभावात् । इत्कार्याभावादत्रेत्संज्ञा न भविष्यति । ननु च लोप एवेत्कार्यम् । अकार्यं लोपः । इह हि शब्दस्य कार्यार्थो वा स्यादुपदेशः श्रवणार्थो वा कार्यं चेह नास्ति । असति कार्ये यदि श्रवणमपि न स्यात् उपदेशो ऽनर्थकः स्यात् । इदमस्ति कार्यमग्निचित्काम्यति । क्डितीति गुणप्रतिषेधो यथा स्यात् । नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते । न चायं धातोर्विधीयते । इदं तर्हि प्रयोजनम् । उपयट्काम्यति । क्डितीति संप्रसारणं यथा स्यात् । एतदपि नास्ति प्रयोजनम् । यजादिभिरत्र कितं विशेषयिष्यामः । यजादीनां यः किदिति, यश्च यजादीनां कित् । यजादिभ्यो यो विहितः । अथापि कथं चिदित्कार्यं स्यात् । एवमपि न दोषः । क्रियते न्यास एव द्विचकारो निर्देशः सुप आत्मनः क्यच्चकाम्यच्चेति । अथ वा छान्दसमेतत् । दृष्टानुविधिः छन्दसि भवति । न चात्र संप्रसारणं दृश्यते ।

उपमानादाचारे ॥ १० ॥ अधिकरणाच्च * । अधिकरणाच्चेति वक्तव्यम् । इहापि यथा स्यात् । कुटीयति प्रासादे । प्रासादीयति कुट्याम् ॥

कर्तुः क्यङ् सलोपश्च ॥ ११ ॥ सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्रैव सलोपस्तत्रैव क्यङ् स्यात् । पयायते । इह न स्यात् अपि काकः श्येनायते । नैतदस्ति । प्रधानशिष्टः क्यङ् अन्वाचयशिष्टः सलोपः । यत्र च सकारं पश्यसीति । तद्यथा । कश्चिदुक्तो ग्रामे भैक्षं चर देवदत्तं चानय । स ग्रामे भैक्षं चरति यदि च देवदत्तं पश्यति तमप्यानयति । सलोपो वा * । सलोपो वेति वक्तव्यम् । पयायते पयस्यते । ओजसोऽप्सरसो नित्यम् * । ओज-

अन्यतरस्यामनुवृत्तिः सलोपो वा ...॥

---

तथा हि । यदादौ क्रियते तदा ककारस्यानादित्वादित्संज्ञा न भवति । एवमन्तेऽपि कश्चित्कार्ये ऽन्तोदात्तत्वे सिद्धे नियमार्थः संपद्यते । चिदेवायं व्यपदेष्टव्य । न त्वनुबन्धान्तरेण । किदिति । यजादिभ्यो यो विहित इति । अयं तु सुबन्ताद्विहितः । अथापीति । यदा यजादिभिः किन्न विशेष्यते कार्यित्वेनैव यजादयो निर्दिश्यन्तइति भावः । अथ वेति । विज्रुपे छन्दसीति विचश्छन्दसि विधानात् । इह वाकास्यतीति संप्रसासारणं कित्कार्यमस्ति तस्मात् पूर्वः परिहार आश्रयणीयः धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ९ ।

उपमाना ॥ कुट्यामिति । उपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षायामेतत्प्रयोगासंभवात् वार्तिकारम्भ १० ।

कर्तुः क्यङ् ॥ सलोपविधौ कर्तुरिति स्थानषष्ठी सकारेण कर्तुर्विशेषणात्तदन्तविधिसद्भावाद् हंसायत इत्यादौ सलोपाभावः । सलोपसन्नियोगेनेति । एकवाक्यतासंनियोगार्थं च चशब्दं मत्वा चोद्यते । वाक्यभेदमन्वाचये च चशब्दमाश्रित्य परि-

सोप्सरसो नित्यं सलोपो वक्तव्यः। ओजायमानं यो ऽहिं जघान। अप्सरायते। अपर आह। सलोपोप्सरस एव। ओजस्यतइत्येव भवितव्यम्। कथमोजायमानं यो ऽहिं जघानेति। छान्दसत्वात्सिद्धम्। आचारेवगल्भक्लीबहोडेभ्यः क्विब्वा *। आचारेवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः। अवगल्भते। अवगल्भायते। विक्लीबते। विक्लीबायते। विहोडते। विहोडायते। किं प्रयोजनम्। क्रियावचनता यथा गम्यते। नैतदस्ति प्रयोजनम्। धातव एवावगल्भादयः। न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते। इदं तर्हि प्रयोजनम्। अवगल्भा विक्लीबा विहोडा। अप्रत्ययादित्यकारप्रत्ययो यथा स्यात्। मा भूदेवम्। गुरोश्च हल इत्येव भविष्यति। इदं तर्हि प्रयोजनम्। अवगल्भाश्चक्रे विक्लीबांचक्रे। विहोडांचक्रे। कास्प्रत्ययादाममन्त्रे लिटीत्याम् प्रत्ययो यथा स्यात्। अपर आह। सर्वप्रातिपादिकेभ्य आचारे क्विब्वा वक्तव्यः। अश्वति गर्दभतीत्येवमर्थम्। न तर्हि इदानीं गल्भाद्यनुक्रमणं कर्तव्यम्। कर्तव्यं च। किं प्रयोजनम्। आत्मनेपदार्थानतुवन्धानासंक्ष्यामीति। गल्भ क्लीब होड ॥

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥ हलो लोपसन्नियोगेनायं क्यङ् विधीयते। तेन यत्रैव हलो लोपः तत्रैव प्राप्नोति। नैष दोषः। प्रधानशिष्टः क्यङ् अन्वाचयशिष्टो हलो लोपः। यत्र च हलं पश्यसीति। भृशादिष्वभूततद्भावग्रहणम् *। भृशादिष्वभूततद्भावग्रहणं कर्त्तव्यम्। इह मा भूत्। क्व दिवा भृशा भवन्तीति। च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् *। च्विप्रतिषेधश्चानर्थकः। किं कारणम्। भवत्यर्थे क्यङ्वचनात्। भवत्यर्थे क्यङ्विधीयते। भवति योगे च्विविधानम् *। भवतिना योगे च्विर्विधीयते तत्र च्विनो

---

हारः। अपर आहेति। मतभेदप्रदर्शनायोपन्यासः न त्वयं स्थितः पक्ष इत्याहुः। क्रियावचनतेति। आचारलक्षणक्रियावचनतेत्यर्थो विवक्षितो धातुपाठे हि पाठात्तेषां क्रियावचनता सिद्धैव। न चैव हीति। अनेकार्थत्वाद्धातूनामाचारक्रियावृत्तित्वस्या सिद्धत्वादित्यर्थः। अश्वतीति। प्रातिपदिकादेवायं क्विब्विधीयते न सुबन्तात्तेन पदत्वाभावादतोगुणइति पररूपत्वं भवति। एतच्च सर्वेभ्य इति वक्तव्ये सर्वप्रातिपदिकेभ्य इति वचनाल्लभ्यते। आत्मनेपदार्थानिति। वाक्ये ऽकारस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञायते इति भावः ११।

भृशादिभ्यो ॥ हल इति। हला भृशादयो विशेष्यन्ते तेन हलन्तानामेव क्यङ्लोपाभ्यां भवितव्यमित्यर्थः। प्रधानशिष्ट इति। वाक्यभेदेन सर्वेभ्यो भृशादिभ्यः क्यङं विधाय हलन्तानां लोपो विधीयतइत्यर्थः। अन्यथाऽनर्थकः पाठः स्याद् हलन्तानाम्। क्व दिवा भृशा भवन्तीति। ये रात्रौ भृशा आलोकास्ते दिवसे क्व प्रदेशे भवन्तीत्यर्थः। अत्राभूततद्भावाभावः। च्विनोक्तत्वादिति। च्विसहचरितेन भवतिनेत्यर्थः।

वक्तत्वात्तस्यार्थस्य क्यङ् न भविष्यति। डाजन्तादपि तर्हि न प्राप्नोति। पटपटायते। डाजपि हि भवतिना योगे विधीयते। भविष्यत्यर्थे क्यष् विधीयते। डाचि वचनप्रामाण्यात् ॥ डाचि वचनप्राण्याद्भविष्यति। किं वचनप्रामाण्यम्। लोहितादिडाज्भ्यः क्यष् इति। इह किं चिदक्रियमाणं चोद्यते। किं चिच्च क्रियमाणं प्रत्याख्यायते। सूत्रभेदः कृतो भवति। यथान्यासमेवास्तु। ननु चोक्तमिह कस्मान्न भवति क्व दिवा भृशा भवन्तीति। नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्तमिव युक्तं वा यत् किं चिदिह दृश्यते ततः अन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते। अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति। एवमिहाप्यच्वेरिति प्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञायते। किं चान्यदतो ऽच्व्यन्तं च्विसदृशम्। अभूततद्भावः। काश्चित्प्रकृतयः सोपसर्गाः पठ्यन्ते। अभिमनस् सुमनस् उन्मनस् दुर्मनस्। तत्र विचार्यते। भृशादिषूपसर्गः प्रत्ययार्थविशेषणं वा स्यात्। अभिभवतौ सुभवतौ उद्भवतौ दुर्भवताविति। प्रकृत्यर्थविशेषणं वा। अभिमनस्शब्दात् सुमनस्शब्दात् उन्मनस्शब्दात् दुर्मनस्शब्दाद्वेति। युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेन प्रकृत्यर्थविशेषणं न भवितव्यम्। यावता प्राक् प्रकृतेः पठ्यन्ते। यदि प्रत्ययार्थविशेषणं स्युः प्राग्भवतेः पठ्येरन्। नेमे शक्याः प्राग्भवतेः पठितुम्। एवं हि विशिष्टे प्रत्ययार्थे भृशादिमात्रादुत्पत्तिः प्रसज्येत। तस्मान्नैवं शक्यं वक्तुम्। न चेदेवम्। जायते विचारणा। कश्चात्र विशेषः। भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः ॥ भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे

---

डाचि वचनप्रामाण्यादिति। अप्रयुक्तएव भवतौ भवत्यर्थविवक्षायां वचनप्रामाण्याद् डाचं विधाय भवत्यर्थे क्यष्विधीयतइत्यर्थः। यथान्यासमिति। अच्वेरिति पर्युदासाश्रयेण दोषद्वयस्यापि परिहार इत्यर्थः। इह काश्चिदिति। यदा मनःशब्देनासमस्ता एव सूद्दुरभय इति पक्षस्तदा प्रत्ययार्थविशेषणं ते भवन्ति। मनः शब्दश्चावृत्तिविषये तद्वति वर्तते। मनस्वी सुष्ठु भवति। उद्भवति दुष्ठु भवति। आभिमुख्येन भवतीत्यत्रार्थे क्यङ्विधिः। अन्ये त्वाहुः। प्राप्त्यर्थस्यात्र वृत्तिविषये भवतेर्ग्रहणं तेन मनः कर्म शोभनं प्राप्नोतीत्यादिरर्थः। क्यङन्तस्य भवति। यदा तु मनः सब्देन स्वादीनां बहुव्रीहिरिति पक्षः तदा प्रकृत्यर्थविशेषणं ते भवन्तीति विचारः क्रियते प्राक् प्रकृतेरिति। प्रकृतेरेवावयवाः पूर्वभूताः पठ्यन्तइत्यर्थः। निघात इति। मनः शब्दात् क्यङि कृते मनायतइत्यस्य तिङन्तस्य पदस्यातिङन्तात् स्वादेः पदादुत्तरत्वात्। प्रकृत्यर्थविशेषणत्वे तु सुमनायतइत्यादि तिङन्तं संपद्यतइति तद्व्यतिरिक्तपदान्तराभावान्निघाताभावः। उपसर्गस्य तु धात्वन्तर्भावात्ततः पूर्वमडाटौ प्राप्नुतः। क्यङन्ते च तस्यानुप्रवेशात्तद्व्यतिरिक्तपदाभावात्समासाभावाल्ल्यपो ऽप्रसङ्गः। क्यङन्ताच्च

दोषो भवति । अभिमनायते । तिङ्ङतिङ इति निघातः प्रसज्येत । अस्तु तर्हि प्रकृत्यर्थविशेषणम् । सोपसर्गादिति चेदटि दोषः * । सोपसर्गादिति चेदटि दोषो भवति । स्वमनायतेति अत्यल्पमिदमुच्यते । अट्ल्यप्द्विर्वचनेषु * । अट्ल्यप्द्विर्वचनेष्विति वक्तव्यम् । अटि उदाहृतम् । ल्यपि । सुमनाय्य । द्विर्वचने । अभिमिमनायिषते । नैष दोषः । अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या । असंग्रामयत शूर इत्येवमर्थम् । तन्नियमार्थं भविष्यति । संग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गादिति । यदि नियमः क्रियते । स्वरो न सिध्यति । एवं तर्हि भृशादिषु उपसर्गस्य पराङ्गवद्भावं वक्ष्यामि । यदि पराङ्गवद्भाव उच्यते । अट्ल्यब्द्विर्वचनानि न सिध्यन्ति । स्वरविधाविति वक्ष्यामि । एवं च कृत्वास्तु प्रत्ययार्थविशेषणमिति । ननु चोक्तं भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोष इति । स्वरे पराङ्गवद्भावेन परिहृतम् । अयं तर्हि प्रत्ययार्थविशेषणे सति दोषः । क्यङोक्तत्वात्तस्यार्थस्य अङ्प्रयोगो न प्राप्नोति । किं कारणम् । उक्तार्थानामप्रयोग इति । तद्यथा । अपि काकः श्येनायते इत्यत्र क्यङोक्तत्वादाचारार्थस्य आङ्प्रयोगो न भवति । अस्त्यत्र विशेषः । एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते । इह पुनरनेकेन तत्र मनायत इत्युक्ते संदेहः स्यात् । अभिभवतौ सुभवतौ दुर्भवतौ उद्भवताविति । तत्रासंदेहार्थमुपसर्गः प्रयुज्यते । यत्र तर्ह्येकेन उत्पुच्छयते । अत्राप्यनेकेन । पुच्छादुदसने पुच्छाद्व्यसने पुच्छात्पर्यसने चेति ॥

लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥ किमर्थः ककारः । गुणवृद्धिप्रतिषेधार्थः । क्ङिति चेति गुणवृद्धिप्रतिषेधो यथा स्यात् । नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते । न चायं धातोर्विधीयते । लोहितादीनि प्रातिपदिकानि । सामान्यग्रहणार्थस्तर्हि । क सामान्यग्रहणार्थेनार्थः । नः क्ये इति । नायं नान्ताद्विधीयते । इह तर्हि यस्य हलः क्यस्य विभाषेति । नायं हलन्ताद्विधीयते । इह तर्हि आपत्यस्य च तद्धिते नातिं, क्यच्व्योश्चेति ।

---

सनि कृते सोपसर्गस्य द्विर्वचनप्रसङ्ग । अवश्यमिति । ग्रामशब्द एव युद्धे वर्तते सामान्यतो दृष्टाच्चानुमानात् क्रियाविशेषस्य द्योतकः संशब्दः । तथा च वा पदान्तस्येति परसवर्णविकल्पो भवति । उपसर्गसदृशानर्थकशब्दान्तरावयवे तु संग्रामशब्दे भ्युपगम्यमाने परसवर्णविकल्पो न स्यात् । तत्र ग्रामयुद्ध इत्येव वक्तव्यं संशब्दस्तु द्योतक प्रयोगदर्शनाल्लभ्यते । यथा इक् स्मरणे इङध्ययने इत्यनयो अधिः । नियमार्थस्तु संग्रामेतिपाठः । नियमार्थत्वे च प्रत्ययोत्पत्तावुपसर्ग पृथक् क्रियते । अतो धातौ तेषामन्तर्भावादू यथेष्टमडादिसिद्धिः । प्रत्ययार्थविशेषणपक्षे तु विरोध दभूतद्भावविषयत्वं नाश्रीयते । असंग्रामयतेति । संग्रामयतिरनुदात्तेद् बोद्धव्य ।

नायमापस्यादिधीयते। इह तर्हि क्याच्छन्दसीति। क्याच्छन्दसीत्येव तद्वक्तव्यम्। चुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम्। इदं तर्हि प्रयोजनम्। यत्तदकृद्यकार इतिदीर्घत्वम्। तत्र कृङिद्ग्रहणमनुवर्तते तदिहापि यथा स्यात्। लोहिनायतीति। किं पुनः कारणं तत्र कृङिद्ग्रहणमनुवर्तते। इह मा भूत्। उरुया धृष्णुयेति। यदि तत्र कृङिद्ग्रहणमनुवर्तते। पित्र्यमिति रीङ्भावो न प्राप्नोति। रीङ्भावो कृङिद्ग्रहणं निवर्तिष्यते। यदि निवर्त्तते। कथमसूया वसूया च यजामहइति। असूयतेरसूया वसूयतेर्वसूया: अथ वा छन्दसमेतत्। दृष्टानुविधिश्छन्दसि भवति। यदि च्छान्दसत्वं हेतुः। नार्थः कृङिद्ग्रहणेनानुवर्तमानेन। कस्मान्न भवति उरुया धृष्णुयेति। छान्दसत्वात्। अथ वास्त्वत्र दीर्घत्वं छान्दसं ह्रस्वत्वं भविष्यति। तद्यथा उपगायन्तु मां पत्नयो गर्भिणयो युवतय इति। अथ किमर्थः षकारः। विशेषणार्थः। क्व विशेषणार्थेनार्थः। वा क्यष इति। वा यादिति ह्युच्यमाने पाश्या अत्रापि प्रसज्येत। नैतदस्ति प्रयोजनम्। परस्मैपदमित्युच्यते। न चात्र परस्मैपदं नाप्यात्मनेपदं पश्यामः। सामान्यग्रहणाविघातार्थस्तर्हि क्व सामान्यग्रहणाविघातार्थेनार्थः। क्याच् छन्दसीति। क्याच् छन्दसीत्येतं च तद्वक्तव्यम्। चुरण्युः तुरण्युर्भुरण्युरित्येवमर्थम्। लोहितडाज्भ्यः क्यष्वचनम् *। लोहितडाज्भ्यः क्यष् वक्तव्यः। लोहितायति लोहितायते। पटपटायति पटपटायते। दमदमायति। दमदमायते मटमटायति मटमटायते। अथान्यानि लोहितादीनि। भृशादिष्वितराणि *। भृशादिष्वितराणि पठितव्यानि। किं प्रयोजनम्। ङित इति नियमात्मनेपदं यथा स्यात्। लोहितादि॥

कष्टाय क्रमणे॥ १४॥ कष्टायेति किं निपात्यते। कष्टशब्दाच्चतुर्थीसमर्था-

---

लोहितादि॥ भुरण्युरिति। कण्ड्वादियगन्तादुप्रत्ययः। उरुयेति। सुपां सुलुगिति तृतीयास्थाने यादेशः। पित्र्यमिति। पितुरागतमिति पितुर्यच्चेति यत्प्रत्ययः। यदीति। यदि रीङ् भाव एव निवर्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिद्ध्यति। असूये कण्ड्वादियगन्तस्यासूया। वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरम्। अथ वेति। वर्णव्यत्ययेन दीर्घः क्रियतइत्यर्थः। यदीति। अनेन ककारः प्रत्याख्यातः। इदानीं षकारप्रत्याख्यानाय विचार. क्रियते। अथ किमर्थ इति। पाश्येति। पाशादिभ्यो य इति समूहे यप्रत्ययः। वायादिति सूत्रं विध्यर्थं मन्यते। टापि कृतएकादेशस्यान्तवद्भावाद्यप्रत्ययान्तमेतत्। नैतदस्तीति। सामान्यविहितानामात्मनेपदपरस्मैपदानां नियमार्थं प्रकरणमित्यदोषः। लोहितडाज्भ्य इति। आदिशब्दप्रत्याख्यानमेतत्। अपठितसंग्रहार्थोऽप्यादिशब्दो न भवति तस्य वार्तिककारेण दूषितत्वात्॥ १३॥

कष्टाय॥ कष्टायेति किं निपात्यतइति। विधावस्तार्जवमेव क्रमणमिति विशेषो न

त्क्रमणे ऽनार्जवे क्यङ् निपात्यते । कष्टाय कर्मणे क्रामति कष्टायते । अत्यल्पमिदमुच्यते कष्टायक्रमणइति । सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् * । सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् । सत्र । सत्रायते । सत्र । कक्ष । कक्षायते । कक्ष । कष्ट । कष्टायते । कष्ट । कृच्छ्र । कृच्छ्रायते । कृच्छ्र । गहन । गहनायते । गहन । अपर आह । सत्रादिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेनार्जवे क्यङ् वक्तव्यः । तान्येवोदाहरणानि । सत्रादिभ्य इति किमर्थम् । कुटिलाय अनुवाकाय क्रमति । चतुर्थ्यन्तेभ्य इति किमर्थम् । अजः कष्टं क्रामति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । नेदं प्रत्ययान्तनिपातनम् । किं तर्हि । तादर्थ्ये एषा चतुर्थी । कष्टाय यत् प्रातिपदिकं कष्टार्थं यत्प्रातिपदिकमिति । कष्टाय ।

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १५ ॥** रोमन्थ इत्युच्यते । कोयं रोमन्थो नाम । उद्गीर्णस्य वावगीर्णस्य वा मन्थो रोमन्थः । यद्येवं हनुचलनइति वक्तव्यम् । इह मा भूत् । कीटो रोमन्थं वर्तयतीति । तत्तर्हि वक्तव्यम् । न वानभिधानात् । न वा वक्तव्यम् । कस्मान्न भवति कीटो रोमन्थं वर्तयतीति । अनभिधानात् । तपसः परस्मैपदं च * । तपसः परस्मैपदं चेति वक्तव्यम् । तपश्चरति तपस्यति । कथं तपस्यते लोकजिगीषुरग्नेः । छान्दसत्वाद् भविष्यति । कर्मणो ॥

**वाष्पोष्मभ्यामुद्वमने ॥ १६ ॥** फेनाच्च * । फेनाच्चेति वक्तव्यम् । फेनायते । वाष्पो ।

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥** अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् * । अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम् । अटा । अटायते । अट्टा । अट्टायते । शीका । शीकायते । कोटा । कोटायते । पोटा । पोटायते । सोटा । सोटायते । प्रुष्टा । प्रुष्टायते । प्लुष्टा । प्लुष्टायते । सुदिनदुर्दिनाभ्याम् * । सुदिनदुर्दिनाभ्यां चेति वक्तव्यम् । सुदिनायते दुर्दिनायते । नीहाराच्च * । नीहाराच्चेति वक्तव्यम् । नीहारायते शब्दवैर ॥

---

लभ्यतइति क्रमणविशेषलाभाय निपातनाश्रयणम् । सत्रेति । सत्रादयोऽत्र वृत्तिविषये पापपर्यायाः कण्वं पापमुच्यते । कुटिलायेति । दुरध्येयत्वादनुवाकस्य नार्जवमस्तीति भावः । अज इति । अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थः । कष्टाय यदिति । कष्टलक्षणार्थप्रतिपादनाय यत् प्रातिपदिकं प्रयुज्यते तस्मात् क्रमणेर्थे क्यङ् भवतीत्यर्थः । क्रमणविशेषश्चानार्जवमाभिधानशक्तिस्वाभाव्याल्लभ्यते । व्यवस्थितविभाषाविज्ञानाच्च पापादिभ्योऽपि प्रसङ्गाभावः ॥ १४ ॥

कर्मणो ॥ उद्गीर्णस्येति । मुखप्रदेशमाकृष्टस्येत्यर्थः । अवगीर्णस्येति । अपानप्रदेशान्निःसृतस्येत्यर्थः । हनुचलन इति । हनुचलनसहचरितं चर्वितस्य मुखप्रदेशमाकृष्य यच्चर्वणं तत्र यथा स्यादित्यर्थः । कीट इति । अपानप्रदेशान्निःसृतमश्नातीत्यर्थः । अनभिधानादिति । रोमन्थायतइति क्यङन्तेन लौकिके प्रयोगे चर्वितचर्वणस्यैवाभिधानं न त्वर्थान्तरस्येत्यर्थः ॥ १५ ॥

सुखादिभ्यः कर्तृवेदनायाम् ॥ १८ ॥ कर्तृवेदनायामिति किमर्थम् । इह मा भूत् । सुखं वेदयते प्रसाधको देवदत्तस्य । कर्तृवेदनायामित्युच्यमानेपि अत्र प्राप्नोति। किं कारणम्। कर्तुरितीयं कर्तरि षष्ठी।वेदनायामिति चात्मनो भावे। स यद्येवात्मनो वेदयते । अथापि परस्य । कर्तृवेदनैवासौ भवति । न कर्तृग्रहणेन वेदनाभिसंबध्यते । किं तर्हि सुखादीन्यभिसंबध्यन्ते । कर्तुर्यानि सुखादीनीति ।

नमोवरिवश्चित्रङः क्यच् ॥ १९ ॥ नमसः क्यचि द्वितीयानुपपत्तिः* ।नमसः क्यचि द्वितीया नोपपद्यते । नमस्यति देवानिति । किं कारणम् । नमःशब्देन योगे चतुर्थी विधीयते सा प्राप्नोति । प्रकृत्यन्तरत्वात् सिद्धम् * । नमःशब्देन योगे चतुर्थी विधीयते । नमस्यतिशब्दश्चायम् । ननु च नमस्यतिशब्दे नमःशब्दोस्ति तेन योगे प्राप्नोति । नैष दोषः । अर्थवतो नमःशब्दस्य ग्रहणम् न च नमस्यतिशब्दे नमःशब्दोर्थवान् । अथ वोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया विभक्तिर्भविष्यति । क्यजादिषु प्रत्ययार्थनिर्देशः * । क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः । नमसः पूजायाम् । वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । भाण्डात्समाचयने । चीवरादर्जने परिधाने च । पुच्छादुदसने व्यसने पर्यसने चेति । किं प्रयोजनम् । क्रियावचनता यथा स्यात् । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति क्रियावचनाः क्यजादय इति यदयं सनाद्यन्ता धातव इति धातुसंज्ञां शास्ति । कथं कृत्वा ज्ञापकम् । धातुसंज्ञावचनएतत्प्रयोजनं धातोरिति तव्यदादीनामुत्पत्तिर्यथा स्यात् । यदि चात्र क्रियावचनता न स्याद् धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । किं कारणम् । साधने तव्यदादयो विधीयन्ते । साधनं च क्रियायाः क्रियाया अभावात्साधनाभावः साधनाभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः ।

---

सुखादिभ्यः॥ किं तर्हीति । वेदनायाः कर्तारमन्तरेणाभावात् कर्तृग्रहणसामर्थ्यात् सुखादीनि विशेष्यन्ते। कर्तृग्रहणं च सुपां सुलुगिति, षष्ठीलुका निर्दिष्टम् । ततश्च वेदयिता यदात्मसंबन्धीनि सुखादीनि वेदयते तदा प्रत्ययो नान्यदीयसुखादिवेदने ॥१६॥१७॥

नमोवरिवे ॥ प्रकृत्यन्तरत्वादिति । नमस्येति धातुं व्युत्पादयितुं निपातनमःशब्दसदृशशब्दान्तरावयवकल्पना क्रियते । परमार्थतस्तु अविद्यमानावयवार्थो नमस्यशब्द: पूजावाची प्रकृत्यन्तरमित्यर्थः । ननु चेति । स एवायमिति प्रत्यभिज्ञानान्निपात एवायमिति भावः । अर्थवत इति । नमस्यशब्दस्य समुदायस्यैवार्थवत्त्वादिति भावः । अथ वेति । अर्थवत्ताभ्युपगमेन नमस्कारेण पूजयतीत्यर्थाङ्गीकारेण परिहारान्तरम् । चतुर्थ्यास्तु नमोस्तु देवेभ्य इत्यादिरवकाशः । नमस्करोमि नारायणमित्यत्रापि कारकविभक्तिरेव भवति । क्यजादिष्विति । करणग्रहणस्य वेदनाग्रहणेन व्यवधानादनधिकारे स्वार्थे प्रत्ययप्रसङ्ग इति वचनम् । वरिवस इति । सपर्या सेवा ।

पश्यति त्वाचार्यः क्रियावचनाः क्यजादय इति। ततः सनाद्यन्ता धातव इति धातुसंज्ञां शास्ति। ननु चेदं प्रयोजनं स्यात्। परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामीति। न परसाधने उत्पत्त्या भवितव्यम्। किं कारणम्। साधन-इति सम्बन्धिशब्दोयम्। संबन्धिशब्दाश्च पुनरेवमात्मका यदुत संबन्धिनमाक्षिपन्ति। तद्यथा। मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति। न चोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति। संबन्धाच्चैतद् गम्यते या यस्य माता यश्च यस्य पितेति। एवमिहापि संबन्धादेतद् गन्तव्यम्। यस्य धातोर्यत् साधनमिति। अथ वा धातव एव क्यजादयः न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते। कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति येनैव खल्वपि हेतुना पचादयः क्रियावचनास्तेनैव क्यजादयोपि। एवमर्थं खल्वप्याचार्यश्चित्रयति क्व चिदर्थानादिशति। क्व चिन्नेति। एवमप्यर्थादेशनं कर्तव्यम्। कथमिमे अबुधा बुध्येरन्निति। अथ वा शक्यमेवार्थादेशनमकर्तुम्। कथम्। करण इति वर्तते। करणं च करोतेरर्थः। करोतिश्च क्रियासामान्ये वर्तते। नमोवरि॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्॥ २१॥

इमौ हलिकली स्तः इकारान्तौ। हलिः कलिः। अस्ति हलशब्दः कलशब्दश्चाकारान्तः। कयोरिदं ग्रहणम्। याविकारान्तौ तयोरत्वं निपात्यते। किं प्रयोजनम्। हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्॥ हलिकल्योरत्वनिपातनं क्रियते सन्वद्भावो मा भूदिति। अजहलद् अचकलत्। नैतदस्ति प्रयोजनम्। इकारलोपे कृते अग्लोपिनां नेति प्रतिषेधो भविष्यति। वृद्धौ कृतायां लोपः त-

---

परिचर्यायामिति पाठान्तरम्। परसाधन इति। शब्दान्तरवाच्यायां क्रियायां यत्कर्मादिकारकं तत्र तव्यादीनां वृक्षं पश्येत्यादौ द्वितीयादीनामिव स्वार्थिकत्वाद् द्रव्यवाचित्वेपि क्यजाद्यन्तानामुत्पत्तिः स्यादेवेति भावः। न परसाधन इति। द्वितीयादीनां प्रातिपदिकाद्विधानात् तस्य च द्रव्यवचनत्वाद्वचनप्रामाण्यात् परसाधन उत्पत्तिर्भवति। तव्यादयस्तु धात्वन्तरेषु क्रियावाचिषु स्वसाधने सावकाशाः। परसाधनेनोत्पद्यन्तइत्यर्थः। अथ वेति। अभिधानशक्तिस्वाभाव्यादन्तरेणाप्यर्थादेशनं विशिष्टक्रियावचनत्वस्य सिद्धत्वादित्यर्थः। चित्रयतीति। चित्र वैचित्र्यकरणइति चौरादिकस्य रूपमनेकं मार्गमाश्रयतीत्यर्थः। क्रियासामान्यइति। सामान्येन च विशेषाणामाक्षेपात्कश्चित् प्रत्ययः क चिद्विशेषे भवतीत्यर्थः। न च वेदनाग्रहणेन करणस्य विच्छेदः। तयोर्विरोधाभावात्॥ १६॥

मुण्डमिश्र॥ कयोरिदं ग्रहणमिति। किमिकारान्तयोः कृतात्वयोर्ग्रहणमुताकारान्तयोरेवेति प्रश्नः। किं प्रयोजनमिति। हलि कलि इत्येव कस्मान्न क्रियतइत्यर्थः। शब्दा-

न्नाग्लोप्यङ्गं भवति । इदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति । किमत्र कर्तव्यम् । परत्वाद् वृद्धिः । नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोति अकृतायामपि प्राप्नोति । वृद्धिरपि नित्या । कृतेपि लोपे प्राप्नोत्यकृतेपि । अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याकृतायाम् । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । वृद्धिरप्यनित्या । अन्यस्य कृते लोपे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद् वृद्धिः । वृद्धौ कृतायां लोपः तन्नाग्लोप्यङ्गं भवति । अस्तु पुनः सति वृद्धिः क्रियतां लोप इति । यद्यपि परत्वाद् वृद्धिः वृद्धावपि कृतायामगेव लुप्यते । तस्मात्सुष्ठूच्यते हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति । मुण्डमिश्र ॥

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २२ ॥ समभिहार इति कोयं शब्दः । समभिपूर्वाद्धरतेर्भावसाधनो घञ् । समभिहरणं समभिहार इति तद्यथा । पुष्पाभिहारः उत्पलाभिहारः मालाभिहारः फलाभिहार इति । विषम उपन्यासः । बह्वी हीमाः सुमनसः तत्र युक्तः समभिहार इति । इह पुनरेका क्रिया । यद्यप्येका सामान्यक्रिया । अवयवक्रियास्तु बह्व्यः । अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः । ताः कश्चित कात्स्न्येंन करोति । कश्चिदकात्स्न्येंन ।

———————

न्तरस्य चेति । यद्यपि वृद्धौ कृतायामपि लोपस्य प्रवृत्तिस्तथापि वाचानेकं तस्यानित्यत्वम् । अथ वा अन्यस्य प्रवृत्तावप्यन्यस्य स्थानिनोऽप्रवृत्या लोपस्यानित्यत्वम् । अन्यस्य कृते लोप इति । अत उपधाया इत्यनेनाकारस्येत्यर्थः । ननु लोपस्य स्थानिवद्भावात्कथमकारस्य प्राप्नोति । नैष दोषः । प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः क्रियते । पूर्वस्य विधौ स्थानिवद्भावविधानात् । अप्राप्तौ तु पूर्वविध्यभावात् स्थानिवद्भाव एव न स्यात् । यद्यपि भिन्नलक्षणा भिन्नस्वभावा च वृद्धिस्तथापि वृद्धिशब्दवाच्यत्वादभेदमाश्रित्य शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वं कथितम् । तत्त्वतस्तु लोपे कृते वृद्धेरप्राप्त्याऽनित्यत्वं वक्तव्यम् । न्यायव्युत्पादनाय त्वन्यथाभिहितम् । सूत्रं चेदं प्रातिपदिकाद्धात्वर्थ इति णिचि सिद्धे प्रपञ्चार्थमित्याहु । न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः क्रियते । राजानमतिक्रान्तवानत्यरराजदित्यादावपि णिचो दर्शनात् । मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योपि णिजर्थं वा ॥ २१ ॥

धातोरेकाचो ॥ इह समभिहारो नाम मूर्तस्यानेकस्यैककालस्य भवति । धातुवाच्या तु क्रियैकैव युगपदेकेन धातुनानेकस्या अनभिधानात् । सा च निवृत्तभेदा साध्यैकस्वभावत्वाद्धातुना प्रत्याय्यते । अधिश्रयणादीनां च क्रमजन्यत्वाद्युगपदवस्थानाभावाच्च क्रियासमभिहारो न संभवतीति मन्यमानः पृच्छति समभिहार इति । कोयमिति । इतरस्तद्बुद्धिपरीक्षार्थं शब्दव्युत्पत्तिमाह समभिपूर्वादिति । यद्यप्येकेति । मुख्यस्य समभिहारस्येहासंभवाद् गौण आश्रीयते । बुद्धिगोचरानेकमकलावयवक्रियागतः पौनःपुन्येनानुष्ठीयमानप्रधानक्रियाविषयो वेत्यर्थः । सामान्यक्रियेति । साधारणी समूहरूपा

तत्र यः कात्स्न्र्येन करोति स उच्यते पापच्यतइति । पुनः पुनर्वा पचति पापच्यते इति । अथ धातुग्रहणं किमर्थम् । इह मा भूत् माठाति भृशमिति । अत उत्तरं पठति । यङ्विधौ धातुग्रहणे उक्तम् । किमुक्तम् । तत्र तावदुक्तम् । कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गं कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म । सोपसर्गस्य हि कर्मत्वे धात्वधिकारेपि सनो ऽविधानमकर्मत्वादिति । एवमिहापि क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्यम् । सोपसर्गः क्रियासमभिहार इति चेत् क्रियासमभिहारविशेषकत्वादुपसर्गस्यानुपसर्गः क्रियासमभिहारः । सोपसर्गस्य हि क्रियासमभिहारत्वे धात्वधिकारेपि यङोऽविधानमक्रियासमभिहारत्वादिति । अथैकाज्झलादिग्रहणं किमर्थम् । इह मा भूत् । जागर्त्ति भृशमीक्षते भृशमिति । एकाज्झलादिग्रहणे चोक्तम् । किमुक्तम् । तत्र तावदुक्तम् । कर्मसमानकर्तृग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात् । अकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानादिति । इहापि एकाज्झलादिग्रहणानर्थक्यं च क्रियासमभिहारे यङ्वचनाद् अनेकाचो हलादेर्ह्यनभिधानमिति । तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेपि ह्येकाज्झलादिग्रहणे यत्र चैकाचो हलादेश्चोत्पद्यमानेन यङार्थस्याभिधानं न भवति । न भवति तत्रोत्पत्तिः । तथा । भृशं शोभते भृशं रोचते । यत्र चानेकाचो ऽहलादेर्वोत्पद्यमानेन यङा ऽर्थस्याभिधानं भवति, भवति तत्रोत्पत्तिः । तद्यथा । अटाट्यते अरार्यते अशाश्यते सोसूच्यते सोसूत्र्यते मोमूत्र्यते । ऊर्णोतेश्चोपसंख्यानम् * । ऊर्णोतेश्चोपसंख्यानं कर्तव्यम् । प्रोर्णोनूयते । असत्पमिदमुच्यते ऊर्णोतेरिति । सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम् । सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं कर्तव्यम् । किं प्रयोजनम् । यङ्विधावनेकाजहलाद्यर्थम् । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते । ऊर्णोतेर्न वक्तव्यः ।

---

क्रिया धातुवाच्येत्यर्थः । यथोक्तं हरिणा । गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पितोभेदः क्रियेति व्यपदिश्यते । समूहश्च तथाभूतः प्रतिभेदं समूहिषु । समाप्यत ततो भेदे कालभेदश्च सम्भव इति । अथ वा अधिश्रयणादीनां तादर्थ्येन प्रवर्तनाद् गुणत्वादवयवत्वे तस्याश्च साधारणत्वमुच्यते । तदुक्तम् । अनन्तरफलं यस्याः कल्प्यते तां क्रियां विदुः । प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता । कात्स्न्र्येनेति । विजातीयाव्यवहितास्साकल्येनेत्यर्थः । भृशेति । धातुरेव समभिहारविशिष्टक्रियावाची द्योतकस्तूपसर्गो न तु वाचक इत्यर्थः । प्राटतीति । धातूपसर्गसमुदायस्य क्रियाविशेषावगतिहेतुत्वात्ततो यदि प्रत्ययः स्यात् ततः सोपसर्गस्य द्विवचनं प्रसज्येत । प्रगृह्यतइति चेष्यते । सन्सूत्रोक्तं वस्त्विहाप्यतिदिशति यङ्विधाविति । धात्वधिकारेपीति । प्रपापच्यतइत्यादौ । ऊर्णोतेश्चेति । यथान्यासे सिद्ध्यभावाद्वचनम् । कार्यान्तरसिद्धये ऽवश्य-

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् * आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात् । क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् * । क्रियासमभिहारे यङो लोड् भवति विप्रतिषेधेन । क्रियासमभिहारे यङ् भवतीत्यस्यावकाशः । धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते । अधातुसम्बन्धश्च । लोलूयते । पोपूयते । लोटोवकाशः । धातुर्योनेकाजहलादिः क्रियासमभिहारे वर्तते धातुसम्बन्धश्च । स भवान् जागृहि जागृहीत्येवायं जागर्ति स भवानीहस्वेहस्वेत्येवायमीहते । धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते धातुसम्बन्धश्च तस्माद् उभयं प्राप्नोति । स भवान् लुनीहि लुनीहीत्येवायं लुनाति । लोड् भवति विप्रतिषेधेन । न तर्हीदानीमिदं भवति । स भवान् लोलूयस्व लोलूयस्वेत्येवायं लोलूयतइति । भवति च । न वा नानार्थत्वात्कर्तृकर्मणो हि लविधानं क्रियासमभिहारे स्वार्थे यङ् । न वार्थो विप्रतिषेधेन । किं कारणम् । नानार्थत्वात् । का नानार्थता । कर्तृकर्मणोर्हि लोड् विधीयते । क्रियाविशेषे स्वार्थे यङ् । तत्रान्तरङ्गत्वाद्यङा भवितव्यम् । न तर्हि इदानीमिदं भवति । स भवान् लुनीहि लुनीहीत्येवायं लुनातीति । भवति च । विभाषा यङ् । यदा न यङ् तदा लोट् धातोरेः॥

नित्यं कौटिल्ये गतौ ॥ २३ ॥ लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ २४ ॥ उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणार्थक्यम् * । उत्तरयोर्योगयोर्विग्रहेण विशेषस्यासंप्रत्ययान्नित्यग्रहणमनर्थकम् । न हि कुटिलं क्रामतीति चङ्क्रम्यतइति गम्यते अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम्,

---

मूर्णोतेर्नुवद्भावो वाच्यस्तेनैव यङोपि सिद्धिमाह वाच्य इति । तत्र यङि भावातिदेश आमिटोस्त्वभावातिदेशस्तयोर्नैतेरभावात् इड्डुपग्रहः । इट्प्रतिषेधः । विभाषा गुणइति पञ्चमी । फलस्य चात्र हेतुत्वं यथाध्ययनेन वसतीति । उदाहरणानि । प्रोर्णोनूयते । प्रोर्णुनाव । प्रोर्णुतः प्रोर्णुनवानिति । यङैव च क्रियासमभिहारस्य द्योतितत्वान्नित्यवीप्सयोरिति क्रियासमभिहारे द्वे भवत इति वा द्विवचनं न भवति । यदा तु भृशार्थेपि पौनः पुन्यं विवक्ष्यते तदा पापच्यते पापच्यत इति द्विवचनं भवत्येव । स भवानिति । सामान्यविशेषभावेन क्रियाभेदाश्रयो धातुसम्बन्ध. । स इति । भृशार्थपौनःपुन्ययोः प्रतिपिपादयिषितत्वादेकतरस्मिन् यङ् प्रत्ययः । अपरस्मिंस्तु लोट् । लोटश्च केवलस्य समभिहाराभिव्यङ्क्तुमसामर्थ्यात्तदन्तस्य द्विवचनं प्रवर्तते।तत्रेति।लोङ् बहिरङ्गः । कर्त्राद्यपेक्षणाद्धातुसम्बन्धापेक्षणाच्च विभाषा यङिति । धातोः कर्मण इत्यतो वेत्यनुवर्तनात् ॥ २२ ॥

नित्यं कौ ॥ नहीति । चङ्क्रम्यतइत्यस्मादयोर्थः प्रतीयते नासौ कुटिलं क्रामतीति वाक्येन शक्यः प्रत्याययितुमिति तदर्थानभिधानादेव वाक्यं न भविष्यति । अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः ।

क्रियासमभिहारे च नैतेभ्यः । क्रियासमभिहारे च नैतेभ्यो यङ्भवितव्यं भृशं जपति ब्राह्मणः भृशं समिधो दहतीत्येव । नित्यं कौ ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ २५ ॥** सत्यापेति किं निपात्यते । सत्यस्य कृञ्यापुक् च । सत्यस्य कृञि आपुक् च निपात्यते णिच्च । सत्यं करोति सत्यापयति । अत्यल्पमिदमुच्यते । णिविधावर्थवेदसत्यानामापुक्च * । णिविधावर्थवेदसत्यानामापुक्चेति वक्तव्यम् । अर्थापयति वेदापयति सत्यापयति । यद्यापुक् क्रियते टिलोपः प्राप्नोति । एवं तर्हि पुक्करिष्यते । एवमपि टिलोपः प्राप्नोति । एवं तर्ह्याक्करिष्यते । एवमपि टिलोपः प्राप्नोति । एवं तर्ह्यक् करिष्यते । एवमप्यनाकारान्तत्वात् पुङ्न प्राप्नोति । एवं तर्ह्याट् करिष्यते । एवमप्यनाङ्गत्वात्पुङ्न प्राप्नोति । एवं तर्ह्यापुट् करिष्यते । अथ वा पुनरस्त्वापुगेव । ननु चोक्तं टिलोपः प्राप्नोतीति । आपुक्वचनसामर्थ्यान्न भविष्यति । अथ वा पुनरस्तु पुगेव । ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति । पुग्वचनसामर्थ्यान्न भविष्यति । अथ वा पुनरस्त्वागेव । ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति । आग्वचनसामर्थ्यान्न भविष्यति । सत्यापपाश ॥

**हेतुमति च ॥ २६ ॥** कथमिदं विज्ञायते हेतुमत्यभिधेये णिज्भवतीति आहो स्विद्धेतुमति यो धातुर्वर्तते इति । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम् । यावता हेतुमति चेत्युच्यते । यदि हि प्रकृत्यर्थविशेषणं स्याद्धेतुमत इत्येव ब्रूयात् । नैतदस्ति । भवन्ति हि विषयस-

---

क्रियासमभिहार इति । तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादिति भावः ॥ २३ ॥ २४ ॥

सत्यापपाश ॥ आचार्यमतभेदप्रदर्शनार्थोनेकक्षोपन्यासः । टिलोप इति । णाविष्ठवदित्यतिदेशादिति भावः । अक्करिष्यत इति । तत्र पररूपे कृते अचोञ्णितीति वृद्धौ कृतायां पुगागम इति भावः । अनाकारान्तत्वादिति । यद्यत्र वृद्धिः स्यादग्विधानमनर्थकं स्याद अगागममन्तरेणापि तस्याः प्रसङ्गात् ततश्च तद्बाधनार्थमगागमः स्यादिति भावः । आपुडिति । तस्य च णिज्भक्तत्वादकारस्य पूर्वस्य टिलोपे सति सत्यापयतीत्यादि सिध्यतीति भावः ॥ २५ ॥

हेतुमति च ॥ कृत्रिमस्य पारिभाषिकस्य प्रयोजकस्येह हेतोर्ग्रहणम् । तदीयो व्यापारः प्रेषणाध्येषणतत्समर्थाचरणलक्षणो हेतुमानिह गृह्यते । ननु सकलकारकमाध्यपाकाद्यपेक्षः । प्रयोजकस्य हेतुव्यपदेशो न तु तदर्थावान्तरस्वसाध्यप्रेषणाद्यपेक्षः यथा काष्ठस्य पाकापेक्षं करणत्वं न तु ज्वलनापेक्षम् । तदपेक्षन्तु कर्तृत्वमेव । ततश्च पाकादेरेव हेतुमद्व्यपदेशो युक्तो न तु प्रेषणादेः । नैष दोषः । णिच्प्र-

प्रम्योपि। तद्यथा। प्रमाणे यत्प्रातिपदिकं वर्तते स्त्रियां यत् प्रातिपदिकं वर्तत-इति। एवमिहापि हेतुमत्यभिधेये णिज्भवतीति हेतुमति वा यो धातुर्वर्त्ततइति जायते विचारणा। अत उत्तरं पठति। हेतुमतीति कारकोपादानं प्रत्ययार्थपरि-ग्रहार्थं यथा तनूकरणे तक्षः। हेतुमतीति कारकमुपादीयते। किं प्रयोजनम्। प्रत्ययार्थपरिग्रहार्थम्। एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति यथा तनूकरणे तक्ष इति। तनूकरणमुपादीयते। यदि तर्हि तद्वत्प्रकृत्यर्थविशेषणमिदं भवति। प्रकृत्यर्थविशेषणं हि तत्तत्र विज्ञायते। तनूकरणक्रियायां तक्ष इति। अस्तु प्रकृ-त्यर्थविशेषणम्। को दोषः। इह हि उक्तः करोति प्रेषितः करोतीति णिच् प्राप्नोति। प्रत्ययार्थविशेषणे सति पुनर्न दोषो भवति। स्वशब्देनोक्तत्वान्न भविष्यति। प्रकृत्यर्थविशेषणेपि सति न दोषः। यत्र नान्तरेण शब्दमर्थस्य गति-र्भवति तत्र शब्दः प्रयुज्यते। यत्र ह्यन्तरेणापि शब्दमर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते। इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति उभयोः कर्त्रोर्ले-

---

कृत्य धातुनैव तस्यार्थस्य प्रकाशितत्वात् प्रयोजनाभावात्तत्रैवार्थे णिचोनुत्पा-दात्। प्रयोज्योपि हेतुमच्छब्देन न गृह्यते। तस्य द्रव्यत्वात्। णिचश्च स्वभावतः करणाधिकाराद्वा क्रियावाचित्वात्तस्मात्। पारिशेष्यात् पाकाद्यर्थो यः प्रेषणादिल-क्षणो लब्धपाकाद्यपेक्षहेतुव्यपदेशहेतुत्वोपलक्षितप्रयोजकसाध्यो व्यापारः स एव गृह्यते। कथमिति। यदा पचतीत्युक्ते प्रयोज्यसाध्य एव व्यापारो गम्यते न प्रयोजक-साध्योपि तदा प्रत्ययार्थस्य करणाधिकारोपस्थापितस्य करणस्य विशेषणं हेतुम-तीति संपद्यते। यदा त्वनेकार्थत्वाद्धातूनां तादर्थ्याद्वाधिश्रयणादिवत् प्रयोजकव्या-पारोपि पचादिवाच्यो भवति यथा पञ्चभिर्हलैः कृषतीति। तदा प्रकृतिविशेषणपक्षो भवति तदा तु णिच्प्रत्ययो द्योतकः संपद्यतइति पक्षद्वयस्य संभावाद्दोषदर्शनाच्च प्रश्नः। हेतुमत इति। हेतुमदर्थाभिधायिन इत्यर्थः। कारकोपादानमिति कारकशब्देन प्रत्ययार्थ उच्यते स हि प्रत्ययं करोति निष्पादयति। प्रत्ययार्थ इति। प्रत्ययस्यार्थः प्रयोजनं स सुष्ठु परिगृहीतः परिपूर्णो भवति। वाचकत्वात् प्रत्ययस्य। प्रकृतिविशे-षणे तु प्रत्ययस्यानुवादकत्वाद् द्योतकत्वात्प्रयोजनमपरिपूर्णं स्यादित्यर्थः। अथ वार्थोभिधेयमुच्यते स चान्वयव्यतिरेकाश्रयव्यवस्थत्वात् प्रेषणादिः प्रत्ययस्यैव न प्रकृतेरिति सुष्ठु परिगृहीतो व्यवस्थापितो भवति। यथा तनूकरणइति। यदा विकरणार्थाः कर्त्रादय इति पक्षस्तदा तनूकरणशब्देन कर्त्ताभिधीयते तदा साधर्म्येण दृष्टान्तः। यदा तु सार्वधातुकार्थाः कर्त्रादय इति पक्षस्तदा वैधर्म्येण दृष्टान्त इति व्याख्यानम्। यथा तनूकरणं प्रकृत्यर्थो न तथा हेतुमद्व्यापार इत्यर्थः। परस्तु साध-र्म्येण दृष्टान्तं सार्वधातुकत्वं च कर्त्रादीनां मन्यमान आह यदीति। अस्त्विति। विनापि णिचा पञ्चभिर्हलैः कृषतीति प्रयोजकव्यापारावगमात्। प्रकृत्यर्थत्वं हेतुमत उपपद्यते। पचतीत्यादौ तु द्योतको णिज्नास्तीति तदप्रतिपत्तिरिति भावः। उक्तः करोतीति। प्रकृतिविशेषणपक्षे यथा प्रकृत्याभिहिते प्रयोजकव्यापारे णिज् भवति

नाभिधानं प्राप्नोति। प्रत्ययार्थविशेषणे सति पुनर्न दोषः। प्रधानकर्तरि लादयो भवन्तीति प्रधानकर्ता लेनाभिधीयते। यश्चात्राप्रधानं कर्ता सिद्धा तत्र कर्तरीत्येव तृतीया। इह च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति अव्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थानां क्तः कर्तरीति कर्त्तरि क्तः प्राप्नोति। इह च व्यतिभेदयन्ते व्यतिच्छेदयन्तइति अव्यतिरिक्तो हिंसार्थ इति कृत्वा न गतिहिंसार्थेभ्य इति प्रतिषेधः प्राप्नोति। अस्तु तर्हि प्रत्ययार्थविशेषणम्। यदि प्रत्ययार्थविशेषणं पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति। भवति हि तस्य तस्मिन्नीप्सा। इह च ग्रामं गमयति ग्रामाय गमयतीति व्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ न प्राप्नुतः। इह चैधो दकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा कृञः प्रतियत्नइति षष्ठी न प्राप्नोति। इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्त्तरि षष्ठी न प्राप्नोति। इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा उपसर्गात्सुनोतिसुवतीत्यादिना षत्वं न प्राप्नोति। नैष दोषः। यत्तावदुच्यते पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोतीति। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणीत्येतन्नियमार्थं भविष्यति। एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञा भवति नान्येषामिति। यदप्युच्यते इह च

---

एवमुक्तप्रेषितादिशब्दाभिहिते ऽपि प्राप्नोति। हेतुमद्विशेषणत्वात्करोत्यर्थस्य। प्रत्ययार्थविशेषणपक्षे तूक्तार्थत्वाद् णिजभावः। यत्रेति। यस्यार्थस्य द्योतनाय णिज्विधीयते स यदा शब्दान्तरादवगतो भवति तदा प्रयोजनाभावाद् णिज्न भवतीत्यर्थः। उभयोरिति। धातुवाच्यस्य व्यापारस्य कर्तरि लकारेणोत्पत्तव्यम्। यदा च पचिना द्वयोरपि प्रयोज्यप्रयोजकयोर्व्यापारोऽभिधीयते णिच्प्रत्ययः केवलं स्वार्थिकत्वात् प्रयोजकव्यापारस्य द्योतकस्तदा धातुवाच्यव्यापारसाम्यात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं स्यात्। ततः पाचयतो देवदत्तयज्ञदत्ताविति प्रसज्येतेत्यर्थः। प्रधानकर्तेति। प्रकृत्यर्थोपसर्जनत्वाद् ण्यर्थस्य प्राधान्यात्तस्य कर्तापि प्रधानमिति भावः। गमित इति। प्रयोजकव्यापारस्य गमिवाच्यत्वात्तस्य कर्तरि प्रयोजके क्तः प्राप्नोतीत्यर्थः। प्रयोज्यस्य तु कर्मत्वात्तत्रैव क्त इष्यते। तदुक्तम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति॥ व्यतिभेदयन्तइति। प्रयोजकव्यापारस्य व्यतिहारो न तु प्रयोज्यव्यापारस्येति द्रष्टव्यम्। भवति हीति। ण्यर्थस्य प्राधान्यात्तद्व्यापारेणाप्सिततमत्वात् प्रयोज्यस्येत्यर्थः। प्रकृत्यर्थविशेषणत्वे तु द्वयोरपि प्रयोज्यप्रयोजकव्यापारयोरेकधातुवाच्यत्वाद्धातुवाच्यव्यापारापेक्षया द्वयोरपि कर्तृत्वाल्लेनाभिधानं प्राप्नोतीति दोष उक्तः। ग्रामं गमयतीति। ण्यर्थस्यैव ग्रामः प्रयोज्यश्च कर्मेति भावः। षष्ठी न प्राप्नोतीति। ण्यर्थस्य कर्मत्वादिति भावः। सुट् तु करोतिधात्वाश्रयत्वाद् णिज्युत्पत्तावपि तद्रूपसन्निधानात्सिध्यत्येवेति तन्नाचूचुदत् प्रयोज्ये कर्तरीति तस्याप्राधान्यादिति-

ग्रामं गमयति ग्रामाय गमयति इति व्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ न प्राप्नुत इति । नासावेवं प्रेष्यते गच्छ ग्राममिति । कथं तर्हि साधनविशिष्टां क्रियामसौ प्रेष्यते ग्रामं गच्छ ग्रामाय गच्छेति । यदप्युच्यते इह च एधो दकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा कृञः प्रतियत्न इति षष्ठी न प्राप्नोतीति । नासावेवं प्रेष्यते उपस्कुरुष्वैधो दकस्येति । कथं तर्हि साधनविशिष्टां क्रियामसौ प्रेष्यते एधो दकस्योपस्कुरुष्वेति । यदप्युच्यते इह भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोतीति । उक्तं तत्र कृद्ग्रहणस्य प्रयोजनं कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्यादिति । यदप्युच्यते इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा उपसर्गात्सुनोतीत्यादिना षत्वं न प्राप्नोतीति । नासावेवं प्रेष्यते सुनु अभीति । कथं तर्हि उपसर्गविशिष्टां क्रियामसौ प्रेष्यते अभिषुणिवति । युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम् । यावता व्यक्तमर्थान्तरं गम्यते पचति पाचयतीति च । बाढं युक्तम् । इह पचेः कः प्रधानार्थः । यासौ तण्डुलानां विक्लित्तिः अथेदानीं तदभिसंधिपूर्वकं प्रेषणमध्येषणं वा युक्तं यत्सर्वं पच्यर्थः स्यात् । अथ हेतुमतीति को मत्वर्थः । हेतुः

---

भावः । अभिषावयतीति ण्यर्थस्योपसर्गौ विशेषक इति भावः । एतेषामेवेति । ण्यर्थस्य प्राधान्यात्तेनेप्सिततमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा । न च स्वव्यापारापेक्षाया स्वातन्त्र्यात् । परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम् । प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानाप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वान्नियमेन तु प्रधानप्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वं भवत्येव । तदुक्तं हरिणा । गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः । नियमात्कर्मसंज्ञायाः स्वातन्त्र्येणाभिधीयत इति ॥ नासाविति । ग्रामः प्रकृत्यर्थस्य कर्म न तु ण्यर्थस्येत्यर्थः । साधनविशिष्टामिति । ग्रामकर्मिकां गमनक्रियां प्रयोज्यः प्रेष्यति प्राप्नोतीत्यर्थः । स च प्रेष्यते प्राप्यते । कर्तृभूतपूर्वमात्रेपीति । प्रधानचरेपि कर्तरीत्यर्थः । सुनु अभीति । न प्रयोजकव्यापारस्याभिमुख्यमभिशब्देन द्योत्यते। अपि तु प्रयोज्यव्यापारस्यैवेत्यर्थः। युक्तं पुनरिति। संदेह एव विचारनिमित्तं नोपपद्यते । अन्वयव्यतिरेकाभ्यां भूयो दर्शनविषयाभ्यां प्रत्ययार्थविशेषणपक्षस्यैवोपपन्नत्वादिति भावः। यासाविति। तदर्थत्वात्कारकग्रामस्य तदनन्तरञ्च फलोत्पादादिति भावः । तदुक्तं हरिणा । अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः । प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यतेति ॥ तत्र यथाधिश्रयणादयस्तादर्थ्यात्पचिवाच्यास्तथा प्रेषणादिरपि । द्योतकस्तु णिजपेक्ष्यत इत्यर्थः । न च कारकाणामपि तादर्थ्यात्पच्यभिधेयत्वप्रसङ्गः तेषामक्रियारूपत्वाद्धातोश्च क्रियावाचित्वाद्विक्लित्तिश्चात्र फलानन्तरव्यापारोपलक्षणमिष्टकाः पचन्तीत्यादौ तस्यासंभवादित्याहुः । पच्यर्थः स्यादिति । संभावने लिङ् । संभाव्यते पच्यर्थत्वं प्रेषणादेरत एव संशयाद्विचार्यं प्रत्ययार्थविशेषणपक्षो भाष्यकारेण व्यवस्थापितस्तद्दोषाणां परिहृतत्वात्

इह पुनर्न कश्चिदभिसम्बन्धः क्रियते । न चासौ संप्रति पृच्छति न चासौ प्रक्ष्यति तूष्णीमास्ते । यदि तर्हि कर्ता नास्ति कथं तर्हि कर्तृप्रत्ययेन लोटाभिधीयते । अथ कथमस्मिन्नपृच्छत्ययं पृच्छतिर्वर्तते । अभिसम्बन्धस्तत्र क्रियते इमां क्रियां कर्तास्य स हेतुमान् हेतुमतीति । हेतुनिर्देशश्च निमित्तमात्रे भिक्षादिषु दर्शनात्* । हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः । यावद् ब्रूयान्निमित्तं कारणं तावद्धेतुरिति । किं प्रयोजनम् । भिक्षादिषु दर्शनात् । भिक्षादिषु हि णिज् दृश्यते भिक्षा वासयति कारीषोग्निरध्यापयतीति । किं पुनः कारणं परिभाषिके हेतौ न सिध्यति । एवं मन्यते चेतनावत एतद्भवति प्रेषणमध्येषणं चेति, भिक्षाश्चाचेतनाः । नैष दोषः । नावश्यं स एव वासं प्रयोजयति । य आहोष्यतामिति ब्रवीति किं तर्हि तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोपि वासं प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति । यथा कारीषोग्निर्निर्वाते एकान्ते सुप्रज्वलितोध्ययनं प्रयोजयति । इह कश्चित्कं चिदाह पृच्छतु मा भवान् अनुयुङ्क्तां मा भवान् इति, अत्र णिच् कस्मान्न भवति । अकर्तृत्वात् । न ह्यसौ संप्रति पृच्छति । तूष्णीमास्ते । किं च भो वर्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यं न भूतभविष्यत्कालायाः । भूतभविष्यत्कालाया अपि भवितव्यम् । अभिसम्बन्धस्तत्र क्रियते इमां क्रियामकार्षीद् इमां क्रियां करिष्यतीति ।

---

पक्षान्तरे दोषाणां सुपरिहरत्वात् । तथा हि । यदुक्तं द्वयोः कर्त्रोर्लेनाभिधानं प्राप्नोतीति नायं दोषः । प्रकृत्या प्रयोज्यव्यापारोपसर्जनस्य प्रयोजकव्यापारस्याभिधानात्तस्यैव णिचा द्योतनात् प्रधानएव कर्तरि लो भविष्यति नाप्रधाने । णिचा द्योतकेन प्रधानभूतगत्यर्थत्व निवर्तितं गमनारूपस्य प्रधानस्यार्थस्याभिधानादिति ण्यन्तात् प्रयोजककर्तरि क्तस्यानुत्पत्तिः । व्यतिभेदयन्तिइत्यत्रापि हिंसनलक्षणः प्रधानं धात्वर्थो न तु हिंसारूप इत्यात्मनेपदानिषेधाभावः । अथेति । यद्यपि षष्ठ्यर्थस्सप्तम्यर्थश्च मत्वर्थत्वेन निर्ज्ञातस्तथापि हेतुशब्दस्यानेकार्थत्वे सति हेत्वर्थापरिज्ञानात्तद्विशिष्टस्यापि मत्वर्थस्यापरिज्ञानात् प्रश्नः । स चार्थाद्धेतुविषय एवावतिष्ठत को हेतुरिति । किं प्रयोजको हेतुरथ निमित्तमात्रम् । हेतुः कर्त्तेति । हेतुः प्रयोजक इति भावः । नावश्यमिति । तत्समर्थाचरणमपि प्रयोजकव्यापारस्तत्सद्भावाधीनत्वात् प्रयोज्यक्रियासिद्धेरित्यर्थः । पृच्छतु मा भवानिति । प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे णिच् कस्मान्न भवतीति प्रश्नः । एकविषयत्वाल्लोडादेर्णिचश्च पर्यायप्रसङ्गः । अकर्तृत्वादिति । स्वतन्त्रस्य कर्तु प्रयोजको हेतुरित्युच्यते प्रयोज्यश्चात्र कर्ता नेति प्रयोजको न हेतुसंज्ञ इत्यर्थः । तूष्णीमिति । निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः । कर्तृत्वमेव तस्याधीयमानं प्रश्नक्रियायाः कर्ता त्वं भवेति । यथा राजा भव युद्ध्यस्वेति राजत्वमेवाधीयते । यस्तु प्रवृत्तक्रियः संभावितक्रियो वा प्रयोज्यः कर्ता तस्य प्रयोजको हेतुरित्यत्र णिजभावः । इतरो वर्तमानक्रियस्यैवानेन कर्तृत्वमुक्तमिति मत्वा चोदयति किं च भो इति । अभिसंबन्ध इति । भूताया भाविन्याश्च क्रियायाः कर्त्राभिसंबन्धो भूतो भावी

कुर्विति। कर्त्रापि तर्ह्यभिसम्बन्धः क्रियते। कथम्। कर्ता अस्याः क्रियाया भवेति। एवं न च कर्ता कर्तृप्रत्ययेन लोटाभिधीयते। अथापि कथं चित्कर्ता स्यात् एवमपि न दोषः। लोटोक्तत्वात् प्रैषस्य णिङ्न भविष्यति। विधीयन्ते ह्येतेष्वर्थेषु प्रैषादिषु लोडादयः। यत्र च द्वितीयः प्रयोज्योर्थो भवति भवति तत्र णिच्। तद्यथा। आसय शाययेति। कृष्यादिषु चानुत्पत्तिः *। कृष्यादिषु चानुत्पत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते पञ्चभिर्हलैः कृषतीति। तत्र भवितव्यं पञ्चभिर्हलैः कर्षयतीति कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात् *। कृष्यादिषु चानुत्पत्तिः सिद्धा। कुतः। नानाक्रियाणां कृष्यर्थत्वात्। नाना क्रियाः कृषेरर्थाः। नावश्यं कृषतिर्विलेखनएव वर्तते। किं तर्हि। प्रतिविधानेऽपि वर्तते यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः। आतश्च प्रतिविधानेऽपि वर्तते यदहरेवासौ न प्रतिविधत्ते तदहरेव तत्कर्म न प्रवर्तते। यज्यादिषु चाविपर्यासः *। यज्यादिषु चाविपर्यासो वक्तव्यः। पुष्यमित्रो यजते याजका याजयन्तीति। तत्र भवितव्यं पुष्यमित्रो याजयते याजका याजयन्तीति। याज्यादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वात्*। यज्यादिषु चाविपर्यासः सिद्धः। कुतः। नानाक्रियाणां यज्यर्थत्वात्। नाना क्रिया यजेरर्थाः। नावश्यं याजिर्हविः प्रक्षेपणएव वर्तते। किं तर्हि। त्यागे ऽपि वर्तते। तद्यथा। अहो यजतइत्युच्यते यः सुष्ठु त्यागं करोति तं च पुष्यमित्रः करोति याजकाः प्रयोजयन्तीति। तत् करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम् *। तत्

---

च प्रतिपाद्यतइत्यर्थः। अथ कथमिति। असत्यर्थे शब्दप्रयोगासंभवात्। अभिसंबन्ध इति बुद्धिपरिवर्तिन्यर्थे बहिरसत्यापि शब्दप्रयोगादिति भावः। न च कर्तेति। तस्यैवाधीयमानत्वात्। तदुक्तं हरिणा द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड्विधीयते।; सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति॥ अथापीति। दुर्बलपक्षाभ्युपगमेनापि परिहारोऽभिधीयतइति भावः। लोटोक्तत्वादिति। एकविषयत्वाण्णिचो लोडादीनां च पाक्षिकत्वाद्यदा लोडुत्पद्यते तदा तेनैवाभिहितत्वात् प्रैषस्य णिज् न भविष्यति। एकान्त इति। कृषावसामर्थ्यं दर्शयति तूष्णीमासीन इति। व्यापारभावकथनम्। कश्चिद्धि सामर्थ्यातिशयाद्युगपत्पञ्चभिर्हलैः कृषेत्पर्यायेण वेति तन्निराकरणाय एकान्ते तूष्णीमासीन इत्युक्तम्। तत्र पञ्चभिर्हलैर्भूमिमन्यैः कर्षयतीत्यर्थावगमाण्णिचि सति कृषतीति न प्राप्नोतीति तदनुत्पत्तिर्वक्तव्येत्यर्थः। प्रतिविधानेपीति। अनेकार्थत्वाद्धातूनां कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्ततइत्यर्थः। धातुनैव चोपपदसहिते न तस्यार्थस्य प्रकाशितत्वाण्णिजभावः। विभाषोपपदेन प्रतीयमान इति पक्ष आत्मनेपदाभावश्च। यदा तु कृषिर्विलेखने वर्तते तदा भवत्येव पञ्चभिर्हलैः कर्षयतीति णिच्। यज्यादिष्विति। यजेः प्रक्षेपविशेषवाचित्वात् प्रक्षेपे च ऋत्विजां कर्तृत्वाद्यजमानस्य प्रयोजककर्तृत्वाण्णिच्प्रसङ्गनिवारणाय वचनम्। नानाक्रिया इति।

करोतीत्युपसंख्यानं कर्तव्यम्। किं प्रयोजनम् । सूत्रयत्याद्यर्थम्। सूत्रं करोति सूत्रयति सूत्रयतीति। इह व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयतीति वाक्ये षष्ठी उत्पन्ने च प्रत्यये द्वितीया। केनैतदेवं भवति। योऽसौ सूत्रव्याकरणयोरभिसम्बन्धः स उत्पन्ने प्रत्यये निवर्तते अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति । आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ आख्यानात्कृदन्ताण्णिज्वक्तव्यः तदाचष्टइत्येतस्मिन्नर्थे। कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। कंसवधमाचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयतीति। आख्यानाच्च प्रतिषेधः। आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः। आख्यानमाचष्टइति। किं पुनर्याण्येतानि संज्ञाभूतानि आख्यानानि तेभ्य उत्पत्त्या भवितव्यम्। आहो स्वित् क्रियाख्यानमात्रात्। किं चातः। यदि संज्ञाभूतेभ्यः। इह न प्राप्नोति राजागमनमाचष्टे राजानमागमयतीति। अथ क्रियाख्यानमात्रम्। दोषो भवति। यथा न दोषस्तथास्तु। दृश्यर्थायां च प्रवृत्तौ ॥। दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज् वक्तव्यः तदाचष्टे इत्येतस्मिन्नर्थे। कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। मृगरमणमाचष्टे मृगान् रमयति। दृश्यर्थायामिति किमर्थम् । यदा

---

तत्र त्यागवचनाश्रयेण यः प्रयोगस्तद्विपरीतः प्रक्षेपवचने द्रष्टव्यः । इह व्याकरणस्येति। लक्ष्ये लक्षणसमुदाये वा व्याकरणशब्दो वर्ततइति भेदनिबन्धना षष्ठी। यदा तु लक्षणएव सूत्रं व्याकरणशब्दो वर्तते तदा व्यपदेशिवद्भावनिमित्ता षष्ठी। यदा व्याकरणं सूत्रं करोतीति सामानाधिकरण्यं तदा यथा मुण्डयति माणवकमिति भवति तथा व्याकरणं सूत्रयतीत्यपि भवति। योऽसाविति। वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते। णिचि तूत्पन्ने स्वभावातिवर्तनात्करोत्यर्थाभिधायी सूत्रशब्दस्संपद्यते। तदुक्तं परार्थाभिधानं वृत्तिरिति। एतच्च प्रक्रियागतविभागाश्रयेणोक्तम्। परमार्थतस्तु धात्वन्तरं सूत्रिर्विशिष्टक्रियावचनः। आख्यानादिति। आख्यायतइत्याख्यानमिति वृत्तमुच्यते। प्रकृतिवदिति। णिचो या प्रकृतिः कंसवधादिः तया तुल्यं कंसादि कारकं भवति। यथाख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा कंसादेरपि अप्रतिपन्नाख्यानकर्मभावस्येत्यर्थः। प्रकृतिवद्भावातिदेशेन च कंसादेः पृथक्कृतत्वात् कंसमघातयदित्यादौ कंसादिशब्दवर्जितस्याङ्गसंज्ञायामडादयः कंसादेर्न भवन्ति। वत्करणाच्च स्वाश्रयमपि भवति। पुष्येण योजयतीति पुष्यस्य कर्मत्वाभावः अथ वा प्रकृत्या तुल्यं वर्ततइति प्रकृतिवत् प्रकृतेरिव प्रकृतिवद् ण्यन्तस्य कारकमित्युभयथातिदेशाश्रयणात् क्वचित्काश्रत्परिगृह्यते। प्रकृतिप्रत्यापत्त्या राजागमनादौ न लोपाद्यपि निवर्ततइति राजानमागमयतीत्याद्युपपन्नं भवति। कंसवधमिति । यद्यप्यत्र सन्नियोगनिर्दिष्टानामन्यतरापाये उभयोरप्यभाव इति वधादेशनिवृत्तिस्सिद्धयति तथापि पुष्येण योगं जानाति पुष्येण योजयतीति कृत्वस्य सन्नियोगशिष्टत्वाभावान्निवृत्तिर्न सिध्यतीति प्रकृतिप्र-

हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्टइत्येव तदा भवति । आङ्‌ लोपश्च कालात्यन्तसंयोगे मर्यादायाम् * । कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज् वक्तव्यः तदाचष्टइत्येतस्मिन्नर्थे । आङ्‌लोपश्च कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । आरात्रिविवासमाचष्टे रात्रिं विवासयतीति । चित्रीकरणे प्रापि * । चित्रीकरणे प्राप्यर्थे कृदन्ताण्णिज् वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते । सूर्यमुद्गमयति । नक्षत्रयोगे ज्ञि * । नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज् वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति मघाभिर्योजयतीति । तत्तर्हीदं बहु वक्तव्यम् । न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् । न वा वक्तव्यम् । किं कारणम् । सामान्यकृतत्वात्सामान्येनैवात्र णिज् भविष्यति हेतुमतीति । किं कारणम् । हेतुतो ह्यविशिष्टम् । हेतुतो ह्यविशिष्टमेतद् भवति । तुल्या हि हेतुता देवदत्ते चादित्ये च । न सिध्यति । स्वतन्त्रस्य प्रयोजको हेतुसंज्ञो भवतीत्युच्यते न चासावादित्यं प्रयोजयति । स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् । यं भवान् स्वतन्त्रप्रयोजकं मुक्तसंशयं न्याय्यं मन्यते पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति तेनैतत्तुल्यम् । कथम् । प्रवृत्तिर्ह्युभयत्रानपेक्षा । प्रवृत्तिर्ह्युभयत्रानपेक्ष्यैव किं चिद् भवति देवदत्ते चादित्ये च । नेह कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते । सर्वइमे स्वभूत्यर्थं प्रवर्तन्ते । ये तावदेते गुरुशुश्रूषवो नाम ते ऽपि स्वभूत्यर्थं प्रवर्तन्ते पारलौकिकं च नो भविष्यति इह च नः प्रीतो गुरुरध्यापयिष्यतीति । यथा ये एते दासाः कर्मकरा नाम ते ऽपि स्वभूत्यर्थं प्रवर्तन्ते भक्तं चैलं च लप्स्यामहे परिभाषाश्च न नो भविष्यन्तीति । तथा यएते शिल्पिनो नाम एते ऽपि स्वभूत्यर्थं प्रवर्तन्ते मित्राणि च नो भविष्य-

---

प्रत्यापत्तिरुच्यते । किं पुनारीति । कंसबन्धनलोपाख्यानादीनीत्यर्थः । दृश्यर्थायामिति । यदारण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्टे एतस्मिन्नवकाशएवं विधा मृगा रमन्तइति तदा प्रतिपाद्यदर्शनार्था प्रवृत्तिर्भवति । यदा हि ग्राम इति । ग्रामे मृगाणामसंभवान्न तद्दर्शनार्था प्रवृत्तिः । दृश्यर्थयामित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम् । राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेपि णिज् भवति । आरात्रिविवासमिति । यावाद्रात्रेर्विवासोतिक्रमणं तावत्कथाः कथयतीत्यर्थ । चित्रीकरणइति । आश्चर्यकरणे गम्यमाने पुष्येणेति तत् प्राप्नोतीत्यत्रार्थे णिज् वक्तव्य । संभावयतइति । भू प्राप्तावात्मनेपदीत्यस्य रूपम् । पुष्यो योगक्रियायाः कर्ता स हि चन्द्रमसं संबध्नाति । तत्रोभयप्राप्तौ कर्मणीति नियमात् षष्ठ्यभावे तृतीयासमासः । तत्र प्रकृतेरिव प्रकृतिवदित्येवं प्रकृतिवदतिदेशात्कर्तरि तृतीया भवति लकारस्तु प्रधानएव कर्तरि भवति नातिदेशिके । सामान्यकृतत्वादिति । सामान्य-

न्तीति वेतनं च लप्स्यामहे। एवमेतेषु सर्वेषु स्वभूत्यर्थं प्रवर्तमानेषु कुर्वतः प्रयोजक इति चेत्तुल्यम्। यदि कश्चित्प्रयोजको नाम कुर्वतो भवति तेनैतत्तुल्यम्। यदि तर्हि सर्वइमे स्वभूत्यर्थं प्रवर्तन्ते कः प्रयोज्यार्थः। यदभिप्रायेषु सज्जन्ते ईदृशौ वध्र्यौ कुरु ईदृशौ पुटकौ कुरु इति। आदित्यश्चास्याभिप्राये सज्जते। एष तस्याभिप्राय उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयेय इति तं चास्यादित्योऽभिप्रायं निर्वर्तयति। भवेदिह वर्तमानकालता युक्ता स्याद् उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यमुद्गमयतीति तत्रस्थस्य हि तस्यादित्य उदेति। इह तु कथं वर्तमानकालता कंसं घातयति बलिं बन्धयतीति। चिरहते च कंसे चिरबद्धे च बलौ। अत्रापि युक्ता, कथम्। ये तावदेते शौभिका नाम एते प्रत्यक्षं कंसं घातयन्ति प्रत्यक्षं च बलिं बन्धयन्तीति। चित्रेषु कथम्। चित्रेष्वपि उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कंसस्य कृष्णस्य च। ग्रन्थिकेषु कथम्। यत्र शब्दग्रन्थनमात्रं लक्ष्यते। ते ऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशाद् बुद्धिर्व्याचक्षाणाः सन्तो बुद्धिविषयान् प्रकाशयन्ति। आतश्च सतः। व्यामिश्रिताश्च दृश्यन्ते। के चित् कंसभक्ता भवन्ति के चिद्वासुदेवभक्ताः। वर्णान्यत्वं खल्वपि पुष्यन्ति। के चित्कालमुखा भवन्ति के चिद् रक्तमुखाः त्रैकाल्यं खल्वपि लोके लक्ष्यते गच्छ हन्यते कंसः गच्छ घानिष्यते कंसः किं गतेन हतः कंस इति। हेतुमति च॥ इतिश्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

कण्ड्वादिभ्यो यक्॥ २७॥ किमर्थः ककारः। गुणवृद्धिप्रतिषेधार्थः। क्ङितीति गुणवृद्धिप्रतिषेधो यथा स्यात्। नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां ल-

---

लक्षणेनैव सिद्धत्वादित्यर्थः। देवदत्ते चेति। देवदत्तविषयान्यस्य हेतुतेत्यर्थः। परिभाषा इति। दण्डनादिकाः। यदभिप्रायेष्विति। तदुक्तं हरिणा। निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये। अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धयइति॥ सज्जन्तइति। भाष्यकारवचनादात्मनेपदम्। परस्मैपदी तु सज्जिः ग्लु ञ्चु षस्ज जगताविति। चिरहत इति। चिरप्रवृत्तत्वाद्वध्यघातकभावस्य प्रयोजकव्यापारस्य वर्तमानत्वासंभवात्। उपसंख्यानारम्भे तु न दोष आख्यानस्य वर्तमानत्वादित्यर्थः। शौभिका इति। कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः। कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या गृहीतः कंसो भाष्ये विवक्षितः। ग्रन्थिकेष्विति। कथकेष्वित्यर्थः। तेपीति। तदुक्तं हरिणा। शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यतइति॥ शिष्टं भाष्यं स्पष्टम्॥ २६॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

कण्ड्वादिभ्यो यक्। किमर्थ इति। द्वैविध्यं कण्ड्वादीनां दर्शयितुमुपन्यासः। क-

भते न चायं धातोर्विधीयते । कण्ड्वादीनि हि प्रातिपदिकानि । कण्ड्वादिभ्यो वावचनम् * । कण्ड्वादिभ्यो वेति वक्तव्यम् । अवचने हि नित्यप्रत्ययत्वम् । अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत । तत्र को दोषः । तत्र धातुविधितुक्प्रतिषेधः * । तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात् । कण्ड्वौ कण्ड्वः । अचि श्नुधातुभ्रुवां य्वोरियङुवङावित्युवङादेशः प्रसज्येत । इह कण्ड्वा कण्ड्वे इति नोङ्धात्वोरिति विभक्तेरुदात्तत्वप्रतिषेधः प्रसज्येत । तुक् च प्रतिषेध्यः वल्गुर्मन्तुरिति । ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति । ह्रस्वयलोपौ च * । ह्रस्वयलोपौ च वक्तव्यौ स्याताम् । ह्रस्व । वल्गुर्मन्तुरिति । किमर्थमिदं न ह्रस्व एवायम् । अन्तरङ्गत्वाद् अकृत्यकार इति दीर्घत्वं प्राप्नोति । ह्रस्व । यलोप । यलोपश्च वक्तव्यः । कण्डूर्मन्तुर्वल्गुरिति । किमर्थमिदं न वलीत्येव सिद्धम् । वलीत्युच्यते न चात्र वलं पश्यामः । ननु च क्विव्वलादिः । क्विपो लोपे कृते वलाद्यभावान्न प्राप्नोति । इदमिह संप्रधार्यं क्विब्लोपः क्रियतां वलि लोप इति । किमत्र कर्तव्यम् । परत्वात् क्विब्लोपः । नित्यः खल्वपि क्विब्लोपः कृते यलोपे प्राप्नोति । अकृते पि । नित्यत्वात् परत्वाच्च क्विब्लोपे कृते वलाद्यभावाद् न प्राप्नोति । एवं तर्हि प्रत्ययलक्षणेन भविष्यति । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । अथ क्रियामाणेपि वावचने यदा यगन्तात् क्विप् तदैते दोषाः कस्मान्न भवन्ति । नैतेभ्यस्तदा क्विबुत्पद्यते । किं कारणम् । अन्येभ्योपि दृश्यत इत्युच्यते न चैतभ्यः तदा क्विब् दृश्यते । यथैव तर्हि क्रियमाणेपि वावचने अन्येभ्योपि दृश्यतइत्यत्र क्विब् न भवाति । एवमक्रियमाणे पि वावचने न भविष्यति । अवश्यमेतेभ्यः क्विबेषितव्यः । किं प्रयोजनम् । एतानि रूपापि यथा स्युरिति । तत्तर्हि वावचनं कर्तव्यम् । न कर्तव्यम् उभयं कण्ड्वादीनि धातवश्च प्रातिपदिकानि च । आतश्चोभयम् । कण्डूयतीति हि क्रियां कुर्वाणे प्रयुज्यते । अस्ति मे कण्डू-

---

कारप्रयोजनमेव दर्शयितुं वस्त्वन्तरमुपक्षिप्यते । कण्ड्वादिभ्यो वावचनमिति । यदा कण्ड्वादीनि प्रातिपदिकानि तदा वेति वक्तव्यमित्यर्थः । तत्र को दोष इति । नित्येपि प्रत्यये क्विपा कण्डूरित्यादि सिध्यतीति भावः । क्विपा यथेष्टं रूपं न सिध्यतीति दर्शयितुमाह तत्रेति । कण्डूयशब्दात् क्विपि विहिते ऽकारलोपस्य स्थानिवत्त्वमुवाङि कर्तव्ये नास्ति । क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति निषेधात् । अथापि स्थानिवत्त्वादुवङ् स्यात् तथापि वकारस्योठ् करिष्यते । आदिष्टादचः पूर्वो वकार इत्यूठि कर्तव्ये स्थानिवत्त्वाभावः । अत एवोठः पुनरुवङ् न भवति तत्र कण्डूशब्दादौजसोः कृतयोरुवङ् प्राप्नोति । ओःसुपीति तु यणादेशो ऽसंयोगपूर्वस्योक्तः । नित्यत्वाच्चेति । वेरपृक्तलोपात् पूर्वं वलिलोप इत्येतदनाश्रित्येदमुच्यते । वर्णाश्रय इति । वल्रूपाश्रयो य्वोर्लोपः न तु प्रत्याश्रयः । वावचने तु सति पक्षे यगनुत्पादाद्यथेष्टसिद्धिः । नैतेभ्य

रिति वेदनामात्रस्य सांनिध्ये। अपर आह। धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि। आह चायमिमं दीर्घं मन्ये धातुर्विभाषित इति। कण्ड्वादिभ्यो यक्॥

कमेर्णिङ्॥ ३०॥ किमर्थो णकारः। वृद्ध्यर्थः। ञ्णितीति वृद्धिर्यथा स्यादिति क्रियमाणे पि वै णकारे वृद्धिर्न प्राप्नोति। किं कारणम्। क्ङिति चेति प्रतिषेधात्। णित्करणसामर्थ्याद्भविष्यति। अत उत्तरं पठति। णिङि णित्करणस्य सावकाशत्वाद् वृद्धिप्रतिषेधप्रसङ्गः *। णिङि णित्करणं सावकाशम्। कोवकाशः। सामान्यग्रहणार्थो णकारः। क्व सामान्यग्रहणार्थेन णकारेणार्थः। णेरनिटीति। णिङि णित्करणस्य सावकाशत्वाद् वृद्धेः प्रतिषेधः प्राप्नोति। ङित्करणमपि सावकाशम्। कोवकाशः। सामान्यग्रहणाविघातार्थो ङकारः। क्व सामान्यग्रहणाविघातार्थेनार्थः। अत्रैव शक्योत्र सामान्यग्रहणाविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम्। तत्र ङकारानुबन्धाद् वृद्धिप्रतिषेधः प्राप्नोति। अवश्यमत्रात्मनेपदार्थो ङकारोनुबन्ध आसङ्क्तव्यः। ङित इत्यात्मनेपदं यथा स्यात्। एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति न कमेर्वृद्धिप्रतिषेधो भवतीति। तदयं न कम्यमिचमामिति मित्संज्ञायाः प्रतिषेधं शास्ति। मित्प्रतिषेधस्य चार्थवत्त्वात् *। मित्प्रतिषेधस्य चार्थवत्त्वाद्वृद्धिप्रतिषेधः प्राप्नोति। अर्थवान् मित्प्रतिषेधः। कोर्थः। णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं मा भूदिति। ननु तस्या अपि क्ङिति चेति प्रतिषेधेन भवितव्यम्। न भवितव्यम्। उक्तमेतत्। क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरवीत्यर्थमिति। एवं तर्हि णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं न प्राप्नोति। किं कारणम्। णिङा व्यवहितत्वात्। लोपे कृते नास्ति

---

इति। कर्तरि क्विपो विधानात् कण्डूरिति च कर्त्रर्थानवगमादिति भावः। अवश्यमिति। संपदादित्वाद्भावे कर्तव्य इति भावः। वेदनामात्रस्येति। वेदना च सत्त्वरूपा प्रतीयते न च साध्यरूपेति भाव। तत्र धात्वधिकाराद्धातुभ्य एव स्वार्थे यग् भवति प्रातिपदिकेभ्यस्तु स्वादुयत्पत्तौ सत्यां कण्डूरित्यादिरूपसिद्धिः। कस्य चेति। धातुविधानप्रतिबद्धार्धधातुकसंज्ञाश्रयगुणनिषेधार्थात्ककारासञ्जनादपि धातुः कण्ड्वादिर्यकमुत्पादयतीति ज्ञायत इत्यर्थः। आह चेति। दीर्घान्तपाठाच्च पाक्षिकं धातुत्वमेषां निश्चीयते। नित्ये हि धातुत्वे नित्ये च यकि सति अकृत्यकारइति दीर्घस्य सिद्धत्वाद्दीर्घपाठोनर्थकः स्यादित्यर्थः॥ २७॥

कमेर्णिङ्॥ प्रतिषेधबलीयस्त्वादिति। प्रतिषेधस्य विध्यपवादत्वाद् बाधकत्वाद् बलीयस्त्वम्। णिजन्तस्येति। कामयमानं प्रयुङ्क्तइति णिच् णिङन्तेचेति। णिज्निमित्ता या वृद्धिस्तस्या णिङ्निमित्तं ह्रस्वत्वं मा भूदित्येवमर्थो मित्प्रतिषेधः स्यादित्यज्ञापको णिङ् वृद्धेरित्यर्थः। णिङि चेति। ह्रस्वत्वमिति शेषः। असिद्धमिति। ह्रस्वे

व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । णिङ्ग्येव तर्हि मा भूदिति । णिङि च न प्राप्नोति । किं कारणम् । असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति । नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति । किं कारणम् । णिङा व्यवहितत्वात् । लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद् व्यवधानमेव । इदं तर्हि प्रयोजनम् । यत्तच्चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घत्वं शास्ति तत्कमेर्णिङि मा भूदिति । किं पुनः कारणं तत्र दीर्घोऽन्यतरस्यामित्युच्यते न ह्रस्वोऽन्यतरस्यामित्येवोच्येत । यथाप्राप्तं कमेर्ह्रस्वत्वमेव । तत्रायमप्यर्थः । ह्रस्वग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् । मितां ह्रस्व इति । का रूपसिद्धिः । अशमि अशामि । शमंशमम् । शामंशामम् । वृद्ध्या सिद्धम् । न सिध्यति । नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिप्रतिषेधः प्राप्नोति । नैष दोषः । चिण्कृतोः स वृद्धिप्रतिषेधो न णिचि । इह तर्हि । अजानि अजानि जनंजनम् । जानंजानम् । जनिवध्योश्चेति वृद्धिप्रतिषेधः प्राप्नोति सोपि चिण्कृतोरेव न णिचि । णिज्व्यवहितेषु तर्हि यङ्लोपे चोपसंख्यानं कर्तव्यं स्यात् । शमयन्तं प्रयोजितवान् अशमि अशामि । शमंशमम् । शामंशामम् । शंशमयतेः । अशंशमि अशंशामि । संशमंसंशमम् । संशामंसंशामम् । किं पुनः कारणं न सिध्यति । चिण्णमुल्परे णौ मिताङ्गानां ह्रस्वो भवतीत्युच्यते । यश्चात्र णिः चिण्णमुल्परः न तस्मिन्मिदङ्गम् यस्मिंश्च मिदङ्गं नासौ णिश्चिण्णमुल्परः । णिलोपे तर्हि कृते चिण्णमुल्परः । स्थानिवद्भावान्न चिण्णमुल्परः । अथ दीर्घोऽन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतावता सिध्यति एतदिदानीं दीर्घग्रहणस्य प्रयोजनम् । दीर्घविधौ प्रसजादेशो न स्थानिवद्भवतीति । स्थानिवत्त्वप्रतिषेधः सिद्धो भवति । यदा खल्वप्यायादय आर्धधातुके वा भवन्ति तदा णिचि णिङ्नास्ति तदर्थं च मित्प्रतिषेधः स्यात् । तस्मात्प्रतिषेधः प्राप्नोति । उक्तं वा*। किमुक्तम् । तद्धितकाम्योरिक्पूकरणादिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । नचैष इग्लक्षणा वृद्धिरिति । कमेर्णिङ् ॥

**आयादय आर्धधातुके वा ॥ ॥३१॥** कथमिदं विज्ञायते आयादिभ्यो

---

कर्तव्ये बहिरङ्गा वृद्धिरसिद्धेत्यर्थः । स्थानिवद्भावादिति । क्विलुगुपधात्वेत्युपधाविधौ स्थानिवत्त्वनिषेधः प्रत्ययविधावेवेति तत्रैवोक्तम् । तथा च पटयतीत्यत्र वृद्धौ कर्तव्यायां निषेधो न भवति । किं पुनरिति । कमेर्णिङि वृद्धिप्रतिषेधान्नित्यं ह्रस्वत्वमेव स्थितमिति मित्प्रतिषेधो न कर्तव्यो भवति क्रियमाणस्तु णिङि वृद्धेर्ज्ञापक एवेति भावः । उपसंख्यानं कर्तव्यं स्यादिति । पाक्षिकवृद्धिप्राप्त्यर्थमित्यर्थः । एतदिदानीमिति । ततश्च पाक्षिकदीर्घनिवृत्त्यर्थो मित्प्रतिषेधो न ज्ञापकः । यदेति । अणिङन्तात्कमेर्यदा णिच् क्रियते तदा ह्रस्वनिवृत्त्यर्थो मित्प्रतिषेधः स्यादित्यर्थः ॥ ३० ॥

यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति । आहो स्विदायादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते आयादीनामुत्पत्तिर्भवतीति । किं गतमेतदियता सूत्रेण आहो स्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम् । गतमित्याह । कथम् । यदा तावदायादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वायादीनां निवृत्तिर्भवतीति तदाऽविशेषेण सर्वमायादिप्रकरणमनुक्रम्य आयादय आर्धधातुके वेत्युच्यते । यदाप्यादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनामुत्पत्तिर्भवतीति तदैकं वाक्यं तच्चेदं च । गुपूधूपविच्छिपणिपनिभ्य आयः । आर्धधातुके वा । ऋतेरीयङ् आर्धधातुके वा । कमेर्णिङ् । आर्धधातुके वेति । कश्चात्र विशेषः । आयादिभ्यो यदार्धधातुकम् आयादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्गः * । आयादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टं प्राप्नोति । यदि विज्ञायते आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति । गुप्तिः जुगोपेति चेष्टं न सिध्यति । इदं चानिष्टं प्राप्नोति गोपाञ्चकार गोपेति । इदं तावदिष्टं सिद्धं भवति । गोपायाञ्चकार गोपायेति । अथ विज्ञायते आयादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवतीति । गुप्तिर्जुगोपेति चेष्टं सिद्धं भवति । इदं चानिष्टं न प्राप्नोति । गोपाञ्चकार गोपेति । इदं त्विष्टं न सिद्ध्यति । गोपायाञ्चकार गोपायेति । इदं तावदिष्टं सिद्धं भवति गोपायाञ्चकारेति । कथम् । अस्त्वत्रायादिप्रकृतेर्यदार्धधातुकं लिट् तस्मिन्नवस्थिते वा आयादयः आम्मध्ये पतिष्यति यथा विकरणस्तद्वत् । इदं तर्हीष्टं न सिध्यति गोपायेति । सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वा विधानम् * । सिद्धमेतत् । कथम् । अविशेषेणायादीनां वाविधिमुक्त्वा सार्वधातुके नित्यमिति व-

---

आयादयः ॥ आर्धधातुकइति परसप्तमीमाश्रित्य पक्षद्वयविचारः । द्वयोरपि च पक्षयोर्दोष इति मत्वा प्रश्नः । कथमिति । आहोस्विदन्यतरस्मिन्निति । निवृत्तिशब्द उत्पत्तिशब्दो वा निर्देष्टव्य इति मन्यते । यदा तावदिति । एतद्वाक्यनिरपेक्षैरायादिविधानवाक्यैः परनिमित्तानपेक्षा आयादयो यदा विधीयन्ते तदानेनार्धधातुके तेषां पक्षे निवृत्तिः क्रियते । यद्यपि नित्याश्शब्दास्तथापि शास्त्रप्रक्रियायां क्वचिदुत्पन्नस्य लोपादिद्वारेण निवृत्तिः क्रियते । क्व चिदपवादविधानेनोत्सर्गस्यानुत्पत्तिर्ज्ञाप्यते । ततो निवृत्तिपक्षो नानुपपन्नः । यदेति । यदा सूत्रत्रयस्यायं योगः शेषस्तदैकवाक्यतायां सत्यामार्धधातुके परत आयादयो विकल्पेनोत्पद्यन्तइति पक्षः । यदि तर्ह्येकवाक्यता ततः सार्वधातुकआयादयो नोत्पद्येरन् । नैष दोषः । गुपूधूपेत्यत्रैवार्द्धधातुके वेति वक्तव्ये पृथक्पाठात्सार्वधातुकेप्यायादयो भवन्तीति ज्ञायते । आर्द्धधातुक एव त्वेकवाक्यतया विकल्पेन विधीयन्ते। गुप्तिरिति । गोपायशब्दस्य प्रत्ययान्तत्वादकारेण क्तिनो

क्ष्यामि । स्यादिबलीयस्त्वं तु विप्रतिषेधेन तुल्यनिमित्तत्वात् * । स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति । किं कारणम् । विप्रतिषेधेन तुल्यनिमित्तत्वात् । तुल्यं हि निमित्तमायादीनां स्यादीनां च । स्यादीनामवकाशः करिष्यति हरिष्यति । आयादीनामवकाशः गोपायति धूपायतीति । इहोभयं प्राप्नोति गोपायिष्यति धूपायिष्यतीति । परत्वात् स्यादयः प्राप्नुवन्ति । न वायादिविधानस्यानवकाशत्वात् * । न वैष दोषः । किं कारणम् । आयादिविधानस्यानवकाशत्वात् । अनवकाशा आयादयः । उच्यन्ते च ते वचनाद्भविष्यन्ति । ननु चेदानीमेवावकाशः प्रक्लृप्तः गोपायति धूपायतीति । अत्रापि शप् स्यादिर्भवति । यद्यत्रापि शप् स्यादिर्भवति । न त्वत्रास्ति विशेषः सति वा शप्यसति वा । अन्यदिदानीमेतद् । यदुच्यते नास्ति विशेष इति । यत्तु तदुक्तम् । आयादीनां स्यादिभिरव्याप्तोवकाश इति स नास्त्यवकाशः । अवश्यं खल्वप्यत्र शप्स्यादिरेषितव्यः । किं प्रयोजनम् । गोपायन्ती धूपायन्तीति शप्श्यनोर्नित्यमिति नित्यो नुम् यथा स्यात् । यदि तर्हि अनवकाशा आयादयः आयादिभिः स्यादीनां बाधनं प्राप्नोति । यथा पुनरयं सूत्रभेदेन परिहारः यदि पुनः शपि नित्यमित्युच्यते । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तमायादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्ग इति । नैष दोषः। आर्धधातुके इति नैषा परसप्तमी । का तर्हि । विषयसप्तमी । आर्धधातुके विषयइति । तत्रार्धधातुकविषये आयादिप्रकृतेरायादिषु वा कृतेषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति । आयादय ॥

**सनाद्यन्ता धातवः** ॥ ३२ ॥ अन्तग्रहणं किमर्थं न सनादयो धातव इत्येवोच्येत । केनेदानीं तदन्तानां भविष्यति । तदन्तविधिना । अत उत्तरं पठति । सनादिष्वन्तग्रहण उक्तम् * । किमुक्तम् । पदसं-

---

बाधनाद् गुप्तिर्न सिध्यति । आमि परत आयस्य पाक्षिक्यां निवृत्तौ जुगोपेति न सिध्यति । दोषोपलक्षणं चैतत् गुप्त इत्यपि न सिध्यति । क्तप्रत्यये परत आयस्य निवृत्तौ सत्यां प्रत्ययलक्षणेन गुणप्रसङ्गात् । न च प्रत्ययलोपसूत्रे लोपसंज्ञासूत्रे वा तद्भावितग्रहणमाश्रितम् । गोपायतीति । विशेषाभावादत्र शपोनुत्पत्तिरित्यायादीनामनवकाशं मन्यते । अन्यदिदानीमिति । विशेषाभावेपि लक्षणवशात् प्रवर्त्यं शबेति भावः । कामयतइत्यत्र तु विशेषोस्त्येव । शपमन्तरेणास्य रूपस्याभावात् । यथा पुनरिति । वार्त्तिककारेण तु सिद्धं सार्वधातुके नित्यवचनादिति ब्रुवता सूत्रभेदेन परिहार उक्तो ऽवश्यकर्तव्ये च सूत्रभेदे शपि नित्यमिति न्यासः कर्तव्यो येन दोषो न भवतीत्यर्थः। ननु तौदादिकत्वाद्विच्छेः शेन भाव्यं न तु शपा । एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति शपि नित्यमिति तु न्यासः कर्तव्यः ।

ज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थमिति । इदं चापि प्रत्ययग्रहणम् । अयं चापि संज्ञाविधिः । किमर्थं पुनरिदमुच्यते । न-भूवादयो धातव इत्येवं सिद्धम् । न सिध्यति । पाठेन धातुसंज्ञा क्रियते । न चेमे तत्र पठ्यन्ते कथं तर्ह्यन्येषामपठ्यमानानां धातुसंज्ञा भवति । अस्तेर्भूः ब्रुवो वचिः चक्षिङः ख्याञिति । यद्यप्येते तत्र न पठ्यन्ते । प्रकृतयस्त्वेषां पठ्यन्ते । तत्र स्थानिवद्भावात्सिद्धम् । इमेपि तर्हि यद्यपि तत्र न पठ्यन्ते येषां त्वर्था आदिश्यन्ते । ते तत्र पठ्यन्ते तत्र स्थानिवद्भावात्सिद्धम् । न सिध्यति । आदेशाः स्थानिवदित्युच्यते न चेमे आदेशाः । इमे अप्यादेशाः । कथम् । आदिश्यते यः स आदेशः इमे चाप्यादिश्यन्ते एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते । न चेमे षष्ठीनिर्दिष्टस्यादेशाः । षष्ठीग्रहणं निवर्तिष्यते । यदि निवर्तते । अपवादे उत्सर्गकृतं प्राप्नोति । कर्मण्यण् आतोनुपसर्गे क इति केप्यण्कृतं प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति नापवादे उत्सर्गकृतं भवतीति यदयं श्यन्नादीन् कांश्चिच्छितः करोति श्यन्क्ष्नम्श्नाश्नुरिति । सनाद्यन्ता धातवः ॥

**स्यतासी ललुटोः** ॥ ३३ ॥ इमे विकरणाः पठ्यन्ते तत्र न ज्ञायते क उत्सर्गः कोपवाद इति । तत्र वक्तव्यमयमुत्सर्गः अयमपवाद इति । इमे ब्रूमः यगुत्सर्गः अपवादाः शबादयः स्यादयश्च । यदि यगुत्सर्गः अपवादः शबादिः

---

सनाद्यन्ता । भूवादय इत्येवेति । भुवो वादयो भूवादय इत्यर्थाश्रयणादिति भावः । ततश्च क्रियावाचित्वात्सनाद्यन्तानां धातुसंज्ञा सिध्यतीत्यर्थः । पाठेनेति । आदिशब्दस्य प्रत्येकं संबन्धादर्थपाठाभ्यां धातुसंज्ञा विहिता तेनाणवयत्यादयः समानशब्दाश्च सर्वनामादयो निवर्तिता भवन्तीति भावः । स्थानिवद्भावेन धातुसंज्ञासिद्धिं वक्ष्यामीति पृच्छति कथं तर्हीति । ननु भूवचिख्यादिशब्दा धातुपाठे पठिता एव । नैतदस्ति । न हि ये धातुपाठ पठितास्त इहादिश्यन्ते शब्दान्तरत्वादादेशानाम् । जग्ध्यादीनां तु पाठशङ्कापि नास्ति । येषां त्वर्थ इति । इष्यादीनामित्यर्थः । न चेम इति । रूढिशब्दस्यादेशशब्दस्य तत्र ग्रहणाद्येषामेव स्थानिनिवृत्त्यादेशत्वं प्रसिद्धं तेषामेव तत्र ग्रहणमित्यर्थः । इमेपीति । क्रियानिमित्तकस्यादेशशब्दस्य तत्र ग्रहणमित्यर्थः । अत्र चोदयन्ति । यदि स्थानिवद्भावेन सनादीनां धातुसंज्ञा विधीयते तदा तदन्तविध्यभावात् प्रत्ययानामेवङ्गसंज्ञानिबन्धनान्यडादीनि प्राप्नुवन्ति प्रत्ययान्तानां चेष्यन्ते । यङ्प्रत्ययश्च समभिहारविशिष्टक्रियावचनाद्धातो स्वार्थे विधीयते आयादयश्च शुद्धएव स्वार्थे विधीयन्ते इति तेषां स्थानिनः कस्यचिन्निवृत्त्यभावात् स्थानिवत्त्वाभावाद्धातुसंज्ञा न प्राप्नोति । अत्रोच्यते । कर्तुमिच्छतीतिकरणाङ्गइष्यर्थे सर्वे सर्वपदादेशा इति न्यायाद्वर्तमानस्य इषेः प्रसङ्गे चिकीर्षशब्दस्सन्नन्त आदिश्यतइति सिद्धं तदन्तस्य धातुत्वम् । एवं समभिहारविशिष्टलवनक्रियावाचिलूशब्दप्रयोगप्रसङ्गे लोलूयशब्द आदिश्यते । गुपेः प्रसङ्गे गोपायशब्द इति भगवतो भाष्यकारस्याभिप्रायः ३१॥

स्यतासी । उत्सर्गापवादधर्मज्ञानाय पृच्छति इमे इति । यगुत्सर्ग इति । भाव-

स्यादयश्च । अपवादविप्रतिषेधाच्छबादिबाधनम् * । अपवादविप्रतिषेधाच्छबादिभिः स्यादीनां बाधनं प्राप्नोति । शबादीनामवकाशः पचति पठति । स्यादीनामवकाशः पक्ष्यते यक्ष्यते । इहोभयं प्राप्नोति पक्ष्यति यक्ष्यति । परत्वाच्छबादयः प्राप्नुवन्ति । अपवादो नामानेकलक्षणप्रसङ्गः * । अपवादो नाम स भवति यत्रानेकलक्षणप्रसङ्गः । अत्र च भावकर्मणोर्यग्विधीयते । कर्तरि शप् । कः प्रसङ्गो यद्भावकर्मणोर्यकं कर्तरि शबादयो बाधेरन् । एवं तर्हि यक्शपावुत्सर्गौ अपवादाः श्यनादयः स्यादयश्च । एवमपि अपवादविप्रतिषेधाच्छ्यन्नादिबाधनम् * । अपवादविप्रतिषेधात् श्यन्नादिभिः स्यादीनां बाधनं प्राप्नोति । श्यन्नादीनामवकाशः दीव्यति सीव्यति । स्यादीनामवकाशः पक्ष्यति यक्ष्यति । इहोभयं प्राप्नोति देविष्यति सेविष्यतीति । परत्वाच्छ्यन्नादयः प्राप्नुवन्ति । नैष दोषः । शबादेशः श्यनादयः करिष्यन्ते । शप् स्यादिभिर्बाध्यते । तत्र दिवादिभ्यः स्यादिविषये शबेव नास्ति कुतः श्यन्नादयः । तर्हि शपो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । कर्तरि शबिति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । नैष दोषः । दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । प्रत्ययविधिरयं न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः विहितः प्रत्ययः प्रकृतश्चानुवर्तते । अथ वा अनुवृत्तिः करिष्यते । सार्वधातुके यक् स्यतासी ऌलुटोः च्लि लुङि च्लेः सिज्भवतीति । कर्तरि शप् स्यतासी ऌलुटोः च्लि लुङि च्लेः सिज्भवति । दिवादिभ्यः श्यन् स्यतासी ऌलुटोः च्लि लुङि च्लेः सिज्

---

कर्मग्रहणाननुवृत्त्या सार्वधातुकमात्रे विधानादिति भाव । अपवादविप्रतिषेधादिति । यगपवादानामुभयेषां शबादीनां स्यादीनां च विप्रतिषेधे सति परत्वाच्छबादय. स्युरित्यर्थः । अपवाद इति । यत्रोत्सर्गलक्षणस्यापवादलक्षणस्य च प्रसङ्गः तत्रापवादव्यवहारः यग्विधौ तु भावकर्मग्रहणानुवर्तनात्कर्तरि यको ऽप्रसङ्गान्नास्ति तदपवादत्वमित्यर्थः । लावस्थायामिति । ननु च परत्वाल्लादेशैर्भाव्यम् । न च लादेशानामनित्यत्वम् । कृतेष्वपि स्यादिषु आतृतीयपरिसमाप्तेर्धात्वधिकारेऽपि धातोर्विहितस्य लस्येत्येवं विहितविशेषणाश्रयणाल्लादेशानां प्रसङ्गात् । एवं तर्हि कृतेष्वपि लादेशेषु स्यादयो भवन्तोऽन्तरङ्गा एव भवन्ति । नहि तद्विधौ शब्देन सार्वधातुकत्वमर्थविशेषो वा कर्त्रादिराश्रितः । श्यनादयस्तु तदाश्रयत्वाद्बहिरङ्गाः । अवश्यं चैतदभ्युपगन्तव्यं कृतेषु स्वादेशेषु स्यादयः क्रियन्त इति । अन्यथा तासेः परस्य त्वसार्वधातुकस्यानुदात्तत्वविधानं न विकरणस्य स्वरो लसार्वधातुकस्वरं बाधत इत्यस्यार्थस्य कथं ज्ञापकं स्यात् । यदि हि लावस्थायां तासिः क्रियेत पश्चात्सार्वधातुकं तदा सति शिष्टत्वात्सार्वधातुकस्योदात्तत्वे प्राप्ते ऽप्राप्तानुदात्तार्थं वचनमिति ज्ञापकत्वं नोपपद्येत । ये त्वाहुः । संख्याविधानवाक्येनात्मनेपदपरस्मैपदप्रकरणेन च स्वदेशविधानवाक्यस्यैकवाक्यतायां लाद-

भवति । अथ वान्तरङ्गाः स्यादयः । कान्तरङ्गता । लावस्थायामेव स्यादयः । सार्वधातुके श्यन्नादयः । स्यतासी ॥

**सिब्बहुलं लेटि** ॥ ३४ ॥ सिबुत्सर्गः छन्दसि सनाद्यन्तेनेषत्वाद्यर्थः * । सिबुत्सर्गश्छन्दसि कर्तव्यः सनाद्यन्तेनेषत्वाद्यर्थः । सनाद्यन्ताधिकारे च कर्तव्यः । किं प्रयोजनम् । नेषत्वाद्यर्थः । इन्द्रो नस्तेन नेषतु गावोनेष्टादिति । प्रकृत्यन्तरत्वात्सिद्धम् * । प्रकृत्यन्तरत्वात्सिद्धमेतत् । कथम् । प्रकृत्यन्तरं नेषः नेषतु नेष्टादिति दर्शनात् । नेषतु नेष्टादिति हि दृश्यते । अथ किमर्थः पकारः । स्वरार्थः । अनुदात्तौ सुप्पिताविसेष स्वरो यथा स्यादिति । पित्करणानर्थक्यं चानच्कत्वात् * । पित्करणं चानर्थकम् । कुतः । अनच्कत्वात् । अनच्कोयम् । तत्र नार्थः स्वरार्थेनानुबन्धेन पकारेण । इटि कृते साच्को भविष्यति । इटोनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् * । आगमानुदात्तत्वेनेटोनुदात्तत्वं भविष्यति । एवं तर्हि सवयं कर्तव्यः । किं प्रयोजनम् । यदवयासिसीष्ठाः । एकाज्लक्षण इट्प्रतिषेधो मा भूदिति । क्वायमकारः श्रूयते । न क्व चिच्छ्रूयते । लोपोस्य भविष्यति । अतो लोपः आर्धधातुक इति । यदि न क्व चिच्छ्रूयेत । नार्थः

---

शानां बहिरङ्गत्व ल्लावस्थायामेवान्तरङ्गत्वात् प्रतिपदविधानाच्च स्यादयो भवन्तीति तैस्तासेः परस्य लसार्वधातुकस्यानुदात्ताविधानस्य पूर्वोक्तार्थज्ञापकत्वमसमर्थितं भवति ॥ ३३ ॥

सिब् बहुलम् ॥ सिबुत्सर्ग इति परनिमित्तमनुपादाय सनादिवर्गे धातोः सिब् विधेयः । तेन तदन्तस्य धातुसंज्ञायां सत्यां नेषत्यादीनि सिद्ध्यन्ति । नीशब्दात्सिपि गुणे च कृते लेटि च नेषतिरिति रूपम् । प्रकृत्यन्तरत्वादिति । जेषृनेषृप्रेषृगताविति पाठान्नयत्यर्थ उत्सर्गो न कर्तव्यः । अवयासिसीष्ठा इत्याद्यर्थस्तु कर्तव्य एव । सवयमिति । सनादिमध्येऽन्नैव वेति भावः । यदवयासिसीष्ठा इति । यातेरवपूर्वात् सप् लिङ् थास् सुट् सीयुट् । सबन्तस्याङ्गस्यानेकाच्त्वात्सीयुडादेरिडागमो भवति । यदि पुनः सिप् क्रियते तदावश्यमिकार उच्चारणार्थो व्याख्येय. । अन्यथा तस्य श्रवणं स्यात् । तत्र सिबन्तस्य धातोरेकाच्त्वादिट्प्रतिषेधः प्रसज्येत । ननु योत्र धातुरुपदेशे ऽनुदात्तो याशब्दः न तस्मात् परमार्धधातुकं, सिपा व्यवधानात् । यस्माच्च सिबन्तात् परमार्धधातुक नासावुपदेशे ऽनुदात्तः । एवं तर्हि सनाद्यन्ता धातव इत्यस्य यदा सनाद्यवयवा धातवो भवन्तीत्यर्थो व्याख्यायते तदा सिपो यात्यवयवत्वाद्यातिग्रहणेन ग्रहणादिट्प्रतिषेधप्रसङ्गः । यदापि स्थानिवद्भावाश्रयणेन सूत्रं प्रत्याख्यातं तदा स्थानिवद्भावेनानुदात्तादेकाचः श्रूयमाणात् प्राप्नोत्येवेट् प्रतिषेधः । अनुदात्तस्येति । धातोरित्यनाश्रित्योक्तम् । अथ वैतत् प्रदेशपाठाश्रयमेतद्भाष्यम । उदात्तस्येति । छन्दस्युभयथेति सार्वधातुकत्वाददुपदेशाददिति लसार्वधातुकानुदात्तत्वे सति प्रत्ययस्वरेण धातुस्वरेण वा सशब्दाकारस्योदात्तत्वादुदात्तानिवृत्तिस्वर इटा प्रसज्येत । पकारे तु सति अनुदात्त एवेड

स्वरार्थेन पकारेणानुबन्धेन । एवमपि कर्तव्यः । किं प्रयोजनम् । अनुदात्तस्य लोपो यथा स्यादुदात्तस्य लोपो मा भूदिति । किं च स्यात् । उदात्तनिवृत्तिस्वरः प्रसज्येत । सिब् बहुलं छन्दसि णित् * । सिब् बहुलं छन्दसि णिद् वक्तव्यः । सविता धर्मसाविषत् । प्रणआयुंषि तारिषत् । सिब्बहुलम् ॥

कास्प्रत्ययादाममन्त्रे लिटि ॥३५॥ कास्ग्रहणे चकास उपसंख्यानम् *। कास्ग्रहणं चकास उपसंख्यानं कर्तव्यम् । चकासाञ्चकार । न कर्तव्यम् । चकास्प्रत्ययादिति वक्ष्यामि । चकास्ग्रहणे कास उपसंख्यानम् *। चकास्ग्रहणे कास उपसंख्यानं कर्तव्यम् । कासाञ्चक्रे । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं कास्ग्रहणे चकास उपसंख्यानमिति । नैष दोषः । चकास्शब्दे कास्शब्दोऽस्ति तत्र कास्प्रत्ययादित्येव सिद्धम् । न सिध्यति । किं कारणम् । अर्थवतः कास्शब्दस्य ग्रहणं न च चकास्शब्दे कास्शब्दोऽर्थवान् । एवं तर्हि कास्यनेकाच इति वक्तव्यम् । किं प्रयोजनम् । चुलुम्पाद्यर्थम् । चुलुम्पाञ्चकार दरिद्राञ्चकार॥

इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥ गुरुमत आम्विधाने लिण्निमित्ताद् प्रतिषेधः * । गुरुमत आम्विधाने लिण्निमित्ताद् गुरुमतः प्रतिषेधो वक्तव्यः । इयेष उवोष । गुणे कृते इजादेश्च गुरुमतोनृच्छ इत्याम् प्रसज्येत । गुरुमद्वचनमिदानीं किमर्थं स्यात् । गुरुमद्वचनं किमर्थमिति चेद् णल्युत्तमे यजादिप्रतिषेधार्थम् * । गुरुमद्वचनं किमर्थमिति चेण्णलि उत्तमे यजादीनां मा भूदिति । इयज अहम् । उपदेशवचनात्सिद्धम् * । उपदेशे गुरुमत इति वक्तव्यम् । यद्युपदेशग्रहणं क्रियते उच्छेराम् वक्तव्यः । व्युच्छाञ्चकारेति । ऋच्छिप्रतिषेधो ज्ञापक

---

भवति पित्करणसामर्थ्यादेव च सशब्दाकारस्य धातुस्वरो न भवति एतत् प्रदेशपाठाद्वा । याशब्दस्यैव तु भवति । तिङ्ङतिङ इति यो निघातः स निपातैर्यद्यदीति प्रतिषिद्धो ऽत्रशब्दस्य तिङि चोदात्तवतीति निघातः । साविषदिति । षूप्रेरण इत्यस्य लेटि रूपम् । तारिषदिति तरतेः ॥ ३४ ॥

इजादेः ॥ उवोषिति । नन्वत्रोषांचकारेति विकल्पेनामा भाव्यम् । अत्राहु । द्विवचनबहुवचनयोर्गुणाभावाद् गुरुमत्त्वाभावाद्विकल्पः सावकाश इति यत्र गुरुमत्त्वं तत्र नित्यमेवाम् प्राप्नोति । एतच्च विप्रतिषेधे परमिति प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकारेणोदाहृतम् । तदा ह्याश्रिते विकल्प एव भविष्यतीति नैतदिहोपन्यसनीयम् । गुरुमद्वचनमिति । ईषतुरीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्त्वादामा भवितव्यमिति गुरुमद्वचनसामर्थ्यादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यतइति भावः । णल्युत्तम इति । एतच्चोपलक्षणं तेन थलपि गृह्यते । इयष्ठ इयजिथेति । लिट्यभ्यासस्य संप्रसारणे कृते यजादय इजादयो भवन्तीति । उपदेशवचनादिति । वचनं व्याख्यानमभिप्रेतमन्यथा वचनेन वचनान्तरस्य को गुणः स्यात् । तस्माज्ञित्ययोगे

उच्छेराम्भावस्य । यदयमनृच्छ इति प्रतिषेधं शास्ति तद् ज्ञापयत्याचार्यः तुङ्निमित्ता यस्य गुरुमत्ता भवति तस्मादामिति । स तर्हि ज्ञापकार्थ ऋच्छिप्रतिषेधो वक्तव्यः। ननु चावश्यं प्राप्त्यर्थोऽपि वक्तव्यः । नार्थः प्राप्त्यर्थेन । ऋच्छत्यृतामिति ऋच्छेर्लिटि गुणवचनं ज्ञापकं नर्च्छेर्लिट्याम् भवतीति नैतदस्ति ज्ञापकम् । असंदेहार्थमेतत्स्यात् । कथं पुनर्ऋच्छेर्लिटि गुण उच्यमानोऽसंदेहार्थः शक्यो विज्ञातुम् । सामर्थ्यात् । ऋच्छेर्लिटि नास्तीति कृत्वा प्रकृत्यर्थो विज्ञास्यते । तद्यथा । तिष्ठतेरित् । जिघ्रतेर्वेति । चङि तिष्ठतिजिघ्रती न स्त इति कृत्वा प्रकृत्यर्थो विज्ञायते । किं पुनरर्तेर्लिटि गुणवचने प्रयोजनम् । आरतुः । आरुः । एतद्रूपं यथा स्यात् । किं पुनः कारणं न सिध्यति । द्विर्वचने कृते सवर्णदीर्घत्वम् । सवर्णदीर्घत्वे च कृते यदि तावद्धातुग्रहणेन ग्रहणम् । ऋकारान्तानां लिटि गुणो भवतीति गुणे कृते रपरत्वे च अरतुः अरुरित्येतद्रूपं प्रसज्येत । अथाभ्यासग्रहणेन ग्रहणम् । उरदत्वे रपरत्वं हलादिः शेषः । अत आदेरिति दीर्घत्वं तत आतो लोप इटि चेत्याकारलोपे अतुः उरिति वचनमेव श्रूयते । गुणे पुनः सति गुणे कृते रपरत्वे च द्विर्वचनं हलादिः शेषः अत आदेरिति दीर्घत्वं ततः सिद्धं भवति आरतुरारुरिति । यथा आटतुः आटुरिति । किं पुनः कारणं सवर्णदीर्घत्वं तावद्भवति न पुनरुरत्वम् । परत्वादुरत्वेन भवितव्यम् । अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति । अन्तरङ्गं सवर्णदीर्घत्वं बहिरङ्गमुरत्वम् । कान्तरङ्गता । वर्णाश्रिसं सवर्णदीर्घत्वमङ्गस्योरत्वम् । उरत्वमप्यन्तरङ्गम् । कथम् । वक्ष्यत्येतत्प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति । उभयो-

---

मतुप आश्रयणादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इत्यर्थः । उपदेशग्रहणशब्देनाव्यपदेशो गृह्यतेनेनेति व्युत्पत्त्या व्याख्यानमेवोच्यते । उच्छेरिति । उच्छी विवास इत्युपदेशे गुरोरपाठान्नायं गुरुणा नित्ययुक्तः । तुङ्निमित्तेति । तुग्ग्रहणमागममात्रोपलक्षणं तेनेङ्खांचकारेत्यत्रापि भवति । प्राप्त्यर्थोऽपीति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः । ऋच्छेरिति । आमा व्यवधानेऽपि वचनाद् गुणो भविष्यतीति चेदेवं सति तास्मन्निति निर्दिष्ट इत्येतद् बाध्येत तस्मादाम एवाभावो गुणविधानेन ज्ञाप्यते । सामर्थ्यादिति । ऋगतिप्रापणयोरित्यस्य शितपि शपि ऋच्छादेशः कृतो न त्वनादेश ऋच्छिर्निर्दिष्ट इत्यर्थः । ऋच्छेरिति । शिति ऋच्छादेशविधानाल्लिटि तदभावः । तिष्ठतेरिति । अत्रापि स्थ शिति तिष्ठादेशं कृत्वा निर्देश कृतः तत्रानेन रूपेण स्थाशब्द एव प्रतीयत इत्यर्थः । द्विर्वचन इति । यणादेशात् पूर्वविप्रतिषेधेन द्विर्वचनं क्रियते । तथा हि । सति स्थानिवद्भावशास्त्रे द्वयोरपि यण्द्विर्वचनयोर्नित्यत्वामिति विप्रतिषेध उपपद्यते अथ वा यथा निन्धतुरित्यत्र यणादेशेन भवितव्यमिति द्विर्वचनात् पूर्वमेव इयङ् न प्रवर्तते तथेहापि द्विर्वचने कृते सवर्णदीर्घेण भाव्यमिति यण् न प्रवर्तते । सति वा यणि तस्य स्थानिवद्भावाद् द्विर्वचनम् । तत्र कृते यणादेशात् परत्वात्सवर्णदीर्घत्वम् । यदि तावदिति । अन्तादिवद्भावादुभयादेशस्यान्यतरतो व्यपदेशात् स्थानिवद्भावाद्धेति भाव । अन्त-

न्तरङ्गयोः परत्वादुरत्वम् । उरत्वे च कृते रपरत्वं हलादिः शेष अत आदेरिति दीर्घत्वं परस्य रूपस्य यणादेशः सिद्धं भवति आरतुः आरुरिति । अथापि कथं चिदर्तेर्लिटि गुणेनार्थः स्यात् । एवमपि न दोषः । ऋच्छत्यॄतामिति ऋकारोऽप्यत्र निर्दिश्यते । कथम् । प्रश्लिष्टनिर्देशोऽयम् । ऋच्छति ऋ ॠताम् ऋच्छत्यॄतामिति । इहापि तर्हि प्राप्नोति चक्रतुश्चक्रुरिति । संयोगादिग्रहणं नियमार्थं भविष्यति । संयोगादेरेवाकेवलस्य नान्यस्याकेवलस्येति । तदेतदन्तरेणार्तेर्लिटि गुणवचनं रूपं सिद्धं भवति । अन्तरेण च ऋच्छिग्रहणम् । अर्तेर्लिटि गुणः सिद्धः । स एषो ऽन्यार्थ ऋच्छिप्रतिषेधो वक्तव्यः । उच्छेर्वा आम् वक्तव्यः । उभयं न वक्तव्यम् । उपदेशग्रहणं न करिष्यते । कस्मान्न भवति इयेष उवोषेति । उक्तं वा । किमुक्तम् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । ऊर्णोतेश्चोपसंख्यानम् * । ऊर्णोतेश्चोपसंख्यानं कर्तव्यम् । प्रोर्णुनाव । न कर्तव्यम् । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ अथ वा उकारोऽप्यत्र निर्दिश्यते । कथम् । अविभक्तिको निर्देशः । अनृच्छ उ अनृच्छो दयायासश्चेति । इजादेः ॥

उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥ विदेराम् कित्वं * । विदेराम् किद्वक्तव्यः । विदाञ्चकार । न वक्तव्यः । विदिरकारान्तः । यद्यकारान्तः वे-

---

रङ्गत्वादिति । वार्णादाङ्गं बलीय इत्येतत्तु समानाश्रयाङ्गवर्णविषयम् । यथा कारकश्चयनमिति गुणवृद्धी भवतो यणादेशात् । इह तूरत्वं लिडाश्रयं वर्णद्वयाश्रयं तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमनयोः । अथापीति । आसप्तमपरिसमाप्तेरङ्गाधिकारो वश्चेत्यादिसिद्ध्यर्थआश्रित इति भावः । ऋकारोपीति । बहुवचननिर्देशादिति भावः । इहापीति । ऋ इति वर्णग्रहणात्तदन्तविधिसद्भावादिति भावः । संयोगादेरिति । अकेवलस्य वर्णान्तरसहितस्येत्यर्थः । ततश्च धातोरेव ग्रहणमवतिष्ठते । स एष इति । आगमनिमित्तगुरुमत्त्वधात्वर्थ इत्यर्थः । अनृच्छ इति पर्युदासाश्रयेण तत्सदृशधातुग्रहणादुच्छेराम्भवति । अथ वा यद्यपि गुणविधानेन ऋच्छेराम्न भवतीति ज्ञायते तथाप्यनृच्छ इति प्रतिषेधः प्राप्तिसंभावनया क्रियमाणो ज्ञापको यथोक्तस्यार्थस्य भवति । उपदेशग्रहणमिति । गुरुमत इति गुरुमत्तामात्राश्रयो मतुब् यथा पितृमानिति न तु नित्ययोग इति व्याख्यास्यत इत्यर्थः । संनिपातलक्षण इति । लिट्सन्निपातनिमित्तो गुणस्तद्विघातनिमित्तस्यामो निमित्तं न भवति । आमि सति हि लेर्लुका भाव्यमिति लिट्सन्निपातस्य विघातः स्यात् । ऊर्णोतेरिति । प्रतिषेध इत्यर्थः । उकारोपीति । तेनोकारान्तस्योर्णोतेराम्न भवति । संहितया च सूत्रपाठ इति दर्शयति । अनृच्छो दयायासश्चेति ॥ ३६ ॥

उषविद ॥ विदिरकारान्त इति । सूत्रे अकारान्तत्वं विदेर्निपात्यत इति भावः । इतरो धातुपाठ एवाकारान्तत्वमनेन विदिरुक्तमिति मत्वाह यदीति । गुणो न सिध्य-

त्तीति गुणो न सिध्यति। लिट्सन्नियोगेन। एवमपि विवेदेति न सिध्यति। एवं तर्हि आम्सन्नियोगेन। भारद्वाजीयाः पठन्ति। विदेराम् किन्निपातनाद्वा अगुणत्वमिति ॥

भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥ श्लुवदतिदेशे किं प्रयोजनम्। श्लुवदतिदेशे प्रयोजनं द्वित्वेत्वे। बिभराञ्चकार ॥

कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥ किमर्थमिदमुच्यते। अनुप्रयोगो यथा स्यात्। नैतदस्ति प्रयोजनम्। आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वानुप्रयोगो भविष्यति। अत उत्तरं पठति। कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम् *। कृञोऽनुप्रयोगवचनं क्रियते। अस्तिभुवोरनुप्रयोगो मा भूदिति। आत्मनेपदविध्यर्थं च *। कात्मनेपदविध्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते। आत्मनेपदं यथा स्यात्। उच्यमानेऽप्येतस्मिन्नवश्यमात्मनेपदार्थो यत्नः कर्तव्यः। अस्तिभूप्रतिषेधार्थेन चापि नार्थः। इष्टः सर्वानुप्रयोगः। सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते। किमिष्यत एव आहो स्विदप्राप्तोऽपि। इष्यते च प्राप्तोऽपि। कथम्। कृञिति नेदं धातुग्रहणं किं तर्हि प्रत्याहारग्रहणम्। क्व संनिविष्टानां प्रत्याहारः। कृभ्वस्तियोग इत्यतः प्रभृत्या कृञो ञकारात्। सर्वानुप्र-

---

त्तीति। इकारस्योपधत्वाभावादकारलोपाभावाच्च विदतीति स्यादित्यर्थः। आम्सन्नियोगेनेति। आमः प्राधान्येन विधीयमानत्वात्तदनुयायित्वमत्वस्येत्यर्थ ॥ ३८ ॥

भीह्री ॥ द्विर्वचनमेव विधेयं किमतिदेशेनेति पृच्छति श्लुवदतिदेश इति। न लुमताङ्गस्येति गुणप्रतिषेधो न भवति। प्रत्ययलोप इत्यस्याः प्राप्तेरयं निषेधो न चात्रासौ प्राप्तिरस्ति ॥ ३९ ॥

कृञ्चानु ॥ किमर्थमिति। अन्तरेणापि सूत्रारम्भमनुप्रयोगः सिद्धः कालसाधनसंख्याप्रत्यक्षादिप्रतिपादनाय लिट्परस्य कृञः। आमन्ताद्धि कालविशेष एवावसीयते न त्वर्थान्तरं तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति। ओषामुवोषेति। उत्तरेणैव सर्वार्थाभिव्यञ्जनादामन्तस्यानर्थक्यप्रसङ्गात्। नापि भिन्नार्थस्य इहां पपाचेति। आमन्तसंबद्धसाधनाद्यसंप्रत्ययात्। कृञ् तु सामान्यवचनः। सामान्यविशेषवाचिनोश्च प्रयोगोऽर्थविशेषप्रतिपादनेऽनुगुण इति भावः। अनुप्रयोग इति। यद्यप्यामन्तात्सकलार्थाभिव्यक्तिर्न भवति तथापि प्रकरणादिवशाद्भविष्यति तस्मादनुप्रयोगासिद्ध्यर्थमिदं वक्तव्यमिति भावः। आमन्तमिति। पूर्वोक्तानामर्थानां प्रकरणादिवशादशक्या प्रतिपत्तिरिति तदर्थाभिधानायानुप्रयोगः सिध्यत्येवेति भावः। करोतेरेवानुप्रयोगो यथा स्याद् भ्वस्त्योर्मा भूदिति नियमार्थमेतदिति दर्शयितुमाह कृञ इति। आत्मनेपदेति। सिद्धे कृञोऽनुप्रयोगे पुनर्वचनमतिशयेनानुगुणस्यानुप्रयोगार्थं तेनात्मनेपदप्रकृतेरामन्तस्यात्मनेपदान्त एव करोतिरनुप्रयुज्यत इत्याम्प्रत्ययवदिति सूत्रं न कर्तव्यं भवतीत्यर्थः। अवश्यमिति। परस्मैपदेनापि कर्त्रर्थस्यावगमात्तदन्तस्यानुप्रयोगः स्यादिति भावः। प्रत्याहारग्रहणमिति। एतच्चाम्प्रत्ययवदित्यत्र कृञ्ग्रहणाद् भ्वस्तिनिवृत्त्यर्थात्

योग इति चेदशिष्यमर्थाभावात् * । सर्वानुप्रयोग इति चेदशिष्यं कृञोऽनुप्रयोगवचनम् । किं कारणम् । अर्थाभावात् । आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो भविष्यति । इदं तर्हि प्रयोजनम् । कृभ्वस्तीनामेवानुप्रयोगो यथा स्यात् पचादीनां मा भूदिति । एतदपि नास्ति प्रयोजनम् । अर्थाभावाच्चान्यस्य सिद्धम् * । अर्थाभावाच्चान्यस्य सिद्धमेतत् । कुतः । कृभ्वस्तयः क्रियासामान्यवाचिनः क्रियाविशेषवाचिनः पचादयः न च सामान्यवाचिनोरेव वा प्रयोगो भवति । तत्र विशेषवाचिन उत्पत्तिः । सामान्यवाचिनोऽनुप्रयोक्ष्यन्ते । लिट्परार्थं वा । लिट्परार्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । लिट्परस्यैवानुप्रयोगो यथा स्यात् । अन्यपरस्य मा भूदिति । किं परस्य पुनः प्राप्नोति । लट्परस्य । न लट्परस्यानुप्रयोगेण भूतकालो विशेषितः स्यात् । निष्ठापरस्य तर्हि मा भूत् । न निष्ठापरस्यानुप्रयोगेण पुरुषोपग्रहौ विशेषितौ स्याताम् । लुङ्परस्य तर्हि मा भूत् । न लुङ्परस्यानुप्रयोगेणानद्यतनभूतकालो विशेषितः स्यात् । लङ्परस्य तर्हि मा भूत् । न लङ्परस्यानुप्रयोगेणानद्यतनः परोक्षः कालो विशेषितः स्यात् । अयं तर्हि भूते परोक्षानद्यतने लङ् विधीयते हशश्वतोर्लङ्चेति तत् परस्य मा भूदिति । एतदपि नास्ति प्रयोजनम् । एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयाश्च भविष्यति । तद्यथा । गोषु स्वामी अश्वेषु चेति । न हि भवति गोषु वाश्वानां च स्वामीति । अर्थस-

---

द्विज्ञायते संपदश्चार्थविरोधान्न भविष्यत्यनुप्रयोगः । अशिष्यमिति । विद्यातिनिवृत्त्यर्थमपि नोपयुज्यते । प्रयुक्तानामन्वाख्यानात्तस्य चानुप्रयोगादर्शनात् । न चेति । द्वयोरेकार्थयोः प्रयोगाभावादिति भावः । न्यायप्रदर्शनार्थं च सामान्यवाचिनोरित्युक्तम् । न तु सामान्यवाचिभ्यः कृभ्वस्तिभ्य आम्विधानमस्ति । सामान्यवाचिनश्चार्थं द्योतयितुं विशेषवचनो न शक्तः । प्रत्युत विशेषान्तरव्यावृत्त्या तदर्थविरोधी । लट्परस्येति । भूतविशेषस्यामन्तेन प्रतिपादनाद् भूतस्यापि भूतपूर्वां वर्तमानतामाश्रित्य लट्प्रयोगः स्यादिति भावः । न लट्परस्येति । आमन्तार्थाभिव्यक्त्यर्थत्वादनुप्रयोगस्य विरुद्धकालाभिधायिलडनुप्रयोगो न भविष्यति । न च सांप्रतिकवर्तमानतासंभवे भूतपूर्वाश्रयो लट्प्रयोग उपपद्यत इत्यर्थः । एकस्या इति । वेदलोकप्रसिद्धोऽयं न्यायः । यथा हि । खादिरे बध्नाति पालाशे बध्नातीत्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते । तत्र यदि कदाचित्खदिरस्य भ्रेषो भवति तदा तत्सदृशः बुर्बुरः सादृश्यात् खदिरबुद्ध्या प्रतिनिधीयते न तु पलाशः परिगृह्यते । साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियाऽनिर्वाहप्रसङ्गात् । लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय गवां स्वामीति षष्ठ्युपक्रम्ये तदा अश्वानां चेत्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते । अन्यथाऽश्वेषु चेत्युक्तेऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति तस्माद्योऽर्थो यथा शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तथैवासौ निर्वाह्यो न त्वन्यथा

माप्तेर्वानुप्रयोगो न स्यात् * । अर्थसमाप्तेस्तर्ह्यनुप्रयोगो न स्यात् । आमन्तेन च परिसमाप्तोर्थ इति कृत्वा अनुप्रयोगो न स्यात् । एतदपि नास्ति प्रयोजनम् । इदानीमेव ह्युक्तमामन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यतीति । विपर्यासनिवृत्त्यर्थं वा * । विपर्यासनिवृत्त्यर्थं तर्हि कृञोनुप्रयोगवचनं क्रियते । ईहाञ्चक्रे चक्रे इहामिति मा भूत् । व्यवहितनिवृत्त्यर्थं च * । व्यवहितनिवृत्त्यर्थं च कृञोनुप्रयोगवचनं क्रियते । अन्वेव च कृञोनुप्रयोगो यथा स्यात् । इहाञ्चक्रे । व्यवहितस्य मा भूदिति । इहां देवदत्तश्चक्रे ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

च्लि लुङि ॥ ४३ ॥ क्वायं च्लिः श्रूयते । न श्रूयते । एतस्य सिजादय आदेशा उच्यन्ते । यदि न क्वचिच्छ्रूयते किमर्थं च्लिरुत्सर्गः क्रियते । ननु सिजुत्सर्ग एव कर्तव्यः । तस्य क्सादयोपवादा भविष्यन्ति । अत उत्तरं पठति । च्ल्युत्सर्गः सामान्यग्रहणार्थः * । च्ल्युत्सर्गः क्रियते सामान्यग्रहणार्थः । क्व सामान्यग्रहणार्थेनार्थः मन्त्रे घसह्वरणशवृदहादृवृच्कृगमिजनिभ्यो लेरिति । तत्रावरतस्त्रयाणां ग्रहणं कर्तव्यं स्यात् । चङ्ङोः सिचश्चेति । क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः * । क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः च्लिरुत्सर्गः

---

शब्दाकृत्येत्यर्थः । एवं हि प्रतिपत्तिलाघवं भवति । अर्थसमाप्तेर्वेति । आमन्तपदं यावन्तमर्थमभिधातुं शक्नोति तावानर्थस्तत्रैव परिसमाप्त इत्यनुप्रयोगो न स्यादिति भावः । एतद्भाष्यकारो दूषयितुमाह एतदपीति । अशिष्यमर्थाभावादित्युक्तत्वात् । विपर्यासनिवृत्त्यर्थं वेति सिद्धे कृञ्प्रयोगे देशनियमार्थं वचनम् । अनुशब्दस्य पश्चादर्थत्वात् तेनामन्तस्य पश्चादेव कृञ् प्रयुज्यते न पूर्वं नापि व्यवहितमित्यर्थसंपत्तिः ॥ ४० ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे तृतीयमाह्निकम् ॥

च्लिलुँङि ॥ आदेशैः सर्वत्र बाधितत्वान्नास्य प्रयोगः प्रयोजनं नापि क्विबादीनामिव कार्यार्थता दृश्यते । ततोऽस्यानर्थकं विधानमिति पृच्छति क्वायमिति च्लिरुत्सर्ग इति । स्थानीत्यर्थः । स ह्यादेशेनापोद्यते । सिजुत्सर्ग इत्यत्र तु सामान्यविधिरुत्सर्गशब्देनोच्यते । च्ल्युत्सर्ग इति । च्लेरुत्सर्गो धातुमात्राद्विधानमित्यर्थः । तत्रावरत इति । त्रयाणां तावदवश्यं कर्तव्यं जनेस्तु दीपजनेति तशब्दे विहितस्य चिणो मन्त्रे यदि लुग् दृश्यते तदा चतुर्थस्यापि ग्रहणं कर्तव्यमित्यवरत इत्युक्तम् । तत्र धयतेराकारान्तत्वात्तदर्थं चङ्सिज्ग्रहणं कर्तव्यं घस्लृश्गम्यर्थमङ्ग्रहणं धात्वन्तरार्थं तु सिज्ग्रहणमित्यर्थः । क्सविधान इति । अनिट् इत्येतत् च्लेर्विशेषणं यथा स्यादित्यर्थः । तथा हि । यद्यनिड्ग्रहणेन धातुर्विशेष्यते । यस्मादन्यत्रेडागमो न दृष्ट इति विषयान्तरगतमनिट्त्वमाश्रयणीयम् । लुङादेशानां सार्वधातुकत्वादिटः प्राप्त्यभावात्ततश्च गुहादिभ्यः क्सो न स्यात् । तेषां विकल्पितेनेटा सेट्त्वात् । अथापि पाक्षिकेनेडभावेन तेषामनिट्त्वं स्यात् । तथापि नित्यं क्सः स्यात् । च्लौ तु विशेष्यमाणे यदा तस्येण् नास्ति

क्रियते । च्लेरनिट इति क्सः सिद्धो भवति । घस्लृभावे च कृते लृदित इत्यङ् सिद्धो भवति । अथ चित्करणं किमर्थम् । च्लेः चित्करणं विशेषणार्थम् * । च्लेश्चित्करणं क्रियते । किमर्थम् । विशेषणार्थम् । क्व विशेषणार्थेनार्थः । च्लेः सिजिति । लेः सिजित्युच्यमाने लिङ्लिटोरपि प्रसज्येत । नैतदस्ति प्रयोजनम् । लुङीत्युच्यते । न च लुङि लिङ्लिटौ स्तः । अथेदित्करणं किमर्थम् । इदित्करणं सामान्यग्रहणार्थम् * । इदित्करणं क्रियते सामान्यग्रहणार्थम् । क्व सामान्यग्रहणार्थेनार्थः । मन्त्रे घसह्वरणशवृदहादवृच्कृगमिजनिभ्यो लेरिति आम इति च । इकारे चेदानीं सामान्यग्रणार्थे क्रियमाणे अवश्यं सामान्यग्रहणाविघातार्थश्चकारः कर्तव्यः । क्व सामान्यग्रहणाविघातार्थेनार्थश्चकारेण । अत्रैव । यत्तावदुच्यते च्लिरुत्सर्गः सामान्यग्रहणार्थ इति । क्रियमाणेऽपि वै च्ल्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति । च्लि लुङि च्लेः सिच् लेरिति । यदेतत् लेरिति, तत्परार्थं भविष्यति । कथम् । यदेतद्गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्विति । अत्र सिचो ग्रहणमेतल्लेरिति वक्ष्यामि । यदि लेरित्युच्यते घेटश्चातुःशब्दं प्राप्नोति । अदधद् अधात् अधासीद् अदधादित्येतदपि प्राप्नोति । न चङो लुकि द्विर्वचनम् । न चङो लुकि द्विर्वचनेन भाव्यम् । किं कारणम् । चङीत्युच्यते न चात्र चङं पश्यामः प्रत्ययलक्षणेन । न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः । बहुवचने तर्हि चातुःशब्दं प्राप्नोति । अदधत् अधुः अधासिषुः अधानिषपि प्राप्नोति । नैष दोषः ।

---

तदा क्सो भवति अघुक्षदिति । यदा त्विड् भवति तदा सिच् अगूहीदिति । घस्लृभावे चेति । लुङि यदार्धधातुकं तत्रादेर्घस्लृभावो विधीयते । तत्र च्लौ परतो घस्लृभावे सत्यङ् सिध्यति । अन्यथा सिच्येव घस्लृभाव स्यात् । ततश्च सिचः श्रवणं स्यात् । नाहि प्रवृत्तस्योत्सर्गस्यापवादेन बाधः कर्तुं शक्यतइति भावः । तथा मन्त्रे घसेति यदा सिचो लुक् क्रियते तदा आदिः सिचोऽन्यतरस्यामिति स्वरः स्यात् । लुमता लुप्तेपि तस्मिन् प्रत्ययलक्षणेनास्य स्वरस्येष्टत्वात् । लुङीत्युच्यतइति । लुङीत्यनुवर्ततइत्यर्थः । तदनुबन्धकग्रहणइत्ययमपि परिहारः संभवति । भाष्यकारेण तु प्रकारान्तरेण परिहृतत्वान्नोक्तः । आम इति चेति । तत्र सामान्यग्रहणे सति यथासंभवं कार्यं विज्ञायतइति भावः । अत्रैवेति । अन्यथा तदनुबन्धपरिभाषया ऽस्यैव ग्रहणं स्याद् न लिटस्ततश्चाम इत्यनेन लिटो लुङ् न स्यादित्यर्थः । तान्येवेति । च्लिच्लेर्लेरिति । सिज्लुङीत्येतत्तु इतरेणापि कर्तव्यम् । मन्त्रे घसेत्यत्र चङो ङः सिच इति तान्येव त्रीणीत्यर्थः । च्ल्युत्सर्गवाद्याह यदेतदिति । लेरिति वक्ष्यामीति । तदेव मन्त्रे घसेत्यत्रानुवर्तिष्यते । ततश्च लाघवं भवतीत्यर्थः । घेट इति । विभाषा घ्राधेडित्यत्र लिग्रहणानुवृत्तौ सत्यां लेरादेशेषु कृतेषु स्थानिवद्भावाल्लिग्रहणेन तेषां ग्रहणाल्लुकि कृते चङ्निमित्तं द्विर्वचनं प्राप्नोतीत्यदधादित्यपि स्यात् । ननु चङ्लोपस्य स्थानिवद्भावादाकारलोपे सत्यधदिति भाव्यं तत्कथमुच्यते अदधादिति प्राप्नोतीति । नैष दोषः

आत इति जुस्भावो भविष्यति । न सिध्यति । सिज्ग्रहणं तत्रानुवर्तते । सिज्ग्रहणं तत्र निवर्तिष्यते । यदि निवर्तते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । एवं तर्हि लुक् सिजपवादो विज्ञास्यते । यदि लुक् सिजपवादो विज्ञायते । मा हि दातामित्यत्र आदिस्सिचोन्यतरस्यामित्येष स्वरो न प्राप्नोति । तस्मान्नैतच्छक्यं वक्तुं लुक्सिजपवाद इति । न चेदेवमुच्यते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । तस्मादात इत्यत्र सिज्ग्रहणमनुवर्त्यं तस्मिंश्चानुवर्तमाने धेटश्चातुःशब्द्यं प्राप्नोति । तस्माद्गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्विति अत्र सिज्ग्रहणं कर्तव्यम् । तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति च्लि लुङि च्लेः सिचूलेरिति । यदप्युच्यते क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थ इति । धातुमेवात्रानिट्त्वेन विशेषयिष्यामः । धातोरनिट इति । कथं पुनर्धातुर्नामानिट् स्यात् । धातुरेवानिट् । कथम् । अनिमित्तं वा इटः अनिट् । न वा तस्मादिडस्ति सोयमनिट् अनिडिति । अथ धातौ विशेष्यमाणे क्व योनिडिति विशेषयिष्यसि यदि विज्ञायते निष्ठायामनिट इति । भूयिष्ठेभ्यः प्राप्नोति । भूयिष्ठा हि शलन्ता इगुपधा निष्ठायामनिटः । अथ विज्ञायते लिटि योनिडिति । न कुतश्चित्प्राप्नोति सर्वे हि शलन्ता इगुपधा लिटि सेटः । किं पुनः कारणं धातौ विशेष्यमाणएतयोर्विशेषयोर्विशेषयिष्यसि न पुनर्यत्र सामान्येनेटो विधिप्रतिषेधौ । क्व सामान्येन । वलादावार्धधातुके । यदप्युच्यते घस्लृभावे चेति । आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये घस्लृभावे कृते लृदित इति अङ् भविष्यति । च्लि लुङि ॥

---

क्विलुगुपधात्वेति लुका लुप्तस्य स्थानिवत्त्वनिषेधान्न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधाच्चाकारलोपाभावात् । आत इति । विध्यर्थमेतद्भविष्यति न तु नियमार्थमित्यर्थः । एवं तर्हीति । अकृतेष्वादेशेषु तदपवादो लेरेव लुग्विधास्यते तेनाभूवन्निति जुस्न भविष्यति । आत इत्येतच्च विध्यर्थं भविष्यति । अधुरद्धुरपुरित्यादिसिद्ध्यर्थमिति भावः । तस्मादिति । स्वरसिद्ध्यै सिजादेशे कृते लुक्कर्तव्य इत्यर्थः । कथमिति। आर्धधातुकस्य हीड् विधीयते । तदेव तदभावा दनिडिति व्यपदिश्यते । मत्वर्थे बहुव्रीहिविज्ञानादिति भावः । अनिमित्तमिति । धातोरिटश्च निमित्तनिमित्तिभावोस्तीति नानुपपन्नः षष्ठ्यर्थे बहुव्रीहिरिति भावः । न वा तस्मादिति । अनिट इति वचनसामर्थ्यात्पञ्चम्यर्थे बहुव्रीहिराश्रयिष्यतइत्यर्थः । क्व योनिडिति । असति च्लिविधाने विकरणेन क्सेनानिट्त्वाश्रयेण भाव्यम् । तत्रास्मिन् विषयइटः प्राप्त्यभावाद्विषयान्तरमनिट्त्वस्यापेक्षणीयमिति प्रश्नः । निष्ठायामिति । यद्यार्धधातुकमात्रं परिगृह्यते ततो गुहादिभ्य ऊदिद्भ्यो न स्यादिति निष्ठाश्रयणम् । तदाश्रये च गुहादिभ्यो नित्यं क्सः प्रसज्येत विकल्पितश्चेष्यते इषुरिषुरुषुश्रिषुप्रुष्वादीनां च निष्ठायामनिट्त्वात् क्सः प्राप्नोति । न पुनर्यत्रेति । गुहादयो विकल्पितेट इटो भावाभावाभ्यां भिद्यन्ते तत्र ये सेटस्तेभ्यः

च्लेः सिच् ॥ ४४ ॥ किमर्थश्चकारः । विशेषणार्थः । क्व विशेषणार्थेनार्थः । सिचि वृद्धिः परस्मैपदेष्विति । सौ वृद्धिरितीयत्युच्यमाने अग्निर्वायुरित्यत्रापि प्रसज्येत । नैतदस्ति प्रयोजनम् । परस्मैपदेष्वित्युच्यते न चात्र परस्मैपदं पश्यामः । स्वरार्थस्तर्हि । चितोन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात् । एतदपि नास्ति प्रयोजनम् । अनच्कोयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । इटि कृते न साच्को भविष्यति । तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्वं भविष्यति । न सिध्यति । आगमा अनुदात्ता भवन्तीति अनुदात्तत्वं प्राप्नोति । अत उत्तरं पठति । सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् * । सिचश्चित्करणमनर्थकम् । किं कारणम् । स्थानिवत्त्वात् । चितोयमादेशः स्थानिवत्त्वाच्चिद्भविष्यति । अर्थवत्तु चित्करणसामर्थ्याद्धीट उदात्तत्वम् । नैष दोषः । अर्थवत्तु सिचश्चित्करणम् । को ऽर्थः । सिचः चित्करणसामर्थ्याद्धि इट उदात्तत्वं भविष्यति । नाप्राप्ते प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते । तद्यथैव प्रत्ययस्वरं बाधते एवं स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत । तस्माच्चित्करणम् * । तस्माच्चकारः कर्तव्यः । अथेदित्करणं किमर्थम् । इदित्करणं नकारलोपाभावार्थम् * । इदित्करणं क्रियते । नकारलोपो मा भूदिति । अमंस्त अमंस्थाः । अनिदितां हल उपधायाः क्ङितीति । न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य । न चैतत्प्र-

---

सिज् भविष्यति अनिङ्भ्यस्तु क्स इति न कश्चिद्दोषः । आर्धधातुकसामान्य इति । अङ्प्रत्ययगतमार्धधातुकसामान्यं लुङ्विशेषितमाश्रयिष्यत इत्यर्थः । यदि तर्हि च्लिः प्रत्याख्यायते तदा मन्त्रा घसेति सिचो लुक्यादिः सिच इति स्वरः प्राप्नोति । नैष दोषः तत्र हि छन्दसि क्व चिदडाटोरुदात्तत्वेन भाव्यं क्व चित्तिङ्निघातेन । यत्र त्वडाटोः तिङ्निघातस्य च निषेधः प्रत्ययस्वरश्चेष्यते सविषयश्छन्दसि नास्ति । एतच्च भाष्यकारेण च्लेः प्रत्याख्यानाद्विज्ञायते । माहिलावीदित्यादौ तु सिच एव चित्त्वेनानन्यार्थेन चागमानुदात्तत्वं बाधिष्यतइति तदर्थोप्यनुबन्धासङ्गार्थे च्लिर्न कर्तव्यः ॥ ४४ ॥

च्लेः सिच् ॥ अग्निरिति सौ च परस्मैपदेषु चेति समुच्चयो विज्ञायेत तथा चात्रापि स्यात् । साविति च सिसुशब्दयोः साधारणो निर्देशः स्यात् । आगन्तुना चकारेण सकारो निर्दिश्येतेति भावः । न चात्रेति । पृथग्विभक्तिनिर्देशादङ्गाङ्गिभावोत्र न तु समुच्चय इति भावः । स्वरार्थ इति सिचोऽनच्कत्वे ऽपि चितस्सप्रकृतेरिति वचनाद् मा हि कार्ष्टामित्यादौ धातोरुदात्तार्थ इत्यर्थः । अनच्कोयमिति । मा हि कार्ष्टामित्यादावादिस्सिचोन्यतरस्यामिति पाक्षिकेणाद्युदात्तत्वेन भाव्यमिति चित्स्वरस्यायमविषय इति भावः । अर्थवत्त्विति । च्लेश्चित्करणस्य सामान्यग्रहणविघातार्थत्वान्मा हि लावीदित्यादौ स्थानिवद्भावप्राप्तं स्वरमागमानुदात्तत्वं बाधेत । तस्मादन्तोदात्तार्थं सिचश्चित्त्वमित्यर्थः । नैष दोष इति । सिचश्चित्करणानर्थक्यमिति य उक्तस्स नास्तीत्यर्थः । अत्र केचिदाहुः । प्रत्ययस्वरस्य द्वावपवादौ आगमानुदात्तत्वं

योजनमस्ति । किं कारणम् । यदयं हनः सिजिति हन्तेः सिचः कित्त्वं शास्ति तज्ज्ञापयत्याचार्यः न सिजन्तस्य नकारलोपो भवतीति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । सिच्येव नकारलोपो यथा स्यात् परस्मिन्निमित्ते मा भूदिति । कः पुनरत्र विशेषः । सिचि वा नलोपे सति परस्मिन्निमित्ते वा अयमस्ति विशेषः । सिचि नलोपे सति नलोपस्यासिद्धत्वादकारलोपो न भवति । परस्मिन् पुनर्निमित्ते सति अकारलोपः प्रसज्येत । समानाश्रयमसिद्धम् । व्याश्रयं तु सिद्धमेव । व्याश्रयं चेदम् । ननु च परस्मिन्नपि निमित्ते नकारलोपे सति अकारलोपो न भवति । कथम् । असिद्धं बहिरङ्गमन्तरङ्गइति तदेतद्धन्तेः सिचः कित्करणं ज्ञापकमेव न सिजन्तस्य नकारलोपो भवतीति । इदिद्वा स्थानिवत्त्वात् । अथाप्यनेनेदितार्थः स्यात् । इदितोयमादेशः स्थानिवद्भावादिदिद्भविष्यति । स्पृशमृशकृषतृपदृपां सिज्वा * । स्पृशमृशकृषतृपदृपां सिज् वेति वक्तव्यम् । स्पृश । अस्पृक्षद् अस्प्राक्षीत् । मृश । अमृक्षद् अम्राक्षीत् । कृष । अकृक्षद् अक्राक्षीत् । तृप । अतृपद् अत्राप्सीत् । दृप । अदृपद् अद्राप्सीत् । किं प्रयोजनम् । सिच् यथा स्यात् । अथ क्सः सिद्धः । सिद्धः कथम् । शल इगुपधादनिटः क्स इत्येव । सिजपि सिद्धः । कथम् । च्लेः चित्करणं प्रत्याख्यायते तत्र च्लावेव झलक्षणे ऽमागमे कृते विहतनिमित्तत्वात् क्सो न भविष्यति । यद्येवमन्यस्य सिजादयः प्राप्नुवन्ति । सिद्धं तु सिचो यादित्वात् । सिद्धमेतत् * । यादित्वात् । कथम् । यादिः सिच् करिष्यते । सोऽनेकाल् शित्सर्वस्येति सर्वादेशो भविष्यति । किं पुनर्न श्रूयते यकारः । लुप्तनिर्दिष्टो यकारः । चङ्ङोः कथम् । चङ्ङोः प्रश्लि-

---

यासुडित्यत्र ज्ञापितं तद्देशं चित्स्वरश्च षाष्ठिकस्तत्रापवादविप्रतिषेधाच्च चित्स्वर एव भविष्यति नार्थः सिचश्चित्त्वेनेति । नैतदस्ति । नहि प्रत्ययस्वरस्यैव तावपवादौ प्रकृत्यागमानामाद्युदात्तादीनां तदप्रसङ्गात् । कुण्डिनजादीनां च चिताम् । स्थानिवद्भावोयं च कार्यातिदेश इति परत्वमपि चित्स्वरस्य नास्त्यागमाद्युदात्तत्वेन चाविशेषात् सर्वः स्वरो बाध्यः । तस्मात्तद्बाधनार्थं सिचश्चित्त्वं कर्तव्यमिति स्थितम् । परस्मिन्निति । सिचः परं यत्सार्वधातुकं तस्मिन्नित्यर्थः । असिद्धमिति । बाह्यसार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गत्वादसिद्धत्वमित्यर्थः । आर्धधातुकोपदेशे यदकारान्तं तस्य लोप इत्येवं वा हन्तेरतो लोपो न भविष्यति । तथा चोच्यते । अवयवलोपिनामतो लोपो नास्तीति । स्पृशेति । त्रिभ्यः क्से प्राप्ते द्वाभ्यां पुषादिङि पक्षे सिज्विधीयते । च्लेश्चित्करणमिति । ततश्च प्रयोजनाभावाच्चकारस्येत्संज्ञा नास्तीति च्लौ झलादौ पक्षे ऽमागमे कृते सिच् । अमभावपक्षे तु क्स इति त्रयाणां ग्रहणं न कार्यमित्यर्थः । अन्यस्येति । अन्यग्रहणमुपलक्षणं चङादयो ह्यादेः परस्य प्राप्नुवन्ति । चिणो नित्यादिति ।

ष्टनिर्देशात्सिद्धम्। चङ्ङोरपि प्रश्लिष्टनिर्देशोयम् । च अङ् चङ् अ अङ् अङ् सोनेकाल् शित्सर्वस्येति सर्वादेशो भविष्यति । चिणः कथम् । चिणोनित्त्वात् । चिणः चकारस्य अनित्वात्सिद्धम् । किमिदमनित्त्वादिति । अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपे अनेकाल् । यदानेकाल् तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययः तदेत्संज्ञा । यदेत्संज्ञा । तदा लोपः । एष च तत्र वार्तिककारस्य निर्णयः स प्रयोजनं चित्करणमिति । आपि च त्रैशब्द्यं न प्रकल्प्यते अस्पृक्षत् अस्प्राक्षीत् अस्पार्क्षीदिति । सिचि पुनः सति विभाषा सिच् । सिच्यपि झल्लक्षणोमागमो विभाषा । यस्य खल्वपि अमा अङो निमित्तं न विहन्यते स स्यादेव । तस्मात् सुष्ठूच्यते स्पृशमृशकृषतृपदृपां सिज्वेति ॥

शल इगुपधादनिटः क्सः ॥ ४५ ॥ क्सविधान इगुपधाभावः च्लेर्गुणानिमित्तत्वात् * । क्सविधाने इगुपधत्वस्याभावः । किं कारणम् च्लेर्गुणनिमित्तत्वात् । च्लिर्गुणस्य निमित्तम् । तत्र च्लावेव गुणे कृते इगुपधादिति क्सो न प्राप्नोति । न वा क्सस्यानवकाशत्वादपवादो गुणस्य * न वा एष दोषः । किं कारणम् । क्सस्यानवकाशत्वात् । अनवकाशः क्सो गुणं बाधिष्यते । अनिड्वचनमविशेषणं च्लेर्नित्यादिष्टत्वात् * । अनिड्वचनमविशेषणम् । किं कारणम् । च्लेर्नित्यादिष्टत्वात् । नित्यादिष्टः च्लिः न क्व चित् श्रूयते । तत्र च्लेरनिट इति क्सो न प्राप्नोति । न वा क्सस्य सिजपवादत्वात् तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः * । न वैष दोषः । किं कारणम् । क्सस्य सिजपवादत्वात् ।

---

चिण् भावकर्मणोरित्यत्र धातुग्रहणं नापेक्ष्यतइति आदेः परस्येति न भविष्यति पदेर्दीपादिभ्यश्चादेः परस्येति प्राप्नोति । तस्माद्विहितविशेषणाश्रयेण परिहर्तव्यम् । स प्रयोजनमिति । सामान्यग्रहणाविघातार्थत्वस्योक्तत्वात् । सति च प्रयोजने चकारस्येत्संज्ञया भाव्यं लकारश्च हल् न भवतीत्यमोभावात् क्स एव प्रसज्येतेत्यर्थः । यस्य खल्वपीति । पुषाद्यङस्साहि कृते ऽप्यमागमे प्रवर्तते ॥ ४४ ॥

शलइगु ॥ क्सविधान इति । विशेषणासंभवाल्लक्षणदोषमुद्भावयति । भूतपूर्वगत्याश्रये विहितविशेषणाश्रये वा लक्ष्यासिद्धिः । कित्करणं तु क्सस्याचीति विशेषणार्थं दृत्सा इत्यादौ लोपनिवृत्तये स्यात् न वा क्सस्येति । भूतपूर्वगत्याश्रये कित्त्वमनर्थकं स्यादिति सानुबन्धकं रूपमनवकाशमित्यपवादत्वाद् गुणस्य बाधकमित्यर्थः । न च क्सस्याचीति विशेषणार्थं कित्त्वम् । प्रत्ययत्वादर्थवत्त्वाच्चास्यैव क्सस्य तत्र ग्रहणस्य सिद्धत्वादुणादीनामव्युत्पन्नत्वद्वत्सा इत्यादौ प्रसङ्गाभावात् अनिड्वचनमिति । अनिट इत्येतत् च्लेर्विशेषणं यथा स्यादिति च्लिरुत्सर्गः कृत इत्युक्तं तत्रास्य सिचा नित्यं भाव्यमितीडभावोपलक्षितमस्य रूपं न क्व चिद्विद्यतइति च्लेरनिट इति विशेषणस्या-

सिजपवादः क्सः। स चानिडाश्रयः। न चापवादविषयमुत्सर्गोभिनिविशते। पूर्वं ह्यपवादाः प्रवर्तन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयमुत्सर्गोभिनिविशते तत्र तावदत्र कदा चित् सिज् भवति । क्समपवादं प्रतीक्षते । क्सस्य सिजपवादत्वात्तस्य चानिडाश्रयत्वाद् अनिट् प्रसिद्धः। अनिटि प्रसिद्धे क्साविधिः * । अनिटि प्रसिद्धे क्सो भविष्यति । सिजिदानीं क्व भविष्यति। शेषे सिज्विधानम् * । शेषे सिज्विधानं भविष्यति अक्रोषीद् अमोषीद् इति ॥

**श्लिष आलिङ्गने ॥ ४६ ॥** किमर्थमिदमुच्यते । नियमार्थोयमारम्भः। श्लिष आलिङ्गनएव क्सो यथा स्यात्। इह मा भूत् उपाश्लिषद् जतु काष्ठं च समाश्लिषद् ब्राह्मणकुलमिति। अत उत्तरं पठति । श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् * । श्लिष आलिङ्गनइति नियमस्यानुपपत्तिः किं कारणम्। विधेयभावात्। कैमर्थक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा। इह चास्ति। विधेयम्। किम्। पुषादिपाठादङ् प्राप्तः तद्बाधनार्थः क्सो विधेयः। तत्रापूर्वो विधिरस्तु नियमो वेति। अपूर्व एव विधिः स्यान्न नियमः। किं च स्याद्, यदायं नियमो न स्यात्। आत्मनेपदेष्वालिङ्गने ऽनालिङ्गने च क्सः प्रसज्येत। यथैव क्सोऽङं बाधते एवं चिणमपि बाधेत। उपाश्लेषि कन्या देवदत्तेनेति। सिद्धं तु श्लिष आलिङ्गने ऽचिण्विषये * । सिद्धमेतत् । कथम् । श्लिष आलिङ्गने अचिण्विषये क्सो भवतीति वक्तव्यम् । अङ्विधाने च श्लिषो नालिङ्गने * । अङ्विधाने च श्लिषो नालिङ्गने इति वक्तव्यम् । सिध्यति। सूत्रं तर्हि भिद्यते। यथा न्यासमेवास्तु। ननु चोक्तं श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावादिति। नैष दोषः। योगविभागात्सिद्धम् * । योगविभागः करि·

---

प्रसिद्धिरित्यर्थः। न वा क्सस्येति। अयं भावः। लिह लित् इति स्थिते सिचा न भाव्यं क्सस्यायं विषय इति क्सेनापि न तावद्भाव्यं यावदस्यानिट्त्वं न ज्ञातम्। तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधादनिट्त्वमस्तीति क्सः सिद्धः। अलिक्षदिति। यत्र त्विटः प्रतिषेधो नास्ति तत्र सिजेव भवत्यकोषीदिति ॥ ४५ ॥

श्लिष आ ॥ किमर्थमिति। किं पुषादिपाठादङि प्राप्ते तद्बाधनाय विध्यर्थमिदमथ पूर्वेण क्से सिद्धे नियमार्थमिति प्रश्नः । इतरो वक्ष्यमाणयोगविभागं मनसि कृत्वाह नियमार्थमिति। उपाश्लिषदिति। प्रत्यासत्त्यावत्र श्लिषिर्वर्तते नालिङ्गेन । अङ् प्राप्त इति। श्लिषेर्नाप्राप्ते अङि क्यस्यारम्भाद् बाधकत्वमित्यर्थः । यथैवेति । विध्यर्थत्वे दोषान्तरोद्भावनम्। सिद्धं त्विति । पूर्वेण क्से सिद्धे नियमार्थमेतद्वचनं कर्तव्यम्। अचिण्विषय इति । अनेन नियमार्थत्वं समर्थ्यते । अन्यथा चिण्बाधनाय तद्विषये विध्यर्थमेतत् स्याद् न तु नियमार्थम्। अङ्विधान इति । ततश्चालिङ्गनेऽङ्प्रतिषेधाच्छ्लिष आलिङ्गने ऽचिण्विषय इति नियमार्थं भवत्यन्यथा विध्यर्थमेतत् स्यात्।

च्यते । श्लिषः । श्लिषः क्सो भवति । किमर्थमिदम् । पुषादिपाठादङ् प्राप्नोति तद्बाधनार्थम् । तत आलिङ्गने । आलिङ्गने च श्लिषः क्सो भवति । इदमिदानीं किमर्थं स्यात् । नियमार्थम् । श्लिष आलिङ्गने एव । क मा भूत् । उपाश्लिषज्जतु च काष्ठं च । समाश्लिषद् ब्राह्मणकुलमिति । यदप्युच्यते । यथैव च क्सोऽङं बाधत एवं चिणमपि बाधेतेति । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्येवं क्सो ऽङं बाधिष्यते न चिणम् । अथ वा तत्र वक्ष्यति चिणित्यनुवर्तमाने पुनश्चिण्ग्रहणस्य प्रयोजनं चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति । श्लिष आलिङ्गने ॥

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४८ ॥** णिश्रिद्रुस्रुषु कमेरुपसंख्यानम् *। णिश्रिद्रुस्रुषु कमेरुपसंख्यानं कर्तव्यम् । नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः । अथ पत्काषिणो यान्ति येचीकमतभाषिणः ॥ कर्मकर्तरि च *। कर्मकर्तरि चोपसंख्यानं कर्तव्यम् । कारयति कटं देवदत्तः अचीकरत कटः स्वयमेव । उच्छ्रयति कटं देवदत्तः उदशिश्रियत कटः स्वयमेवेति । न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम् *। न वा कर्तव्यम् । किं कारणम् । कर्मण्यविधानात् । नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत । कर्तृत्वाच्च कर्मकर्तुः सिद्धम् *। अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति । ननु चायं कर्मणि विधीयते चिण् भावकर्मणोरिति । प्रतिषिध्यते तत्र यक्चिणौ । यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानमिति । यस्तर्हि न हेतुमण्णिच् उदपुपुच्छत गौः स्वय-

---

श्लिषः क्स इति । श्लिष इत्यत्रानिट इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाभावः । सानुबन्धकत्वाद्वा । तत्र पुषादित्वादनुमितोऽङ् प्रत्यक्षशिष्टेन क्सेन बाध्यते । अथ वेति । समुदायापेक्षायां पुरस्तादपवादा इति परिभाषा नास्तीति परिहारान्तरोपन्यासः ॥४६॥

णिश्रिद्रु ॥ कमेरिति । आर्धधातुके विकल्पेन णिङो विधानादणिङ्पक्षे सिचि प्राप्ते वचनम् । तत्राचकमतेति भवति । णिङ्पक्षे तु सन्वद्भावादचीकमतेति सन्वल्लघुनि चङीति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिराश्रीयते अन्यस्यासंभवात्तेन चङ्परे णौ यल्लघु धात्वक्षरं तत्र परतो ऽभ्यासस्य सनीव कार्यं भवतीत्यर्थः । नाकमिष्टसुखमिति । नाकं स्वर्गमिष्टं सुखं यान्ति सुयुक्तैर्वडवारथैः कमेर्लुङि किं रूपं भवतीति पृष्टैरचकमतेत्युक्तम् । यैस्त्वचीकमतेत्युक्तं ते पत्काषिणो यान्ति लक्षणास्मरणाच्छिन्दार्थवादोयं लक्षणस्मरणादरार्थः । अन्ये त्वाहुः । अकमिष्टेति यैरुक्तं तएवोपचारादकमिष्टशब्देनानुकरणशब्देनोच्यन्ते । अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वाद्विभक्तिर्न कृता । ते सुयुक्तैरपि वडवारथैर्गच्छन्तः सुखं न प्राप्नुवन्ति अपशब्दोच्चारणात् । ये त्वचीकमतभाषिणस्ते पत्काषिणोऽपि सुखं यान्तीति । कर्मकर्तरि चेति । कर्तर्युच्यमानश्चङ् कर्मकर्तरि प्राप्नोतीति वचनम् । उदपुपुच्छतेति पुच्छमुदस्यति उत्पुच्छयते गौस्तत्र यदान्तर्भावितण्यर्थत्वादस्य गवा सकर्मकत्वं भवति तदोत्पु-

मेवेति। अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन। यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानं कर्तव्यमिति॥

अस्यतिवक्तिख्यातिभ्याङ् ॥५२॥ अस्यतिग्रहणं किमर्थम्। अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वात् *। अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम्। किमुच्यते आत्मनेपदार्थमिति नपुनः परस्मैपदार्थमपि स्यात्। पुषादित्वात्। पुषादिपाठात् परस्मैपदेष्वङ् भविष्यति। कर्मकर्तरि च *। कर्मकर्तरि चोपसंख्यानं कर्तव्यम्। पर्यास्थेतां कुण्डले स्वयमेव। अत्रापि न वा कर्मण्यविधानात् कर्तृत्वाच्च कर्मकर्तुः सिद्धमित्येव॥

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥ इदं ग्लुचिग्रहणं ग्लुञ्चिग्रहणं च क्रियते। अन्यतरच्छक्यमकर्तुम्। यदि तावद् ग्लुचिग्रहणं क्रियते। ग्लुञ्चिग्रहणं न करिष्यते। तेनैव सिद्धं न्यग्लुचद् न्यग्लोचीत्। इदमिदानीं ग्लुञ्चेरूपं न्यग्लुञ्चीत्। अथ ग्लुञ्चिग्रहणं क्रियते ग्लुचिग्रहणं न करिष्यते तेनैव सिद्धं न्यग्लुचद् न्यग्लुञ्चीद्। इदमिदानीं ग्लुचेरूपं न्यग्लोचीदिति॥

चिण् ते पदः ॥६०॥ अयं तशब्दोऽस्त्येवात्मनेपदमस्ति परस्मैपदमस्त्येवैकवचनमस्ति बहुवचनम्। कस्येदं ग्रहणम्। यः पदेरस्ति। कश्च पदेरस्ति। पदिरयमात्मनेपदी॥

चिण् भावकर्मणोः ॥ ६६ ॥ चिणिति वर्तमाने पुनश्चिण्ग्रहणं किमर्थम्। नेत्येवं तदभूद् विध्यर्थमिदम्। अथ वा वेत्येवं तदभूद् नित्यार्थमिदम् अथ वा णिचिति वर्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनं चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्माभूत्॥

सार्वधातुके यक् ॥ ६७ ॥ इह पश्यामः कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते पच्येते ओदनौ पच्यन्ते ओदना इति। भावे पुनः एकवचनमेव। आस्यते

---

च्छ्यते गामिति भवति। पुनर्गौरेव यदा सौकर्यातिशयेन कर्तृत्वं विवक्ष्यते भूतकालश्च तदैतदुदाहरणम्॥ ४८॥

अस्यति॥ पुषादय आगणान्ताद् अन्तराले वृत्करणं रधादिसमाप्त्यर्थं न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह अस्यतिग्रहणमिति। अत्रापीति। आतिदेशिकस्य कर्मकार्यस्य कस्य चिदत्राविधानात् स्वाश्रयं कार्यं प्रतिबन्धकाभावात् प्रवर्ततएवेति भावः॥ ५२॥

जॄस्तम्भु॥ अन्यतरदिति। अनेकार्थत्वाद्धातूनामत्र विषयभेदो न प्रयोजक उभयोपादानस्येति भावः। यत्तूभयोपादानसामर्थ्याद् ग्लुञ्चेरङि नलोपो न भवति न्यग्लुञ्चदिति। कैश्चिदभ्यधायि तद्भाष्यविरोधादनादरणीयम्॥ ५८॥

चिण्भाव॥ नेत्येवमिति। प्रतिषेधसंबद्धं तदभूदित्यर्थः। नन्वत्र प्राप्त्यभावान्नेति नापेक्षिष्यतइत्याह अथ वेति। विकल्पोऽपि पूर्वमेव निषेधेन निवर्तितत्वान्नापेक्षिष्यतइत्याह अथ वेति। तेनोपाश्लेषीति क्सो न भवति॥ ६६॥

सार्वधा॥ इह पश्याम इति। वक्ष्यमाणस्य वाक्यार्थस्य दृशिक्रियायां कर्मत्वं यथा पश्य मृगो धावतीति मृगकर्तृकायाः स्मरणक्रियायाः। केनैतदिति। इह क्रियाप्रश्नः

भवता आस्यते भवद्भ्याम् आस्यते भवद्भिरिति । केनैतदेवं भवति । कर्मानेकं तस्यानेकत्वाद् द्विवचनबहुवचनानि भवन्ति । भावः पुनरेक एव । कथं तर्हि इह द्विवचनबहुवचनानि भवन्ति पाकौ पाका इति । आश्रयभेदात् । यदसौ द्रव्यं श्रितो भवति भावस्तस्य भेदाद् द्विवचनबहुवचनानि भवन्ति । इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति सर्वे ते तस्या आश्रयभूता भवन्ति तद्भेदाद् द्विवचनबहुवचनानि प्राप्नुवन्ति । एवं तर्हि इदं तावदयं प्रष्टव्यः किमभिसमीक्ष्यैतत्-प्रयुज्यते पाकौ पाका इति । यदि तावत्पाकविशेषानाभिसमीक्ष्य यश्चौदनस्य पाकः यश्च गुणस्य यश्च तिलानां बहवस्ते शब्दाः सरूपाश्च । तत्र युक्तं बहुवचनमेकशेषश्च । तिङभिहिते चापि तथाभावे बहुवचनं श्रूयते । तद्यथा । उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्तइति । अथ कालविशेषानभिसमीक्ष्य यश्चाद्यतनः पाको यश्च ह्यस्तनः यश्च श्वस्तनस्तोपि बहवः शब्दाः सरूपाश्च । तत्र युक्तं बहुवचनमेकशेषश्च । तिङभिहिते चापि तथा भावे ऽसारूप्यादेकशेषो न भवति । आसि आस्यते आसिष्यते इति । अस्ति खल्वपि विशेषः तिङभिहितस्य भावस्य कृदभिहितस्य च । कृदभिहितो भावो द्रव्यवद्भवति किमिदं द्रव्यवदिति । द्रव्यं

---

माख्यातं सा च क्रिया साध्यरूपत्वान्निवृत्तभेदा । तदुक्तम् । निवृत्तभेदा सर्वैव क्रियाख्यातेभिधीयते । श्रुतेरशक्याभेदानां प्रविभागप्रकल्पनेति ॥ तत्र यथा साधनभेदात्कर्तृकर्माभिधायिनि लकारे द्विवचनबहुवचने भवतस्तथा भावाभिधायिन्यपि प्रसजतः । अथैकपदवाच्यसाधनसंख्याश्रये द्विवचनबहुवचने भवत इति पक्षस्तदा पाकौ पाका इत्यत्र न प्राप्नुतः साधनस्य घञा अनभिधानादिति प्रश्नः । कर्मानेकमिति । कर्मशक्त्याधारो द्रव्यमनेकं शक्तिशक्तिमतोश्च शब्देन भेदो न प्रतिपाद्यतइति शक्त्यभिधायिनाप्याख्यातेनौदनः पच्यतइति शक्तिमद्द्रव्यवाचिन ओदनशब्दस्य सामानाधिकरण्यं भवति । भावः पुनरिति । भेदाभावलक्षणमभेदैकत्वं भावस्य । नत्वेकत्वसंख्याख्यातवाच्यस्य भावस्यास्ति । तस्य द्रव्यधर्मत्वादसत्त्वभूतत्वाच्चाख्यातवाच्यस्य भावस्य । आश्रयभेदादिति । गुडतिलौदनादीनामाश्रयाणां भेदादाश्रितोपि पाको भिद्यते । घञादिभिश्च सत्त्वरूपोर्थोभिधीयतइति द्रव्यधर्मसंख्याभेदाश्रयो वचनभेदो न विरुध्यतइति भावः । इहापीति । आख्यातवाच्यस्यापि भावस्याश्रयभेदाद्भेदोस्तु ततश्च वचनभेदप्रसङ्ग इत्यर्थः । पाकविशेषानिति । के चित्पाकशब्दं कर्मसाधनं व्याचक्षते । पक्तव्यविशेषान् गुडादीनित्यर्थः तदयुक्तम् । असंज्ञायां कर्मणि घञो दुर्लभत्वात् । तस्मादाश्रयप्रकारादिभेदाभिन्नान् पाकविशेषानित्यत्रायमर्थः । अथ वा संज्ञाग्रहणस्य प्रत्याख्यातत्वादसंज्ञायामपि कर्मणि घञ् भवति । उष्ट्रासिका आस्यन्ते इति । अत्राश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तान्यासनानि भिन्नानि तत्सामानाधिकरण्याच्चाख्यातवाच्यभावभेदादास्यन्त इति बहुवचनमित्यर्थः । इवशब्दप्रयोगमन्तरेणापि चेवार्थगतिर्भवति । तदयमर्थः । यादृशान्युष्ट्राणामनेकप्रकाराण्यासनानि तादृशानि देवदत्तादिभिः क्रियन्तइति । भवद्भिरास्यतइत्यत्राश्रयभेदादाश्रितभेदस्य

क्रियया समवायं गच्छाति । कं समवायं गच्छाति । द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति । तद्वच्चास्य भावस्य कृदभिहितस्य भवाति पाको वर्तत इति । क्रियावन्न भवति । किमिदं क्रियावादीति । क्रिया क्रियया समवायं न गच्छाति पचति पठतीति । तद्वच्चास्य कृदाभिहितस्य न भवाति पाको वर्ततइाति । अस्ति खल्वापि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च । तिङभिहितेन भावेन कालपुरुषोपग्रहा अभिव्यज्यन्ते कृदभिहितेन पुनर्न व्यज्यन्ते । अस्ति खल्वपि विशेषः तिङभिहितस्य भावस्य कृदभिहितस्य च । तिङभिहितो भावः कर्त्रा संप्रयुज्यते कृदभिहितः पुनर्न संप्रयुज्यते । यावता किं चिच्च सामान्यं कश्चिच्च विशेषः । युक्तं यदयमपि विशेषः स्याद् लिङ्गकृतः संख्याकृतश्च । इदं विचार्यते ।

---

प्रतिपन्नत्वात् प्रयोजनाभावाद्भावो भेदं नोपादत्तइत्येकवचनमेव भवति । यथा ताम्रः पलाशेषु बभूव राग इति न च सर्वत्राश्रयभेदादाश्रितभेदस्य प्रतीतिः घटान् पचतीत्यादौ पाकस्याभिन्नस्यैवावगमात् केचिदुष्ट्रासिका आस्यन्तइति कर्मणि लकारमिच्छन्ति । उष्ट्रासिकालक्षणस्य भावस्य कर्मत्वाद् यथा गोदोहस्सुप्यतइाति । एवं तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेपि लविधाने बहुवचनमुपपादितम् । तेपि बहव इति । भिन्नकालत्वादेवेति भावः । तत्र युक्तमिति । शास्त्रेणैकशेषे सत्येकस्यानेकार्थाभिधायित्वाद् अन्तरेण वैकशेषारम्भं सरूपाणामेकस्यैव स्वभावतोनेकार्थत्वादिति भावः । तिङभिहितइाति । नह्येकं तिङन्तमनेककालभावप्रत्यायने समर्थं किंचिदस्तीति भिन्नकालासन्नक्रियाप्रत्यायनाय भिन्ना एव शब्दाः प्रयुज्यन्तइति भावः । द्रव्यवदिति । द्रव्यत्वेन प्रसिद्धो यो घटादिस्तद्वदयं भावो भवति । लिङ्गसंख्यासाधनसंबन्धप्रतिपत्त्या । तत्र वस्तूपलक्षणं यत्रेति द्रव्यलक्षणायोगेपि प्रसिद्ध्यप्रसिद्ध्यपेक्ष उपमानोपमेयभावः । क्रिया क्रिययेति । ननु भवाति पचति पश्य मृगो धावतीति कर्तृकर्मभावेन क्रिया क्रियया संबध्यतएव । एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विवक्षितम् । ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्तृभावः । विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसंबन्धसंभवाददोषः । तदुक्तं हरिणा । यत्र यं प्रतिसाध्यत्वमसिद्धा तं प्रति क्रिया । सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ॥ मृगो धावति पश्येति साध्यसाधनरूपता । तथा विषयभेदेन सरणस्योपपद्यतइाति तत्र कर्तृकर्मत्वमाख्यातवाच्यस्य भावस्य न विरुद्धम् । तथा हि । भवतिक्रियापेक्षमेव तस्य कर्तृत्वं सर्वश्चार्थः स्वेन रूपेण भवतीति भवने कर्तृत्वमुपपन्नमेवं कर्मापि क्रियाफलत्वात् प्रधानमिति कर्मत्वमपि तस्योपपद्यते । करणत्वादीनि तु सर्वात्मना गुणभावमन्तरेण नोपपद्यन्तइाति प्राधान्येनात्यन्ताविरोधात्तस्य नोपपद्यन्ते । कालेति । पुरुषशब्देन तदर्थः प्रत्यक्त्वापरभावश्चोच्यते । उपग्रहोनेकप्रकारः स्वार्थपरार्थत्वादिकः । कृदभिहितइाति । ननु कृदभिहितस्यापि भावस्य भवति कर्त्रा योगः यथा ब्राह्मणानां प्रादुर्भाव इति । तत्राहुः । एकपदवाच्येन कर्त्रा न युज्यते यथा पचतीति कर्ता वाच्यो नैवं पाक इति । शुद्धस्यैव भावस्य प्रत्यायनात् । अथ वा घञादिभिः सिद्धरूपता भावस्याभिधीयतइाति तेन रूपेण कर्त्रा योगाभावो धातु-

भावकर्मकर्तारः सार्वधातुकार्था वा स्युः विकरणार्था वेति । कथं च सार्वधातुकार्थाः स्युः कथं वा विकरणार्थाः । भावकर्मवाचिनि सार्वधातुके यक् भवति कर्तृवाचिनि सार्वधातुके शब् भवतीति सार्वधातुकार्थाः । भावकर्मणोर्यक् भवति सार्वधातुके कर्तरि शब् भवति सार्वधातुक इति विकरणार्थाः । कश्चात्र विशेषः । भावकर्मकर्तारः सार्वधातुकार्थाश्चेदेकाद्विबहुषु नियमानुपपत्तिरतदर्थत्वात् * । भावकर्मकर्तारः सार्वधातुकार्थाश्चेद् एकद्विबहुषु नियमस्यानुपपत्तिः किं कारणम् । अतदर्थत्वात् । न हीदानीमेकत्वादय एव विभक्त्यर्थाः । किं तर्हि । भावकर्मकर्तारोपि । सन्तु तर्हि विकरणार्थाः । विकरणार्था इति चेत् कृताभिहिते विकरणभावः * । विकरणार्था इति चेत् कृताभिहिते विकरणो न प्राप्नोति धारयः पारय इति । किमुच्यते कृताभिहित इति । न लेनाप्यभिधानं भवति । न शक्यं लेनाभिधानमाश्रयितुम् । पक्षान्तरमिदमास्थितं भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वेति । यदि च लेनाप्यभिधानं स्याद् नेदं पक्षान्तरं स्यात् । कथमशक्यम् । यदा भवानेवाह लः कर्मणि च भावे चाकर्मकेभ्य इति । एवं वक्ष्यामि लः कर्मणो भावाच्चाकर्मकेभ्य इति । यस्मिंस्तर्हि ले विकरणा न श्रूयन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति । क्व च न श्रूयन्ते । य एते

---

रूपप्रतिपाद्यया तु साध्यतया कर्त्रा योगो भवति । अथ वोपलक्षणभावेन भावः कर्त्रा युज्यते कृत्सु पाचक इति । तिङ्षु तु पचतीति साध्यमानतया प्राधान्येन । तत्र कृत्सु प्राधान्येन । कर्त्रा योगो नास्तीत्ययमत्रार्थः । इदं विचार्यतइति । विचरति नानागच्छति यद्वस्तु तद्विचार्यते नानात्वं नीयतइत्यर्थः । इहान्वयव्यतिरेकाश्रया शास्त्रीया पदावयवानामावापोद्धारिकयर्थवत्ता । तौ चान्वयव्यतिरेकावेकतरस्यापि न व्यवतिष्ठते । सार्वधातुकमन्तरेणापि कर्त्राद्यवगमाद् । यथा गच्छ ग्रामशायि भवता अकारि कट इति तथा विकारणाभावे अकर्त्राद्यवगतिरास्ति । लविषष्टि क्षेत्रमिति । उभयाभावेप्यस्ति अजा गर्भवानिति । क्वचित्तूभयसंनिधौ कर्त्राद्यवगतिः पचति पच्यतइति । तत्र निश्चयाभावाद्विचारः क्रियते कः पक्ष आश्रीयमाणः शास्त्रं न विरुणद्धीति । एकद्विबहुष्विति । एकत्व एवैकवचनं नार्थान्तर इति यो नियमः स नोपपद्यते कर्त्रादीनामपि तदर्थत्वादित्यर्थः । अतदर्थत्वादिति । सामर्थ्यादत्रावधारणमाश्रीयते न तान्येवैकत्वादीन्यर्थः । अपि तु कर्त्रादयोपीत्यर्थः । कृताभिहित इति । क्व चिदेव कृति विकरणो विधीयते न सर्वत्रेति कृत एव कर्तरि कृदिति कर्तार्थो निर्दिश्यते तेनैव च कर्तुरुक्तत्वात्तदभिधायी विकरणो न प्राप्नोति ततश्च धारय इत्यादावसति शपि गुणो न स्यात् । न लेनापीति । लः कर्माणि चेति वचनाल्लादेशैरपि कर्त्रादेरभिधानमिति तत्रापि विकरणाप्राप्तिः किं न चोद्यत इत्यर्थः । ततो लः कर्मणीति वचनात्कर्त्रादीनां विकरणार्थत्वं नैव संभवतीत्युक्तं भवति । एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । तत्र कर्माभिधायी विकरणः कर्मशब्देन भाष्य उक्तः । ननु सार्वधातुकनिमित्तो विकरणो न तु

लुग्विकरणाः श्लुविकरणाश्च। अत्राप्युक्ते कर्तृत्वे लुग्भविष्यति। यस्मिंस्तर्हि ले विकरणा नैवोत्पद्यन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति। क्व च नैवोत्पद्यन्ते, लिङ्लिटोः। तस्मान्नैवं शक्यं वक्तुं न लेनाप्यभिधानं भवतीति। भवति चेदभिहिते विकरणाभाव इत्येव एवं तर्हीदं स्यात्। यदा भावकर्मणोर्लः। तदा कर्तरि विकरणाः, यदा कर्तरि लः तदा भावकर्मणोर्विकरणाः। इदमस्य यद्येव स्वाभाविकमथापि वाचानिकं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति। न चास्ति संभवो यदेकस्याः प्रकृतेर्द्वयोर्नानार्थयोर्युगपदनुसहायीभावः स्यात्। एवं च कृत्वा एकपक्षीभूतमेवेदं भवति सार्वधातुकार्था एवेति। ननु चोक्तं भावकर्मकर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वाद् इति। नैष दोषः। सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्। सुपां तिङां च संख्या चैवार्थः कर्मादयश्च। प्रसिद्धो नियमस्तत्र। प्रसिद्धस्तत्र नियमः नियमः प्रकृतेषु वा। अथ वा प्रकृताननर्थानपेक्ष्य नियमः। के च प्रकृताः एकत्वादयः। एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु। द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति। भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम् *। भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानं कर्तव्यम्। पच्यते ओदनः स्वयमेव। पठ्यते विद्या स्वयमेव। किं

---

विकरणनिमित्तो लकारः तत्कथमेवं व्याख्यायते। एवं तर्हि कृते लकारे सार्वधातुक इति विषयसप्तम्याश्रयणात् कृते विकरणे लः कर्मणि चेत्यनेन भावकर्मकर्त्रभिधायिनो विकरणात्परो लः साधु भवतीति व्याख्यानाददोषः। अत्राप्युक्त इति। विकरणलोपद्वारेण प्रकृतिरेव तत्र कर्त्राद्यभिधायिनीति प्रतिज्ञातं भवतीत्यर्थः। यस्मिंस्तर्हीति। ततश्च विकरणानुत्पादाल्लादेशस्यासाधुत्वप्रसङ्गो विधानसामर्थ्याद्वा साधुत्वे भावाद्यर्थावगतिर्न स्यात्। कर्तरि कृदिति वचनात्कर्तर्येव लकारः स्यादित्यर्थः। भवति चेदिति। ततश्च विकरणार्थत्वोनुपपन्न एवेति भावः। एवं तर्हीति। प्रकारान्तरेण विकरणार्थत्वपक्षं समर्थयते। यथा ग्रामं गच्छतीति गमिक्रियायाः कर्तृकर्मणी साधने। तत्र कर्तरि लकारः कर्मणि द्वितीया। तथात्राप्येकस्मिन्नर्थे सार्वधातुकमपरस्मिन्विकरणो भविष्यतीति भावः। इदमस्येति। अयमर्थः। यत्र पदद्वयवाच्ये कर्तृकर्मणी साधने तत्र विरोधाभावात्तन्निबन्धनः कार्यभेदो युक्तः। एकस्मिंस्तु पदे विरुद्धयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने साहायकाभावात्परस्परानुपकारादप्रयोग एव स्यात्। तथा हि पचतीति क्रियाविशिष्टः कर्ताभिधीयते। पच्यते इति क्रियाविशिष्टं कर्म। न त्वेकेन साधनद्वयं क्रियाविशिष्टं प्रतिपादयितुं शक्यते। एकपक्षीभूतमिति। एक एव पक्षः सार्वधातुकार्थाः कर्मादय इत्यर्थः। पूर्वभेदाभेदश्च च्विप्रत्ययनिर्देशः। प्रसिद्धो नियम इति। अर्थनियम इत्यर्थः। कर्माद्यर्थान्तरनिर्देशात्तु न प्रत्ययनियमः प्रमाणसिद्धः। तत्रैकत्व एकवचनमेवेत्येवमेकत्वादिरर्थो नियम्यते। न तु प्रत्यय इति तस्यार्थान्तरमपि कर्मादि न विरुध्यते। अथ वेति। कर्माद्यर्थविधानसामर्थ्यात्तुल्यजातीयसंख्यापक्ष एव नियम इत्यर्थः। कर्मकर्तरीति। कर्मवदित्यतिदेशेन स्वाश्र-

पुनः कारणं न सिध्यति । विप्रतिषेधाद्धि शपो बलीयस्त्वम् * । विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति । शपोऽवकाशः । पचति पठति । यकोऽवकाशः । पच्यते ओदनो देवदत्तेन पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति पच्यते ओदनः स्वयमेव पठ्यते विद्या स्वयमेवेति । परत्वात् शप् प्राप्नोति । योगविभागात् सिद्धम् । योग विभागः करिष्यते । चिण्भावकर्मणोः । ततः सार्वधातुके यक् । भावकर्मणोः । ततः कर्तरि । कर्तरि च यक् भवति भावकर्मणोः । यथैव तर्हि कर्मणि कर्तरि यक् भवति । एवं भावेऽपि कर्तरि यग् प्राप्नोति । एति जीवन्तमानन्दो नरं वर्षशतादपि । नास्य किं चिद्रुजति रोग इति । द्वितीयो योगविभागः करिष्यते । चिण् भावे । ततः कर्मणि । कर्मणि च चिण् भवतीति । ततः सार्वधातुके यक् सार्वधातुके यक् भवति भावे कर्मणि च ततः कर्तरि । कर्तरि च यग्भवति कर्मणीत्यनुवर्तते भावइति निवृत्तम् । ततः शप् । शप् च भवति कर्तरीत्येव । कर्मणीति निवृत्तम् । एवमप्युपसंख्यानं कर्तव्यम् । विप्रतिषेधाद्धि श्यनो बलीयस्त्वम् * । विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति । श्यनोऽवकाशः दीव्यति सीव्यतीति । यकोऽवकाशः पच्यते ओदनो देवदत्तेन पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति । दीव्यते स्वयमेव सीव्यते स्वयमेवेति । परत्वात् श्यन् प्राप्नोति । ननु चैतदपि योगविभागेनैव सिद्धम् । न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या निवारयितुम् । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । परा प्राप्तिरप्रतिसिद्धा तया श्यन् प्राप्नोति । ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत । नोत्सहते प्रतिसिद्धा सती बाधितुम् । एवं तर्हि शबादेशाः श्यन्नादयः करिष्यन्ते । शप् च यका बाध्यते तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यन्नादयः । तत्तर्हि शपो ग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । कर्तरि शबिति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः विहितः प्रत्ययः प्रकृतश्चानुवर्तते । अथ वा भावकर्मणोरित्यननुवृत्त्यैव सिद्धे सत्यनुवृत्तिर्यकोऽभावाय । इह सार्वधातुके यगिति अन्तरेण भावकर्मणोरित्य-

---

यस्य कार्यस्याबाधनात्कर्त्राश्रयविकरणप्राप्तौ वचनम् । विप्रतिषेधादिति । यदा शास्त्रातिदेशपक्षस्तदा शपो बलीयस्त्वम् । कार्यातिदेशे तु यक एव बलीयस्त्वम् । ननु चैतदिति । सर्वा प्राप्तिर्योगविभागेन बाधिष्यतइति भावः । परा प्राप्तिरिति । परत्वाद् बलीयस्त्वादित्यर्थः । ननु चेयमिति । योगविभागप्राप्तिः पूर्वविप्रतिषेधेन बाधिका भविष्यतीत्यर्थः । नोत्सहतइति । न्याय्यविप्रतिषेधाश्रयणस्य युक्तत्वाद् दुर्बलो योगवि-

नुवृत्तिं सिद्धम् । सोयमेवं सिद्धे सति यद्भावकर्मग्रहणमनुवर्तयति तस्यैतत्प्रयोजनं कर्मकर्तर्यपि यग् यथा स्यादिति । कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधावचनाय* । कर्तरीति च योगविभागः कर्तव्यः । श्यनः पूर्वविप्रतिषेधं मा वोचमिति । अथ वा कर्मवद्भाववचनसामर्थ्याद्यग् भविष्यति । अस्त्यन्यत् कर्मवद्भाववचने प्रयोजनम् । किम् । आत्मनेपदं यथा स्यात् । वचनादात्मनेपदं भविष्यति । चिण् तर्हि यथा स्यात् । चिणपि वचनाद्भविष्यति । चिण्वद्भावस्तर्हि यथा स्यात् । नैकं प्रयोजनं योगारम्भं प्रयोजयति । तत्र कर्मवद्भाववचनसामर्थ्याद् यक् भविष्यति । अथ वा आचार्यप्रवृत्तिर्ज्ञापयति कर्मकर्तरि यग् भवतीति । यदयं न दुहस्नुनमां यक्चिणाविति यक्चिणोः प्रतिषेधं शास्ति ॥

यसोनुपसर्गात् ॥ ७१ ॥ अनुपसर्गादिति किमर्थम् । आयस्यति प्रयस्यति । अनुपसर्गादिति शक्यमकर्तुम् । कथमायस्यति प्रयस्यतीति । संयसश्चेत्येतन्नियमार्थं भविष्यति । संपूर्वादेव यसोनान्यपूर्वादिति ॥

रुधादिभ्यः श्नम् ॥ ७८ ॥ किमर्थः शकारः । सार्वधातुकार्थः । शित्सार्वधातुकमिति सार्वधातुकसंज्ञा सार्वधातुकमपिदिति ङित्त्वं क्ङितीति गुणप्रतिषेधो यथा स्याद् भिनत्ति छिनत्तीति । नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । यस्माच्च प्रत्ययविधिस्तदादिप्रत्यये परतो ऽङ्गसंज्ञं भवति । यस्माच्च प्रत्ययविधिः न तत् प्रत्यये परतः । यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः । इदं तर्हि प्रयोजनम् । आर्धधातुकसंज्ञा मा भूदिति । किं च स्यात् । वलादिलक्षण इट् प्रसज्येत । एतदपि नास्ति प्रयोजनम् । वलादेरार्धधातुकस्याङ्गस्येडुच्यते । यस्माच्च प्रत्ययविधिः तदादि प्रत्यये परतोङ्गसंज्ञं भवति । यस्माच्चात्र प्रत्ययविधिः न तत् प्रत्यये परतः । यच्च प्रत्यये परतो न तस्मात्

---

भागप्राप्तिक इत्यर्थः । इहेति । सार्वधातुके यग् भवतीति सामान्योक्तावपि कर्तरि शबाद्यपवादविधानाद्भावकर्मणोरेव यग् भविष्यतीति भावकर्मणोनुवृत्तिरधिका यत इति कर्मकर्तर्यपि यग् भविष्यतीत्यर्थः । अत्रापि व्याख्याने योगविभागः कर्तव्य एवेत्याह कर्तरीति चेति । अन्यथा भावकर्मणोनुवृत्तियत्नाच्छप एवानन्तरस्य बाधः स्याद् न तु श्यन्नादीनाम् । योगविभागेन तु तेपि बाध्यन्ते । वचनादिति । कर्तरि कर्मव्यतिहार इत्यत्र कर्तरीति योगविभागात्तत्र च कर्मग्रहणानुवर्तनादन्तरेणाप्यतिदेशमात्मनेपदं भविष्यतीत्यर्थः । चिणपीति । चिण्ग्रहणे ऽनुवर्तमाने पुनश्चिण्ग्रहणमाधिकविधानार्थमिति कर्मकर्तर्यपि चिण् भविष्यतीत्यर्थः । नैकमिति । अन्यथा स्यसिच्सीयुडित्यत्रैव कर्मणा तुल्यक्रिये कर्तरीति वाच्यं स्यादित्यर्थः ॥ ६७ ॥

रुधादि ॥ भिनत्तीति । भिशब्दस्याङ्गसंज्ञानिबन्धनो गुणो मा भूदिति शित्वं कृतमित्यर्थः । यस्माच्चेति । भिद्शब्दादित्यर्थः । तस्यैव रुधादित्वात् न तु तत्प्रत्ययवाद्

प्रत्ययविधिः । अत उत्तरं पठति । श्नमि शित्करणं प्वादिह्रस्वार्थम् * । श्नमि शित्करणं क्रियते । प्वादिह्रस्वार्थम् । प्वादीनां शिति ह्रस्वत्वं यथा स्यात् । पृणति मृणतीति । न वा धात्वन्यत्वात् * । न वा कर्तव्यम् । किं कारणम् । धात्वन्यत्वात् । धात्वन्तरे पृणिमृणी । यत्तर्हि न धात्वन्तरं, यत्र भूम्यां वृणसे । नैष श्नम् । श्न एवैतद्ध्रस्वत्वम् । यदि श्नो ह्रस्वत्वम् । स्वरो न सिध्यति । वृणसे अदुपदेशाल्लसार्वधातुकमनुदात्तं भवतीति एष स्वरो न प्राप्नोति । तस्माच्छ्न- मेषः । यदि श्नम् श्नसोरल्लोपः प्रसज्येत । उपधाया इति वर्तते । अनुपधात्वान्न भविष्यति । न शक्यमुपधाया इति विज्ञातुम् । इह हि दोषः स्यात् । अङ्क्तः अञ्जन्तीति । तस्माच्छ्न एवैतद् ह्रस्वत्वम् । यद्येवम् । स्वरः कथम् । बहुलं पित्सार्वधातुकं छन्दसि । सार्वधातुकस्य छन्दसि बहुलं पित्त्वं वक्तव्यम् । पितश्चै- वापित्त्वं दृश्यते । अपितश्च पित्त्वम् । पितस्तावदपित्त्वम् । मातरं प्रमिणीमि जनित्रीम् । अपितश्च पित्त्वम् । शृणोत ग्रावाणः । तत्तर्हि श्नो ह्रस्वत्वं वक्त- व्यम् । अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम् । उपगायन्तु मां पत्नयो गर्भिणयो युव- तय इत्येवमर्थम् । विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः । श्नान्नलोप इति । नान्नलोप इतीयत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि प्रसज्येत । दीर्घत्वे कृते न भविष्यति । इदमिह संप्रधार्यं दीर्घत्वं क्रियतां नान्नलोप इति । किमत्र कर्तव्यम् । परत्वान्नलोपः स्यात् । तस्माच्छकारः कर्तव्यः । अथ क्रियमाणेऽपि शकारे इह कस्मान्न भवति विश्नानां प्रश्नानामिति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥

तनादिकृञ्भ्य उः ॥ ७९ ॥ किमर्थं करोतेः पृथग्ग्रहणं क्रियते न तना- दिभ्य इत्येवोच्येत । अन्यानि तनोत्यादिकार्याणि मा भूवन्निति । कानि । अनु- नासिकलोपादीनि । देवरक्ताः किंशुकाः । अनुनासिकाभावादेवानुनासिकलोपो

---

मित्शब्दात् प्रत्ययविधानम् ॥ पृणातीति । पॄ मॄ इति क्र्यादिषु पठितौ ताभ्यां व्यत्ययेन श्नमप्रत्ययः । धात्वन्तरमिति । तौदादिकावित्यर्थः । वृणस इति । वृवरणे इति क्र्यादिरुत्तस्माद्व्यत्ययेन श्नम्थासौ । श्न इति । छान्दसमिति भावः । अङ्क्त इति । श्नान्नलोप इत्यस्यासिद्धवदत्राभादित्यसिद्धत्वादकारस्योपधात्वाभावः । प्रमिणीमीति । मीञो मीनातेर्निगम इति ह्रस्वः । मिपो ऽपित्त्वेन ङित्वे सतीत्वम् परत्वादिति । यत्तु सुपि- चेति दीर्घत्वं तत्र संनिपातलक्षणपरिभाषावशान्न प्रवर्तते । यत्वन्यत्रोक्तं नामि दीर्घात्पर- त्वात् सुपि चेति भवितव्यमिति तत्संनिपातपरिभाषाया अनित्यत्वाश्रयेणेति न विरोधः । लक्षणेति । लाक्षणिकस्यानुमीयमानरूपत्वात् प्रतिपदोक्तस्य तु प्रत्यक्षत्वादिति भावः ॥ ७८ ॥

तनादि ॥ विभाषा लुगिति । ननु येन नाप्राप्तिन्यायेन लुका ह्रस्वादङ्गादिति लोपो बाध्यत इति कथं लुगभावपक्षे लोपः स्यात् । नैष दोषः । यत्र पक्षे लुक् प्रवर्तते तत्रासौ लोपस्य बाधकः । न त्वप्रवर्तमानः ॥ ७९ ॥

न भविष्यति । इदं तर्हि तनादिकार्यं मा भूत्तनादिभ्यस्तथासोरिति । ननु च भवत्येवात्र ह्रस्वादङ्गादिति । तेनैव यथा स्याद् अनेन मा भूदिति । कः पुनरत्र विशेषः तेन वा सत्यनेन वा । तेन सति सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावः सिद्धो भवति । अनेन पुनः सति चिण्वद्भावो न स्यात् । अनेनापि सति सिद्धश्चिण्वद्भावः । कथम् । विभाषा लुक् । यदा न लुक् तदा सिज्लोपः । तत्र सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावो वा भविष्यति । तनादित्वात्कृञः सिद्धं सिज्लोपे च न लुप्यति । चिण्वद्भावे न दोषः स्यात्सोपि प्रोक्तो विभाषया ॥

धिन्विकृण्व्योरच ॥ ८० ॥ क्वायमकारः श्रूयते । न क्व चिच्छ्रूयते । लोपोस्य भविष्यति । अतो लोप आर्धधातुक इति । यदि न क्वचिच्छ्रूयते किमर्थमयमुच्यते । नलोप इत्येवोच्येत । नैवं शक्यम् । लोपे सति गुणः प्रसज्येत । अत्वे पुनः सति अकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति । ननु च लोपेऽपि सति न धातुलोप आर्धधातुक इति प्रतिषेधो भविष्यति । आर्धधातुकनिमित्ते लोपे स प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते खल्वपि स योगः । तस्मिन् प्रत्याख्याते गुणः स्यादेव । तस्मादत्वं वक्तव्यम् । अथ किमर्थं नुमनुषक्तयोर्धिन्विकृण्व्योर्ग्रहणं क्रियते न धिविकृव्योरित्येवोच्यते । धिविकृव्योरितीयत्युच्यमाने अत्वे कृते अनिष्टे देशे नुम् प्रसज्येत । इदमिह संप्रधार्यं नुम् क्रियतामत्वमिति । किमत्र कर्तव्यम् । परत्वान्नुमागमः । अन्तरङ्गमत्वम् । कान्तरङ्गता । प्रत्ययोत्पत्तिसंनियोगेनात्वमुच्यते । उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्य नुमागमः । नुमप्यन्तरङ्गः । कथम् । वक्ष्यत्येतन्नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थमिति । उभयोरन्तरङ्गयोः परत्वान्नुमागमः । तस्माद्धिविकृव्योरिति वक्तव्यम् ॥

हलः श्नः शानज्झौ ॥ ८३ ॥ किमर्थः शकारः । शित्सार्वधातुकमिति सार्वधातुकसंज्ञा सार्वधातुकमपिदिति ङित्त्वं क्ङितीति गुणप्रतिषेधो यथा स्यादकुषाण पुषाणेति । अतउत्तरं पठति । श्नाविकारस्य शित्करणानर्थक्यं स्थानिवत्त्वात् * । श्नाविकारस्य शित्करणमनर्थकम् । किं कारणम् । स्थानिवत्त्वात् । शितोयमादेशः स्थानिवद्भावात् शिद्भविष्यति । अर्थवत्तु ज्ञापकं सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वस्य * । अर्थवत्तु श्नाविकारस्य शित्करणम् । कोर्थः । ज्ञापका-

---

धिन्वि ॥ आर्धधातुकनिमित्त इति । धातुलोप इति बहुव्रीह्याश्रयणादिति भाव । न चैष इति । सन्नियोगशिष्टत्वान्निमित्तनिमित्तिभावाऽप्रसङ्गः । अत्वे कृत इति । अकारस्य स्यादित्यर्थः । उत्पन्ने प्रत्यय इति । नुम्विधावङ्गाधिकारादिति भाव ॥ ८० ॥

र्थम् । किं ज्ञाप्यते । एतज् ज्ञापयत्याचार्यः सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति । किमेतस्य ज्ञापने प्रयोजनम् । प्रयोजनं हि तातङोऽपित्त्वम् । हेः पित्त्वं न प्रतिषेध्यम् । पितोयमादेशः स्थानिवद्भावात्पित्स्यात् । सार्वधातुकादेशे अनुबन्धा न स्थानिद्भवन्तीति नायं पिद्भविष्यति तातङि च ङकारो नोच्चार्यो भवति । पितोयमादेशः स्थानिवद्भावात्पित् स्यात् । सार्वधातुकादेशेअनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति । तबादिषु चाङित्त्वम् *। तबादिषु च ङित्त्वं न प्रतिषेध्यम् । शृणोत ग्रावाणः ङितइमेआदेशा स्थानिवद्भावान्ङितः स्युः । सार्वधातुकादेशेनुबन्धा न स्थानिवद्भवन्तीति नेमे ङितो भविष्यन्ति । तस्य दोषो मिप आदेशे पिदभावः * । तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभावः । अचिनवमकरवम् । पितोयमादेशः स्थानिवद्भावात् पिद्भवति सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पित्स्यात् । असत्यमिदमुच्यते मिप आदेश इति । तिप्सिम्मिपामादेशा इति वक्तव्यम् । वेद वेत्थ । विदेर्वसोः शित्त्वम् * । विदेरुत्तरस्य वसोः शित्त्वं वक्तव्यम् । शितोयमादेशः स्थानिवद्भावाच्छिद्भवति । सार्वधातुकादेशे ऽनुबन्धा न स्थानिवद्भवन्तीति नायं शित्स्यात् । कित्करणाद्वा सिद्धम् * । अथ वा अवश्यमत्र सामान्यग्रहणाविघातार्थः ककारोनुबन्धः कर्तव्यः । क्व सामान्यग्रहणाविघातार्थेनार्थः । वसोः संप्रसारणमिति । तेनैव यत्नेन गुणो न भविष्यति । अस्य ज्ञापकस्य सन्ति दोषाः सन्ति च प्रयोजनानि । समा दोषा भूयांसो वा । तस्मान्नार्थोनेन ज्ञापकेन । कथं यानि प्रयोजनानि । तानि क्रियन्ते न्यास एव । एवमपि भवेत् पित्करणसामर्थ्यात् पिवत्कृतं स्यात् ङित्करणसामर्थ्याद् ङित्वकृतम् । यत्तु खलु पिति ङित्कृतं प्राप्नोति ङिति च पित्कृतम् । केन तन्न स्यात् । तस्माद्वक्तव्यं पिन्न ङिद्भवति ङिच्च पिन्न भवतीति । न वक्तव्यम् । एवं वक्ष्यामि । सार्वधातुकं ङिद्भवति पिन्न । एवं तावत्पितो ङित्त्वं प्रतिषिद्धम् । ततः असंयोगाल्लिट् किद्भवति ङिच्च पिन्न भवतीति । एवं ङितः पित्त्वं प्रतिषिद्धम् ॥

---

हलः श्नः शा ॥ तबादिष्विति । तप्तनप्तनथनाश्चेति शृणोतेरित्येवमादौ ये तिङां ङितामादेशा विधीयन्ते ते तबादयः । एवमपीति । पित्त्वनिमित्तमनुदात्तत्वं भवतु ब्रूतावानितीडागमश्च ङित्वनिमित्तश्च गुणवृद्धिप्रतिषेध इत्यर्थः । पिन्नेति । अपिदिति प्रसज्यप्रतिषेध आश्रीयते । पिद्भवन् ङिन्न भवतीत्यर्थः । योगविभागाच्च यावती सार्वधातुकस्य ङित्वप्राप्तिस्सर्वासौ निषिध्यते । असंयोगादिति । अत्र ङिदपिदिति वर्तते तेन ङिद्भवन् पिन्न भवतीति तातङः स्थानिवद्भावप्राप्तं पित्वं निषिध्यते ॥ ८३ ॥

छन्दसि शायजपि ॥८४॥ शायच् छन्दसि सर्वत्र *। शायच् छन्दसि सर्वत्रेति वक्तव्यम्। क सर्वत्र। हौ चाहौ च। किं प्रयोजनम्। महीरस्कभायद् यो अस्कभायद् उद्गृभायत उन्मथायतेत्येवमर्थम् ॥

व्यत्ययो बहुलम् ॥८५॥ योगविभागः कर्तव्यः। व्यत्ययः। व्यत्ययो भवति स्यादीनामिति। आण्डा शुष्णस्य भेदति। भिनत्तीत्येवं प्राप्ते। स च न मरति। म्रियते इति प्राप्ते। बहुलम्। छन्दसि विषये सर्वे विधयो भवन्तीति। सुपां व्यत्ययः तिङां व्यत्ययः वर्णव्यत्ययः लिङ्गव्यत्ययः पुरुषव्यत्ययः कालव्यत्ययः आत्मनेपदव्यत्ययः परस्मैपदव्यत्यय इति। सुपां व्यत्ययः। युक्ता मातासीद्धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते तिङां व्यत्ययः। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। वर्णव्यत्ययः। त्रिष्टुभौजः शुभितमुग्रवीरम्। शुधितमिति प्राप्ते। लिङ्गव्यत्ययः। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। पुरुषव्यत्ययः। अधासवीरैर्दशभिर्वियूयाः वियूयादिति प्राप्ते। कालव्यत्ययः। श्वोऽग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन। आधातायष्टेतिप्राप्ते। आत्मनेपदव्यत्ययः। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। परस्मैपदव्यत्ययः। प्रतीपमन्यऊर्मिर्युध्यति। युध्यते इति प्राप्ते। सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन ॥

लिङ्याशिष्यङ् ॥८६॥ अयमाशिषि अङ् विधीयते। तस्य किं प्रयोजनम्। आशिष्यङ्प्रयोजनं स्थागागमिवचिविदयः*। स्था। उपस्थेयं वृषभं तुग्रियाणाम्। स्था। गा अञ्जसा सत्यमुपगेयम्। गा। गमि। यज्ञेन प्रतिष्ठां गमेयम्। गमि। वचि। मन्त्रं वोचे माग्नये। वचि। विदि। विदेयमेनां मनसि प्रविष्टाम्। विदि। शकिरुहोश्च*। शकिरुहोश्चेति वक्तव्यम्। शकेम त्वा समिधं साधया धियः। अस्रवन्तीमारुहेमास्वस्तये। दृशेरक् पितरं च दृशेयं मातरं च दृशेयम् *। दृशेरग्वक्तव्यः। पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम्। इह उपस्थेयामेत्यत्र आडपि वक्तव्यः। न ह्यङैव सिध्यति। न वक्तव्यः। सार्वधातुकत्वाल्लिङः सलोपः आर्धधातुकत्वादेत्वम्। तत्रोभयलिङ्गत्वात् सिद्धम्॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥

---

छन्दसि। अस्कभायदिति। स्कम्भुः सौत्रो धातुः लङि तिप् श्नः शायच् अडागमः। लिङ्याशि। दृशेरगिति। अङि गुणः स्यात्। उपस्थेयामेति। स्थालिङ्मस्यासुट् अङ् आकारलोपः सलोपश्च। अतो येय इति इय्। मस्याडागमः कार्योन्यथा यलोपे सति उपस्थेमेति स्यात् ॥ ८६ ॥ इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

कर्मवत्कर्मणा तुल्यक्रियः ॥ ८७ ॥ वत्करणं किमर्थम् । स्वाश्रयमपि यथा स्याद् भिद्यते कुसूलेनेति । अकर्मकाणां भावे लो यथा स्यात् । कर्मणेति किमर्थम् । करणाधिकरणाभ्यां तुल्यक्रियः कर्ता यः सकर्मवन्मा भूत् । साध्वसिश्छिनत्ति साधु स्थाली पचतीति । तुल्यक्रिय इति किमर्थम् । पचत्योदनं देवदत्तः । तुल्यक्रिय इत्यप्युच्यमानेत्र प्राप्नोति । अत्रापि हि कर्मणा तुल्यक्रियः कर्ता । न तुल्यक्रियग्रहणेन समानक्रियत्वमभिधीयते । किं तर्हि । यस्मिन् कर्मणि कर्तृभूतेपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि । स कर्मणा तुल्यक्रियः कर्ता कर्मव-

---

कर्मवत्कर्मणा ॥ वत्करणमिति । विनापि वतिना परार्थे शब्दप्रयोगात्तदर्थलाभ इति भावः । स्वाश्रयमपीति । असति वत्करणे कर्तुः कर्मसंज्ञा विज्ञायेत । ततश्चाकर्मकव्यपदेशाभावाद्भावे लो न स्यात् । वत्करणे तु सति कर्मकार्याणि कर्तुरतिदिश्यन्ते न तु स्वाश्रयं कार्यं निवार्यतइति भावे लसिद्धो भवतीति लःदेशेन कर्तुरनभिधानात् तृतीया भवति भिद्यते कुसूलेनेति । न चासत्यपि वत्करणे लान्तस्य कर्तेति वक्ष्यमाणेन भावे लसिध्यति । यस्माद्भावे लविधिर्लान्तस्य कार्यमिति स्वाश्रयनिवारणं स्यादेव । कर्मणेति किमिति । धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता तत्र कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न संभवतीति कर्मस्थैव क्रियाश्रयिष्यतइति भावः । साध्वसिश्छिनत्तीति । ननु करणादिव्यापारो धातुना नाभिधीयते यदा त्वभिधीयते तदा तेषां कर्तृत्वमेव न तु करणादिरूपता । न च कर्तृकर्मव्यतिरेकेण कारकान्तराश्रयत्वं क्रियाया उपपद्यते । नैष दोषः । यद्यपि करणादिव्यापारो धातुवाच्यो न भवति तथापि स्वव्यापारं कुर्वन्ति करणादीनि प्रधानक्रियां साधयन्ति । तत्रावश्यं तुल्यक्रियत्वं कर्तुराश्रयितुमवस्थान्तरमपेक्षणीयम् । अवस्थान्तरयुक्तक्रियया तुल्यक्रियः कर्तेति । ततश्च कर्मावस्थावत्करणाद्यवस्था अप्याश्रीयेरन् प्रधानव्यापारश्च कर्तृकर्मणोरेव स्थितो न त्ववान्तरव्यापारेपि तस्य सर्वत्रैव कारके व्यवस्थानाद्यद्यपि स्वव्यापारे कर्तृत्वं तस्य तथापि प्रधानक्रियापेक्षलब्धकरणादिव्यपदेशवस्तुव्यवस्थितक्रियातुल्यत्वग्रहणनिवारणाय कर्मणेति कर्तव्यमेव । यद्यपि करणादिव्यापारस्य धातुवाच्यत्वं नास्ति । तथापीह सूत्रे धातुवाच्यत्वस्य शब्देनानाश्रयणाद्वस्तुसद्भावाश्रयेण प्रसङ्गः स्यादेव । साधु स्थाली पचतीति । स्थाल्या अधिकरणत्वे यादृशी धारणसंभवनादिरूपा क्रिया तादृश्येव कर्तृत्वमपीति स्यात्कर्मवत्त्वम् । तुल्यक्रिय इति किमर्थमिति । कर्मणेति तृतीया तुल्यशब्दाध्याहारेण व्याख्यास्यते । तुल्यक्रियत्वाच्च कर्तुस्तुल्यत्वमिति प्रश्नः । अथवा क्रियमाणेपि तुल्यक्रियग्रहणेतिप्रसङ्ग इति प्रश्नः । पचत्योदनमिति । सहार्थेपि तृतीया विज्ञायेत । तेन कर्मणा सह यः कर्ता प्रतिपाद्यतइति भावः । अकर्मकनिवृत्त्यर्था कर्मश्रुतिः स्यादास्ते शेतइति । अत्रापीति । तुल्यशब्दस्य साधारणवचनत्वात् कर्तृकर्मसाध्यत्वाच्चात्र क्रियाया इति भावः । समानक्रियत्वमिति । साधारणक्रियत्वमित्यर्थः । एतच्च तुल्यक्रियग्रहणादेव लभ्यते । अन्यथा कर्मवत्कर्मणात्येव ब्रूयात् । यस्मिन्निति । सादृश्यवाची तुल्यशब्द आश्रीयतइत्यर्थः । कर्तृभूत इति । त्वेर्विकल्पेन विधानादत्राभावः कर्तरि संपन्न इत्यर्थः । अथ वा भूप्राप्तावित्य-

द्भवतीति । कर्मवदकर्मकस्य कर्ता * । अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् । किं प्रयोजनम् । सकर्मकस्य कर्ता कर्मवन्मा भूत् । भिद्यमानः कुसूलः पात्राणि भिनत्तीति । तथा । कर्मदृष्टश्चेत्समानधातौ * । कर्मदृष्टश्चेत्समानधाताविति वक्तव्यम् । इह मा भूत् । पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेति ।तथा। कर्मस्थभावकानां कर्मस्थक्रियाणां च * । तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां च कर्ता कर्मवन्मा भूदिति । कर्मस्थभावकानाम् । आसयति देवदत्तं शाययति देवदत्तं स्थापयति देवदत्तम् । कर्मस्थक्रियाणाम् । गामवरुणद्धि करोति कटम् । कर्तृस्थभावकानाम् । चिन्तयति मन्त्रयते । कर्तृस्थक्रियाणाम् । गच्छति धावति हसति । यत्तावदुच्यते । अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् । न वक्तव्यम्। वक्ष्यत्येतत् । सकर्मकाणां प्रतिषेधः । अन्योन्यमाश्लिष्यतइति । यदप्युच्यते कर्मदृष्टश्चेत् समानधाताविति वक्तव्यमिति । न वक्तव्यम् । धातोरिति वर्तते । धातोः कर्मणः कर्तुरयं कर्मवद्भाव उच्यते । तत्र संबन्धादेतद् गतव्यं यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्यादिति । तद्यथा । धातोः कर्मण्यण् भवतीति तत्र सम्बन्धा-

---

स्याधृषाद्वेति णिचो विकल्पनाद्रूपमेतत् । तेन कर्तृत्वं प्राप्त इत्यर्थः । वृत्तिविषये कर्तृशब्दः कर्तृत्वे वर्तते । कर्तृकर्मावस्थाभेदाच्च एकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपद्यते । कर्मणेति । कर्मस्थया क्रिययेत्यर्थः । साध्यसाधनयोरत्यन्तभेदात् तुल्यत्वासंभवात् कर्मस्था क्रिया कर्मशब्देनोच्यते भवति हि तात्स्थ्यात्ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीति । तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदात्सादृश्याभावात्कर्मवद्भावाभावः। लूयते केदारः स्वयमेवेत्यत्र तु केदारस्य द्विधाभवनलक्षणा कर्मावस्थायां यादृशी क्रिया तादृश्येव कर्त्रवस्थायामपीति भवति कर्मवद्भावः । भिद्यमान इति । पात्राणामपि द्विधा भवनं कुसूलस्यापीति प्राप्नोति कर्मवद्भावः कर्मदृष्ट इति। समान एकस्मिन् धातौ कर्ता कर्मत्वेन यदि दृष्टो भवति तदा कर्मवद्भावो यदा त्वन्यस्मिन् धातौ कर्मान्यस्मिश्च कर्ता तदा मा भूत् कर्मवद्भाव इत्यर्थः । पचत्योदनमिति। ओदनस्य कर्मत्वे यादृशी क्रिया विक्लित्तिलक्षणा तादृश्येव कर्तृत्वेपि राध्यतेर्विक्लित्तिवचनत्वान्न चास्य वाक्यद्वयस्य युगपत् प्रयोगः कर्मस्थक्रियातुल्यत्वप्रतिपादनाय न स्यात् । अत्र केचिदाहुः। लुनातेरेव णिचि लावि. संपन्न इति अस्ति समानधातुत्वम् । अन्ये त्वाहुः लावयतावेव केदारस्य कर्तृत्वं कर्मत्वं चेति दोषाभावः। कर्मस्थभावकानामिति । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः। सपरिस्पन्दनसाधनसाध्यस्तु क्रिया । यत्र च क्रियाकृतविशेषदर्शनं तत्स्था क्रियोच्यते । ततश्च पश्यति राजा स्वयमेव आरोहति हस्ती स्वयमेवेति कर्मवद्भावाभावः । सकर्मकाणामिति । अन्योन्यमाश्लिष्यतइत्युदाहरणमात्रमेतन्न तु व्यतिहारविशिष्टक्रियाविषयकर्मवद्भावप्रतिषेधप्रतिपादनार्थमित्यर्थ. । धातोः कर्मण इति । कर्मणः सतः कर्तुरित्यर्थः । कर्मणेति चोपादानादयमर्थो लभ्यते । यस्य धातोर्यत्कर्म तत्स्थया क्रियया तुल्यक्रियः कर्ता

देतद् गम्यते यस्य धातोर्यत्कर्मेति । इह मा भूत् आहर कुम्भं करोति कटमिति। यदप्युच्यते कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति । न वक्तव्यम् । कर्मस्थया क्रियया यं कर्तारमुपमिमीते । न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियायाः प्रवृत्तिरस्ति । किं पुनः कर्मकर्तरि कर्माश्रयमेव भवति आहो स्वित् कर्त्राश्रयमपि। किं चातः। यदि कर्माश्रयमेव चङ्शप्कृद्विधयो न सिध्यन्ति- चङ् । अचीकरत कटः स्वयमेव । चङ् । शप् । नमते दण्डः स्वयमेव । शप् । कृद्विधिः । भिदुरं काष्ठं स्वयमेव । अथ कर्त्राश्रयमपि सिद्धमेतद् भवति । किं त- र्हीति । आत्मनेपदशबादिविधिप्रतिषेधः ॥ । आत्मनेपदं विधेयं शबादीनां च प्र- तिषेधो वक्तव्यः । उभयं क्रियते न्यास एव । किमर्थं पुनरिदमुच्यते । कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् ॥ । कर्मकर्तरि कर्तृत्वमस्ति । कुतः । स्वात- न्त्र्येणैवात्र कर्ता विवक्षितः । किं पुनः सतः स्वातन्त्र्यस्य विवक्षा आहो स्विद्वि- वक्षामात्रम् । सत इत्याह । कथं ज्ञायते । इह भिद्यते कुसूलेनेति । न चान्यः कर्ता दृश्यते क्रिया चोपलभ्यते । किं च भोः विग्रहवतैव क्रियायाः कर्त्रा भवितव्यं न पुनर्वातातपकाला अपि कर्तारः स्युः । भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात् । यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ता भवति । अन्यदतः कुसूलात् । यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्यः कर्ता नास्ति।इह तु कथं स्याद् लूयते केदारः स्वयमेवेति । यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन् दृश्यते । अत्रापि याऽसौ सुकरता नाम

---

तस्यैव धातोर्यदि भवति ततः कर्मवद्भवति । आहर कुम्भमिति । समर्थपरिभाषोप- स्थानमन्तरेणापि भवत्येवेष्टसिद्धिरिति प्रदर्शनायोपन्यासः। कर्तारमिति। कर्तृस्थां क्रि- यामित्यर्थः । किं पुनरिति । किमतिदेशेन स्वाश्रयं निवर्त्यते आहोस्विन्नेति प्रश्नः । यद्यपि स्वाश्रयमपि यथा स्यादित्यत्र निर्णयः कृतः तथापि दोषान्तरोद्भावनाय पुन- र्विचार्यते । अचीकरतेति । यक्चिणोः प्रतिषेधेऽपि स्वाश्रयौ चङ्शपौ न प्राप्नुतः । भिदुरमिति । कर्तरि कुरज् न प्राप्नोति । लान्तस्य कर्ता कर्मवदिति न तावत् स्थापित- मिति कृद्विधेरसिद्धिरुक्ता । उभयमिति । कर्तैव यः कर्ता तत्र परस्मैपदमिति परस्मै- पदाभावादात्मनेपदं भवति । कर्तरि शबित्यत्र कर्तरीति योगविभागेन शबादीनां यका बाधनं भवति । कार्यातिदेशो वायमाश्रीयते। यच्चाविरुद्धमतिदेशेन स्वाश्रयं तद्भवति न तु विरुद्धमिति शबादिपरस्मैपदाभावः । स्वातन्त्र्यस्येति । पच्यते ओदनः स्वय- मेवेति विक्लित्तिमात्रवाची पचिस्तत्र चौदनस्य कर्तृत्वमेव । लूयते केदार इति द्विधा- भवनवाची लुनातिस्तस्था च केदारस्य कर्तृत्वम् । क्रिया चेति । विशरणक्रियेत्यर्थः । किञ्च भो इति । कारणाभावे विशरणाख्यकार्याभावादवश्यं केन चिद्वातादिना कार-

तस्या नान्यः कर्ता भवति अन्यदतः केदारात् । अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्र लान्तस्य कर्मवदनुदेशः* । लान्तस्य कर्मवदनुदेशः कर्तव्यः । लान्तस्य कर्ता कर्मवद्भवतीति वक्तव्यम् । अन्यथा हि कृत्यक्तखलर्थेषु प्रतिषेधः । अक्रियमाणे हि लग्रहणे कृत्यक्तखलर्थेषु प्रतिषेधो वक्तव्यः स्यात् । कृत्य । भेत्तव्यः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितस्तदास्य कर्मवद्भावः स्यात् तस्य प्रतिषेधो वक्तव्यस्तस्मिन् प्रतिषिद्धे अकर्मकाणां भावे कृत्यो भवतीति भावे कृत्यो यथा स्याद् भेत्तव्यं कुसूलस्य भेत्तव्यं कुसूलेनेति । कृत्य । क्त । भिन्नः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदास्य कर्मवद्भावः स्यात् तस्य प्रतिषेधो वक्तव्यः तस्मिन् प्रतिषिद्धे अकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्याद् भिन्नं कुसूलेनेति । क्त । खलर्थ । ईषद्भेदः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भावः स्यात् तस्य प्रतिषेधो वक्तव्यः तस्मिन् प्रतिषिद्धे ऽकर्मकाणां भावे खल्भवतीति भावे खल् यथा स्यात् । ईषद्भेदं कुसूलेनेति । तर्हि लग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । लिङ्याशिष्यङिति द्विलकारको निर्देशः । सिद्धं तु प्राकृतकर्मत्वात्* । सिद्धमेतत् । कथम् । प्राकृतकर्मत्वात् प्राकृतमेवैतत् कर्म । यथा कटं करोति शकटं करोतीति । कथं पुनर्ज्ञायते प्रकृतमेवैतत्कर्मेति । आत्मसंयोगे कर्मकर्तुः कर्मदर्शनात्* । आत्मसंयोगे कर्मकर्तुः कर्म दृश्यते । क्व । हन्त्यात्मानमात्मना हन्यतइति । विषम

---

णेन भाव्यमिति भावः । अन्यदत इति । कुसूलस्यैव विशरणक्रियायां कारणत्वोपपत्तावदृश्यमानकारणान्तरकल्पनाया अयुक्तत्वादिति भावः । सुकरतेति । द्विधाभवनलक्षणाक्रियेत्यर्थः । अन्यथा पर्वतमपि देवदत्तो लुनीयादिति भावः । लान्तस्य कर्तेति । लान्तवाच्यो यः कर्ता स लान्तकार्य एव कर्मवद्भवतीत्यर्थः । तेन कर्मणि विधीयमानाः कृत्यादयोऽतिदेशात्कर्मकर्तरि न भवन्तीति भाव एवोत्पद्यन्ते । ततश्च तैः कर्तुरनभिहितत्वात्कर्तृविभक्ती षष्ठीतृतीये भवतः । भेत्तव्यं कुसूलस्य भेत्तव्यं कुसूलेनेति । भिद्यते कुसूल इत्यत्र च द्वितीया न भवति । क्तग्रहणस्यात्र प्रयोजनं न दृश्यते । गवा दुग्धं पय इत्यत्र दृश्यत इत्याहुः । तथाह्यकर्मकत्वाद् गत्यर्थाकर्मकेति वचनात् कर्तरि भवितव्यमेव क्तेन भिन्नः कुसूलः स्वयमेवेति । तथा च सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यमिति सिनो ग्रासः स्वयमेवेति क्तः कर्तर्युदाहरिष्यते । सिद्धं त्विति । प्राकृतं स्वाभाविकमेवैतत्कर्म न त्वातिदेशिकमित्यर्थः । आत्मसंयोग इति । एकस्यैव वस्तुनो भेदेनात्मा कर्मत्वेन कर्तृत्वेन च विवक्ष्यत इत्यर्थः । तदुक्तम् । एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते । कर्मत्वं करणत्वं च कर्तृत्वं चोपजायत इति ॥ कर्मदृश्यत इति । कर्मत्वं दृश्यत इत्यर्थः । विषम उपन्यास इति । अयं भावः । दृष्टान्ते आत्मभेदस्य शब्देन प्रतिपादितत्वादुक्तं कर्मत्वम् । इह तु लूयते केदारः पच्यते ओदन इत्यादौ यदा स्वयमिति शब्दो न प्रयुज्यते तदात्मभेदाविवक्षायां कर्मत्वाभावात्कर्तृत्वमेव द्विधाभवनादौ केदारादीनामिति

उपन्यासः । हन्त्यात्मानमिति कर्म दृश्यते कर्ता न दृश्यते । आत्मना हन्यत इति च कर्ता दृश्यते न कर्म दृश्यते पदलोपश्च । पदलोपश्चात्र द्रष्टव्यः हन्त्यात्मानमात्मा । आत्मना हन्यत आत्मेति । कः पुनरात्मानं हन्ति को वात्मना हन्यते । द्वावात्मानौ शरीरात्मा अन्तरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति । सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति * । सकर्मकाणां प्रतिषेधो वक्तव्यः । किं प्रयोजनम् । अन्योन्यमाश्लिष्यतः अन्योन्यं संस्पृशतः अन्योन्यं संगृह्णीत इति । तपेर्वा सकर्मकस्य वचनं नियमार्थम् * । तपेर्वा पुनः सकर्मकस्य वचनं नियमार्थं भविष्यति । तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्येति । तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति । उत्तपति सुवर्णं सुवर्णकारः। उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति । तस्य च तपःकर्मकस्यैव * । तस्य च तपःकर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्य । किमिदं तप इति । तपेरयमौणादिकोऽसकारो भावसाधनः । कः प्रकृत्यर्थः कः प्रत्ययार्थः । स एव संतापः। कथं पुनः स एव नाम प्रकृत्यर्थः स्यात्स एव च प्रत्ययार्थः । सामान्यतपेरवयव-

---

कर्मवदतिदेशः कर्तव्य एव । नमते दण्ड इत्यादौ च प्राकृतकर्मत्वे यक्चिणोः प्रतिषेधे शप्चङौ न स्याताम् । भिद्यते कुसूलेनेति च सकर्मकत्वाद्भातोर्भावे लो न स्यात् । कर्म दृश्यतइति । आत्मानमिति द्वितीयान्तवाच्यं कर्म । कर्ता न दृश्यतइति । हन्तीति कर्तरि लकारोत्पत्तावपि कर्तृविशेषानुपादानादिति भावः । कर्ता दृश्यतइति । तमन्तरेण क्रियाया अभावादात्मनेत्येतद्वाच्य इति भावः। कर्म न दृश्यतइति । कर्तृव्यतिरेकेणान्यस्यात्र कर्मणो दुरुपपादत्वादिति भावः । पदलोपश्चेति । गम्यमानार्थत्वादप्रयोगः पदस्येत्यर्थः । यत्तु लूयते केदारः स्वयमेवेति वृत्तिकारैरुदाह्रियते तत्र कर्त्रन्तराभावप्रतिपादनेन केदारस्यैव कर्तृत्वप्रतिपादनाय स्वयंशब्दः प्रयुज्यते । नत्वेतत्कर्मवद्भावस्योदाहरणं स्वयंशब्दस्यात्मनेति तृतीयान्तार्थे वर्तनादात्मनः कर्तृत्वं केदारस्य प्राकृतकर्मत्वसद्भावात् । द्वावात्मानाविति । गोरणावित्यत्र व्याख्यातमिति तत एवावधार्यम् । आश्लिष्यतइति । क्रियाफलस्य संयोगस्य कर्मणि दर्शनात्कर्मस्थक्रियत्वमत्र द्रष्टव्यम् । तपेर्वेति । तप इति योगविभागेन नियमः क्रियतइति भावः । ननु तप्यते तपस्तापस इत्यत्र कर्मस्थाक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति । उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्तापसस्य कर्तृत्वेऽर्जनार्थत्वात् । नैष दोषः । शरीरसंतापलक्षणायाः क्रियायास्तुल्यत्वादवस्थाद्वयेपि शरीरसंतापलक्षणमेवार्जनं तापसस्य यतो व्यापारः । कः प्रत्ययार्थ इति । तापसेन तपस्तप्यतइति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्यैव क्रियारूपस्य प्रत्ययार्थत्वं दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावाद्भेदेन भाव्यम् । इह तु भेदाभावात् प्रकृतिप्रत्ययार्थानुपपत्तिः । अथ वा तपःकर्मकस्येति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रितं तच्च विरुद्धमिति भावः। अवयवतपेरिति।

तापिः कर्म भवति। तद्यथा। स एतान् पोषानपुषत् गोपोषमश्वपोषं रैपोषमिति सामान्यपुषेरवयवपुषिः कर्म भवति। एवमिहापि सामान्यतपेरवयवतापिः कर्म भवति। दुहिपच्योर्बहुलं सकर्मकयोः *। दुहिपच्योः सकर्मकयोः कर्ता कर्मवद्बहुलं भवतीति वक्तव्यम्। दुग्धे गौः पयः स्वयमेव। तस्मादुदुम्बरः सलोहितं फलं पच्यते। बहुलवचनं किमर्थम्। परस्मैपदार्थम्। यद्येवं नार्थो बहुलवचनेन। न हि परस्मैपदमिष्यते। सृजियुज्योः श्यंस्तु *। सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। श्यंस्तु भवति। सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यः। चिणात्मनेपदार्थः। सृज्यते मालामसर्जि मालामिति। युजेस्तु न्याय्ये कर्मकर्तरि यकोऽभावाय। युज्यते ब्रह्मचारी योगम्। करणेन तुल्यक्रियः कर्ता बहुलम् *। करणेन तुल्यक्रियः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। परिवारयति कण्टकैर्वृक्षः परिवारयन्ते कण्टका वृक्षम्। स्रवसादीनां प्रतिषेधः*। स्रवसादीनां प्रतिषेधो वक्तव्यः। स्रवति कुण्डिका उदकं स्रवति कुण्डिकायां उदकम्। स्रवन्ति वलीकान्युदकं स्रवति वलीकेभ्य उदकम्। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। तुल्यक्रिय इत्युच्यते। क्रियान्तरं चात्र गम्यते। इह तावत्स्रवति कुण्डिका उदकमिति विसृजतीति गम्यते। स्रवति कुण्डिकाया उदकमिति निष्क्रामतीति गम्यते। स्रवन्ति वलीकान्युदकमिति विसृजन्तीति गम्यते। स्रवति वलीकेभ्य उदकमिति पततीति गम्यते। भूषाकर्मकिरादि-

---

विशेषतपिर्ज्ञानलक्षणं तप इत्यर्थः। दुग्धे गौरिति। गौर्मुञ्चति पय इत्यर्थः। दुहेर्द्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेपि सकर्मकत्वादप्राप्ते वचनम्। फलं पच्यत इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम्। अन्ये त्वाहुः। पचिरत्र विषये द्विकर्मको वृक्षस्य पाकमन्तरेण फलपाकासंभवाद् वृक्षोऽकथितं कर्म तस्यैव च यदा कर्तृत्वविवक्षा तदायं कर्मवद्भावः। एवंविध एव च विषये कर्मवद्भाव इष्यते न पुनरोदनं पचतीत्यादौ। श्रद्धोपपन्न इति। श्राद्धयुक्ते कर्तरीत्यर्थः। चिणात्मनेपदार्थ इति। श्यना यगेव बाध्यते न तु चिणित्यर्थः। श्यनि तु प्रकृतेराद्युदात्तत्वं भवति यकि तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वमिति श्यन्यकोरत्र स्वरविशेषः। सृज्यते मालामिति। श्रद्धया मालां निष्पादयतीत्यर्थः। असर्जि मालामिति। मालां निष्पादितवानित्यर्थः। यकोभावायेति। अकारप्रश्लेषाद् यग्बाधनायेत्यर्थः। युज्यत इति। योगो ब्रह्मचारिणं युनक्ति संबध्नातीत्यर्थः। ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां युज्यते ब्रह्मचारी योगमिति भवति। करणेनेति। बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति। स्रवति कुण्डिकेति। निष्क्रामदुदकं निष्क्रामयतीत्यस्मिन्नर्थे तुल्यक्रियत्वात् प्राप्तः कर्मवद्भावो निषिध्यते। विसृजतीति गम्यते इति। तथा च लोके कथ्यते कृपणोसौ न किंचित् स्रवतीति। विसर्गश्च दानमुच्यते इति तुल्यक्रियत्वाभावः। भूषाकर्मेति। कर्मशब्दः क्रियावाची। भूषाफलं च शोभाख्यं कर्मणि दृश्यते इति कर्मस्था

सनां चान्यत्रात्मनेपदात् * । भूषाकर्मकिरादिसनां च अन्यत्रात्मनेपदात् प्रतिषेधो वक्तव्यः । भूषयते कन्या स्वयमेव । अबुभूषत कन्या स्वयमेव । मण्डयते कन्या स्वयमेव । अममण्डत कन्या स्वयमेव । किरादि । अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट हस्ती स्वयमेव । गिरते ग्रासः स्वयमेव । अगीर्ष्ट ग्रासः स्वयमेव । सन् । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट कटः स्वयमेव ॥

**न दुहस्नुनमां यक्चिणौ** ॥ ८९ ॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् * । यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानं कर्तव्यम् । णि । कारयते कटः स्वयमेव । अचीकरत कटः स्वयमेव । णि । श्रि । उच्छ्रयते दण्डः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । श्रि । ब्रूञ् । ब्रूते कथा स्वयमेव । अवोचत कथा स्वयमेव । भारद्वाजीयाः पठन्ति । यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानमिति ॥

**कुषिरजोः प्राचां श्यन् परस्मैपदं च** ॥ ९० ॥ कुषिरजोः श्यन्विधाने सार्वधातुकवचनम् * । कुषिरजोः श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम् । अवचने हि लिङ्लिटोः प्रतिषेधः * । अक्रियमाणे हि सार्वधातुकग्रहणे लिङ्लिटोः प्रतिषेधो वक्तव्यः स्यात् । चुकुषे पादः स्वयमेव । ररञ्जे वस्त्रं स्वयमेव । कोषीषीष्ट पादः स्वयमेव । रङ्क्षीष्ट वस्त्रं स्वयमेव । क्रियमाणे चापि सार्वधातुकग्रहणे कर्तीह कुष्णानाः पादा इति । अत्रापि प्राप्नोति । श्यना च स्यादीनां बाधनं प्राप्नोति । कोषिष्यते पादः स्वयमेव । अकोषि पादः स्वयमेव । रङ्-

---

भूषा । अण्यन्तार्थं च भूषाग्रहणं ण्यन्तानां च वक्ष्यमाणेन यक्चिणोः प्रतिषेधस्य सिद्धत्वात् तेनालं कुरुते स्वयमेव कन्या अलमकृत कन्येति भवति । अवकिरतइति । हस्तिनं कश्चित्पांस्वादिनावकिरति तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते । चिकीर्षतइति । करोतिक्रियापेक्षमत्र कर्मस्थाक्रियत्वमिच्छा तु कर्तृस्थैवार्थाच्च करोतेः प्राधान्यं तदर्थत्वादिच्छाया. ॥ ८७ ॥

नतु ॥ यच्किणोरिति । आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थास्सकर्मका भवन्ति तदा कर्मवद्भावात् प्राप्तौ यच्किणौ प्रतिषिध्येते। यथा विकुर्वते सैन्धवा वल्गन्तीत्यर्थः । तान् यदा अन्यो वल्गयति तदा तेषां कर्मत्वम् । पुनस्सौकर्यातिशयात्कर्तृत्वविवक्षायां विकुर्वते सैन्धावाः स्वयमेव व्यकृषत सैन्धवाः स्वयमेवेति यच्किणौ न भवतः । उत्पुच्छते गौरित्यत्राप्यन्तर्भावितण्यर्थत्वात्कर्मवद्भावाद्यक्चिणोः प्राप्तिः । ब्रूते कथेति । वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम् ॥८६॥

कुषिरजोः ॥ यकि प्राप्ते श्यन्विधीयते तेन श्यनि अनित्यादिरित्याद्युदात्तं पदं भवति शप्श्यनोर्नित्यमिति नित्यश्च नुमागमः कुष्यन्ती जङ्घेति । सार्वधातुकवचनमिति । सार्वधातुके विषयभूते श्यन् परस्मैपदे भवत इत्यर्थः । कुष्णाना इति । ताच्छील्यवयोव-

क्ष्यते वस्त्रं स्वयमेव । अरञ्जि वस्त्रं स्वयमेव । यत्तावदुच्यते सार्वधातुकग्रहणं कर्तव्यमिति । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । सार्वधातुके यगिति । यदि तदनुवर्तते । पूर्वस्मिन् योगे किं समुच्चयः ले च सार्वधातुके चेति । आहोस्विल्लग्रहणं सार्वधातुकविशेषणम् । किं चातः । यदि समुच्चयः कतीह भिन्दानाः कुसुला इत्यत्रापि प्राप्नोति । अथ लग्रहणं सार्वधातुकविशेषणं लिङ्लिटोर्न सिध्यति । बिभिदे कुसूलः स्वयमेव । भित्सीष्ट कुसूलः स्वयमेवेति । अस्तु लग्रहणं सार्वधातुकविशेषणम् । ननु चोक्तं लिङ्लिटोर्न सिध्यतीति । लिङ्लिड्ग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् । कास्प्रत्ययादाममन्त्रे लिटि लिङ्याशिष्यङिति च । एवं च कृत्वा सोप्यदोषो भवति । यदुक्तं कतीह कुष्णानाः पादा इत्यत्रापि प्राप्नोतीति । इहापि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते । यदप्युच्यते श्यना च स्यादीनां बाधनं प्राप्नोतीति । यक्प्रतिषेधसंबन्धेन श्यनं वक्ष्यामि । दुहस्नुनमां यक्चिणौ । ततः कुषिरजोः प्राचाम् । कुषिरजोः प्राचां यक्चिणौ न भवतः । ततः श्यन् परस्मैपदं चेति । यथैव तर्हि यको विषये श्यन् भवति । एवं चिणोपि विषये प्राप्नोति । अकोषि पादः स्वयमेव । अरञ्जि वस्त्रं स्वयमेव । एवं तर्हि द्वितीयो योगविभागः करिष्यते । न दुहस्नुनमां चिण् भवति ततो यक् । यक् च न भवति दुहस्नुनमाम् । ततः कुषिरजोः प्राचां यक् न भवति । ततः श्यन् परस्मैपदं चेति । अथ वा अनुवृत्तिः करिष्यते । स्यतासी लृलुटोः च्लिलुङि च्लेः सिज् भवतीति । कर्तरि शप् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति । दिवादिभ्यः श्यन् स्यतासी लृलुटोः च्लि लुङि च्लेः सिज् भवतीति । कुषिरजोः प्राचां श्यन् परस्मैपदं च स्यतासीलृलुटोः च्लि लुङि च्लेः सिज् भवतीति । अथ वान्तरङ्गाः स्यादयः । कान्तरङ्गता । लावस्थायामेव स्यादयः । सार्वधातुके श्यन् ॥

धातोः ॥ ९१ ॥ आकुतोयं धात्वधिकारः । किं प्राग्लादेशात् । आहोस्विद् आतृतीयाध्यायपरिसमाप्तेः । धात्वधिकारः प्राग्लादेशात् * । प्राग्लादे-

---

चनेति चानश् । तत्र श्यन् प्राप्नोति परस्मैपदं चान्वाचयशिष्टं मन्यते । श्यना चेति । विशेषविहितत्वादिति भावः । यक्प्रतिषेधसम्बन्धेनेति । तेन यत्र यकः प्राप्तस्य प्रतिषेधस्तत्र श्यन्परस्मैपदं भवतो नान्यत्रेति स्यादिविषये न भवतः । लावस्थायामेवेति । अकृतेष्वेव लादेशेषु विशेषविहिताः स्यादयो भवन्ति पूर्वं तैश्च श्यनो विरोधाद् बाधितत्वात् संनियोगशिष्टं परस्मैपदमपि न भवति ॥ ६० ॥

धातोः ॥ स्वरितत्वप्रतिज्ञानादधिकारत्वमस्य ज्ञायते न त्ववधिविशेषः । अथापि स्वरिते सति नाधिकारो भवतीति व्याख्यानम् । तथापि दुर्लक्ष्यत्वान्न ज्ञायते क्व स्वरितत्वं धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातमिति पृच्छति आकुत इति । आद्यो योग

शाद्धात्वधिकारः। लादेशे हि व्यवहितत्वादप्रसिद्धिः *। अनुवर्तमाने हि लादेशे धात्वधिकारे व्यवहितत्वादप्रसिद्धिः स्यात्। किं च स्यात्। आद्ये योगे न व्यवाये तिङः स्युः। आद्ये योगे विकरणैर्व्यवहितत्वात्तिङो न स्युः। पचति पठति। इदमिह संप्रधार्यम्। विकरणाः क्रियन्तामादेशा इति। किमत्र कर्तव्यम्। परत्वादादेशाः। नित्या विकरणाः। कृतेष्वप्यादेशेषु प्राप्नुवन्ति अकृतेष्वपि प्राप्नुवन्ति। नित्यत्वाद्विकरणेषु कृतेषु विकरणैर्व्यवहितत्वादादेशा न प्राप्नुवन्ति। अनवकाशास्तर्ह्यादेशाः। सावकाशा आदेशाः। को ऽवकाशः। य एते लुग्विकरणाः श्लुविकरणाः लिङ्लिटौ च। न स्यादेत्वं टेष्टितां यद्विधत्ते॥ यच्च टित्संज्ञकानां टेरेत्वं विधत्ते। तच्च विकरणैर्व्यवहितत्वादादेशानां न स्यात्। एशः शित्त्वम्॥ एकारश्च शित्कर्तव्यः। किं प्रयोजनम्। शित्सर्वस्येति सर्वस्यादेशो यथा स्यात्। अक्रियमाणे हि शकारे तस्मादित्युत्तरस्यादेः परस्येति तकारस्यैत्वे कृते द्वयोरेकारयोः श्रवणं प्रसज्येत। निवृत्ते पुनर्लादेशे धात्वधिकारे अलोन्त्यस्य विधयो भवन्तीसेकारस्य एकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेणापि शकारं सर्वादेशो भविष्यति। यच्च लोटो विधत्ते॥ यच्च लोटो विधीयते। तच्च विकरणैर्व्यवहितत्वान्न स्यात्। किं पुनस्तत्। लोटो लङ्वत्। एरुः। सेर्ह्यपिच्च। वा छन्दसीति। यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात्॥ किं पुनस्तत्। नित्यं ङितः। इतश्च। तस्थस्थमिपां तांतंतामः। लिङः सीयुट्। यासुट् परस्मैपदेषूदात्तो ङिच्चेति। तस्मात्प्राग्लादेशाद्धात्वधिकारः। यदि प्राग् लादेशाद्धात्वधिकारः। अकारः। अकारः शित्कर्तव्यः। किं प्रयोजनम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अनुवर्तमाने पुनर्लादेशे धात्वधिकारे तस्मादित्युत्तरस्य आदेः परस्येति थकारस्यात्वे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्। पेच यूयं चक्र यूयमिति। ननु च निवृत्तेऽपि लादेशे धात्वधिकारे अलोन्त्यस्य विधयो भवन्तीसकारस्याकारवचने प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारं सर्वादेशो भविष्यति। अस्त्यन्यदकारस्याकारवचने प्रयोजनम्। किम्। वक्ष्यसेतत्। अकारस्याकारवचनं समसंख्यार्थमिति। आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम्। धातोः परस्यार्धधातुकसंज्ञा यथा स्यात्। इह मा भूद् वृक्षत्वं वृक्षतेति। तस्माल्लादेशे धात्वधिकारोनुवर्त्यः। ननु चोक्तमाद्ये योगेन व्यवाये

---

इति। तिप्तस्झीत्यत्र। विकरणैरिति। स्यादयोत्र विकरणा अभिप्रेता न शबादयस्तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात्। यदा तु सार्वधातुक इति विषयसप्तमीपक्षस्तदाऽकृतेपि लादेशे शबादीनां प्राप्तिरस्ति। द्वयोरेकारयोरिति। यद्यप्येकस्यादेशास्तथाप्यादेशश्रवणद्वारेण. तस्यापि श्रवणप्रसङ्ग इति भावः। अकार इति। य-

तिङः स्युरिति। नैष दोषः। आनुपूर्व्यात्सिद्धमेतत्। नात्राकृतेष्वादेशेषु विकरणाः प्राप्नुवन्ति। किं कारणम्। सार्वधातुके विकरणा उच्यन्ते। न चाकृतेष्वादेशेषु सार्वधातुकत्वं भवति। ये तर्हि नैतस्मिन् विशेषे विधीयन्ते। के पुनस्ते। स्यादयः। अत्रापि धातुग्रहणं विहितविशेषणं धातोर्विहितस्य लस्येति। यद्येवं विन्दतीति णलादयः प्राप्नुवन्ति। धातुनात्र विहितं विशेषयिष्यामः। विदिना आनन्तर्यं धातोर्विहितस्य लस्य विदेरनन्तरस्येति। इह तर्हि अजाक्षिष्यत् अजागरिष्यत् इति अभ्यस्ताद् झेर्जुस् भवतीति जुस्भावः प्राप्नोति। अत्रापि धातुना विहितं विशेषयिष्यामः। अभ्यस्तेनानन्तर्यम्। धातोर्विहितस्याभ्यस्तादनन्तरस्येति। अत इस्त्र कथं विशेषयिष्यसि। यदि तावद्धातुग्रहणं विहितविशेषणम्। आकारग्रहणमानन्तर्यविशेषणम्। अलुनन् अपुनन् इस्त्रापि प्राप्नोति। अथाकारग्रहणं विहितविशेषणं धातुग्रहणमानन्तर्यविशेषणम्। अपिबन् अजिघ्रन् इस्त्रापि प्राप्नोति। अस्तु तर्हि धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम्। ननु चोक्तमलुनन्नपुनन्निस्त्रापि प्राप्नोतीति। नैष दोषः। लोपे कृते न भविष्यति। नात्र लोपः प्राप्नोति। किं कारणम्। ईत्वेन बाध्यते। नात्रेत्वं प्राप्नोति। किं कारणम्। अन्तिभावेन बाध्यते। नात्रान्तिभावः प्राप्नोति। किं कारणम्। जुस्भावेन बाध्यते। नात्र जुस्भावः प्राप्नोति। किं कारणम्। लोपेन बाध्यते। लोप ईत्वेन। ईत्वमन्तिभावेन। अन्तिभावो जुस्भावेन। जुस्भावो लोपेनेति चक्रकमव्यवस्था प्रसज्येत। नास्ति चक्रकप्रसङ्गः। न चाव्यवस्थाकारिणा शास्त्रेण भाव्यम्। शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम्। न चात्र हलादिना मुहूर्तमपि शक्यमवस्थातुम्। तावत्येवात्रान्तिभावेन भवितव्यम्। अन्तिभावे कृते लोपः। लोपेन व्यवस्था भविष्यति। यदप्युच्यते एशः शित्त्वमिति। क्रियते न्यास एव। कानि पुनरस्य योगस्य प्रयोजनानि। प्रयोजनं प्रातिपदिकप्रतिषेधः *। प्रातिपदिकप्रतिषेधः प्रयोजनम्। धातोस्तव्यदादयो यथा स्युः प्रातिपदिकान्मा भूवन्निति। नैतदस्ति प्रयोजनम्। साधने तव्यदादयो विधीयन्ते साधनं च क्रियायाः क्रिया-

---

स्थस्य स्थाने विधीयते। थकारस्यात्व इति। ननु पचथ इति स्थिते परत्वादिद् प्राप्नोति। नैष दोषः। अकारो नित्यः कृतेऽपीटि प्राप्नोत्यकृते ऽपि। इदं तु कृते अकारे वलादित्वाभावान्न प्राप्नोतीत्यनित्यः। यद्यपि शब्दान्तरस्य प्राप्त्या अकारस्यानित्यत्वं तथापि कृताकृतप्रसङ्गित्वान्नित्यत्वमस्त्येव। न च शब्दान्तरप्राप्तिकृतमनित्यत्वमिह सर्वत्र शास्त्र आश्रीयते। तावत्येवेति। कृत एव झशब्दे ऽकृत एव विकरण इत्यर्थः। आयन्नादिपूपदेशिवद्वचनादुपदेशकाल एव झस्यान्तादेशेन भाव्यमिति भावः। प्रातिपदिकान्मा भूवन्निति। द्वितीयादिवदिति भावः। साधन इति। प्रकृतिवाच्यान्तरङ्गक्रियासाधन-

भावाद् साधनाभावादसत्यपि धात्वधिकारे प्रातिपदिकात्तव्यदादयो न भविष्यन्ति। स्वपादिषु * । स्वपादिषु तर्हि प्रयोजनम् । स्वपिति । सुपितीति मा भूद् । अङ्गसंज्ञा च * । अङ्गसंज्ञा च प्रयोजनम् । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति धातोरङ्गसंज्ञा सिद्धा भवति । कृत्संज्ञा च * । कृत्संज्ञा च प्रयोजनम् । धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा सिद्धा भवति । उपपदसंज्ञा च * । उपपदसंज्ञा च प्रयोजनम् । तत्रैतास्मिन् धात्वधिकारे यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवतीति उपपदसंज्ञा सिद्धा भवति । कृदुपपदसंज्ञे तावन्न प्रयोजयतः । अधिकारादप्येते सिद्धे । स्वपादिषु तर्हि अङ्गसंज्ञा च प्रयोजनम् । धातुग्रहणमनर्थकं यङ्विधौ धात्वधिकाराद् * । धातुग्रहणमनर्थकं, किं कारणम् । यङ्विधौ धात्वधिकाराद् । यङ्विधौ धातुग्रहणं प्रकृतमनुवर्तते । तच्चावश्यमनुवर्त्यम् । अनधिकारे तद्धङ्गसंज्ञाभावः * । अनधिकारे हि सति अङ्गसंज्ञाया अभावः स्याद् । करिष्यति हरिष्यति । यदि तदनुवर्तते । चूर्णचुरादिभ्यो णिज् भवति धातोश्चेति धातुमात्राण्णिच् प्राप्नोति । हेतुमद्वचनं तु ज्ञापकमन्यत्राभावस्य * । यदयं हेतुमति चेत्याह तज् ज्ञापयत्याचार्यो न धातुमात्राण्णिज्भवतीति । इह तर्हि कण्ड्वादिभ्यो यग् भवतीति धातोश्चेति धातुमात्राद्यक् प्राप्नोति । कण्ड्वादिषु च व्यपदेशिवचनात्सिद्धम् * । यदयं कण्ड्वादिभ्यो यग्भवतीत्याह तज् ज्ञापयत्याचार्यो धातुमात्राद्यग्भवतीति । अथ वा कण्ड्वादीनेव धातुग्रहणेन सम्भन्त्स्यामः कण्ड्वादिभ्यो धातुभ्यो यगिति ॥

---

सम्भवे शब्दान्तरवाच्यबहिरङ्गक्रियासाधने तव्यादयो न भविष्यन्ति। द्वितीयादयस्तु प्रातिपदिकादेव विधीयमानाः शब्दान्तरवाच्यक्रियापेक्ष एव साधने वचनसामर्थ्याद्भवन्तीति भावः । स्वपादिष्विति । ये ऽपभ्रंशरूपाः क्रियावचना आणवयत्यादितुल्यास्तेभ्यस्तव्यादयो मा भूवन् । न हि ते धातवः । पाठेन धातुसंज्ञायास्तेषां निरस्तत्वात् । ततः स्वपितीति प्रयोक्तव्ये सुपितीति प्रयोगो ऽपभ्रंशः ततः प्रत्ययोत्पत्तिर्मा भूदित्यर्थः। अङ्गसंज्ञेति । असति धात्वधिकारे धातूपसर्गसमुदायस्य क्रियाविशेषवाचित्वात्ततः प्रत्ययविधाने तस्यैवाङ्गसंज्ञायां सत्यामडादिप्रसङ्गः प्रास्थितेत्यादावित्यर्थः । तत्र तस्मिन्निति । सत्यस्मिन् धात्वधिकारे तत्रोपपदमित्यत्र तच्छब्देन परामर्श उपपद्यते नान्यथा। यदयमिति । यद्यविशेषेण धातुमात्राण्णिच्स्यात् तदा करणे करोत्यर्थे विधीयमानो हेतुमत्यपि करणे सिद्ध इति पुनस्तत्र णिचं न विदध्यादित्यर्थः । चुरादिग्रहणं तु प्रातिपदिकाद्धात्वर्थ इत्याद्यर्थः स्यादित्यज्ञापकम् । व्यपदेशिवद्वचनादिति । धातुव्यपदेशो विद्यते येषां ते पचादयो धातुपाठपठिता व्यपदेशिनस्तैस्तुल्यं कण्ड्वादयो वर्तन्ते । यकः क्रियत्वेन तेषां धातुत्वानुमानात् । तदयमर्थः । यदि धातुमात्राद्यक् प्रत्ययः स्यात् ततः कण्ड्वादिग्रहणमनर्थकं स्यात् तेषामपि क्रियावाचित्वाद्धातुमात्राद्यकः सिद्धत्वात् । अथ वेति । सामानाधिकरण्येन सम्बन्धे सम्भवति समुच्चयाश्रयणस्यायुक्तत्वादिति

तत्रोपपदं सप्तमीस्थम् ॥ ९२ ॥ स्थग्रहणं किमर्थम् । तत्रोपपदं सप्तमीतीयत्युच्यमाने यत्रैव सप्तमी श्रूयते तत्रैव स्यात् । स्तम्बेरमः । कर्णेजपः । यत्र वैतेन शब्देन निर्देशः क्रियते सप्तम्यां जनेर्ड इति । इह न स्यात् कुम्भकारो नगरकारः । स्थग्रहणे पुनः क्रियमाणे यत्र सप्तमी श्रूयते यत्र च सप्तमी न श्रूयते यत्र वैतेन शब्देन निर्देशः क्रियते तत्र चान्येन शब्देन सप्तमीस्थमात्रे सिद्धं भवति । अथ तत्र ग्रहणं किमर्थम् । तत्रग्रहणं विषयार्थम् * । विषयः प्रतिनिर्दिश्यते । तत्रैतस्मिन्धात्वधिकारे यत्सप्तमीनिर्दिष्टमुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति । उपपदसंज्ञायां समर्थवचनम् * । उपपदसंज्ञायां समर्थग्रहणं कर्तव्यम् । समर्थमुपपदं प्रत्ययस्येति वक्तव्यम् । इह मा भूदाहर कुम्भं करोति कटमिति । अथ क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोति । न वा भवितव्यं महाकुम्भकार इति । भवितव्यं यदेतद्वाक्यं भवति महान् कुम्भो महाकुम्भः महाकुम्भं करोतीति महाकुम्भकारः । यदा त्वेतद्वाक्यं भवति महान्तं कुम्भं करो-

---

भावः । आर्धधातुकसंज्ञार्थोऽप्ययं धात्वधिकारो नोपयुज्यते । यङ्विधावेवोपात्तस्यानुवृत्तस्य विहितविशेषणार्थत्वाज्जुगुप्सते लूयामित्यादावार्धधातुकसंज्ञानिवृत्तेस्सिद्धत्वात् भ्रमिधातोरित्यतो द्वितीयधातुग्रहणानुवर्तनाद्वा ॥ ९१ ॥

तत्रोपपदं ॥ स्थग्रहणमिति । सप्तमीशब्देन साहचर्यात्सूत्रेषु सप्तमीनिर्दिष्टा ग्रहीष्यन्तइति प्रश्नः । यत्रैव सप्तमीति । मुख्यार्थसंभवे गौणग्रहणस्य न्याय्यत्वात्सप्तम्या एवोपपदसंज्ञा स्यात् । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधात् । समासे तु समर्थपरिभाषोपस्थानात्तदन्तस्यैव स्यात् । यत्र वेति । सप्तमीति । यदा रूपग्रहणं तथा सति सप्तम्यां जनेर्ड इत्यादावेव स्यात् । उपसरजादिसिद्ध्यर्थं कुम्भकारादिषु तु नैव स्यादित्यर्थः । स्थग्रहण इति । स्थग्रहणे तु सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिध्यतीत्यर्थः । अथ तत्रग्रहणमिति । धातोरित्यनुवर्तनादस्मिन्नेव धात्वधिकारे उपपदसंज्ञा भविष्यतीति प्रश्नः । तत्रैतस्मिन्निति । तत्रग्रहणेनाधिकारपरामर्शे स्पष्टा प्रतिपत्तिर्भवतीति भावः । अथ वोपपदसंज्ञोत्तरत्राधिकारादत्रैव धात्वधिकारे भविष्यतीति प्रश्नः । प्रतिसूत्रमधिकारआश्रीयमाणे गौरवं स्यात् । तत्रग्रहणे तु क्रियमाणे अनेनैव वाक्येन परिपूर्णत्वात्संज्ञा विधीयतइति प्रतिपत्तिलाघवं भविष्यतीत्युक्तम् । समर्थवचनमिति । इह यदा त्रिकः प्रातिपदिकार्थः स्वार्थद्रव्यलिङ्गलक्षणस्तदा विभक्तिमन्तरेण कर्माऽधिकरणाद्युपपदं न भविष्यतीत्यवश्योत्पत्तव्यं विभक्त्या । ततश्च पदविधित्वात्समर्थपरिभाषाया उपस्थानं भवत्येव । चतुष्कपक्षे पञ्चकपक्षे वा प्रातिपदिकस्यैव कर्मादिवाचित्वात्पदविधित्वाभावात्समर्थपरिभाषानुपस्थानात्समर्थवचनं कर्तव्यमिति भावः । आहर कुम्भमिति । कुम्भशब्दउपपदे करोतेरण् प्रत्ययः स्यात् । उपपदसमासस्तु सामर्थ्याभावान्न स्यात् । महान्तं कुम्भमिति । महत्त्वयुक्तस्य कुम्भस्य करोतिना सामर्थ्यमस्तीति भावः । यदि चात्र प्रत्ययः स्यात् तदा कुम्भशब्दस्य कारशब्देन समासे कृते कारार्थ एकार्थीभावान्महच्छब्देन समासो न स्यात् ।

तीति तदा न भवितव्यम्। यदा च प्राप्नोति। तदा मा भूदिति। यत्तावदुच्यते समर्थग्रहणं कर्तव्यमिति। न कर्तव्यम्। धातोरिति वर्तते। धातोः कर्मण्यण् भवति। तत्र संबन्धादेतद् गन्तव्यं यस्य धातोर्यत्कर्मेति। यदप्युच्यते क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोतीति। उपपदमिति महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्। लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत उपोच्चारितं पदमुपपदमिति। यच्चात्रोपोच्चारितं न तत्पदं यच्च पदं न तदुपोच्चारितम्। यावता चेदानीं पदगन्धोऽस्ति पदविधिरयं भवति। पदविधिश्च समर्थानां भवति। तत्र सामर्थ्यान्न भविष्यति। अथ च्व्यन्तउपपदे किमणा भवितव्यम्। अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमिति। न भवितव्यम्। किं कारणम्। प्रकृतिविवक्षितत्वात्। प्रकृतिविवक्षायां च्विर्विधीयते। तत्सापेक्षम्। सापेक्षं चासमर्थं भवति। न तर्हि इदानीमिदं भवति इच्छाम्यहं काशकटीकारमिति। इष्टमेवैतद्गोनर्दीयस्यानिमित्तोपादानं च *। निमित्तोपादानं च कर्तव्यम्। निमित्तमुपपदं प्रत्ययस्येति वक्तव्यम्। अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः *। अक्रियमाणे हि निमित्तोपादाने अनुपपदे ऽपि प्रत्ययः प्रसज्येत। निर्देश इदानीं किमर्थः स्यात्। निर्देशः संज्ञाकरणार्थः *। यदा उपपदे प्रत्ययस्तदोपपदसंज्ञां वक्ष्यामीति। तर्हि निमित्तोपादानं कर्तव्यम्। न कर्तव्यम्। तत्रवचनमुपपदसंनियोगार्थम् *। तत्रवचनं क्रियते तदुपपदसंज्ञासंनियोगार्थं

---

सुबन्तसमुदायस्याप्यसुबन्तत्वादुपपदसमासे तृतीयान्तस्य सुबग्रहणस्य निवृत्तावपि प्रथमान्तस्यानुवर्तनात्समासाभावः। न तत्पदमिति। पदसमुदायत्वादिति भावः। यच्च पदमिति। महान्तमित्येतत्। कुम्भमित्येतत्तु यद्यपि पदं भवति उपोच्चारितं च तथापि सापेक्षत्वादसामर्थ्यात्प्रत्ययोत्पत्तिनिमित्तं न भवति। अन्वर्थसंज्ञाकरणादेव सप्तमीनिर्दिष्टत्वे ऽपि प्रकृत्यर्थविशेषणानां प्रत्ययार्थानां सद्विशेषणां चोपोच्चारितत्वाभावादुपपदसंज्ञा न भवति। पदविधिरिति। पदनिमित्तत्वात्प्रत्ययविधेरिति भावः। अथ च्व्यन्त इति। इह क्व चित्सापेक्षत्वे प्रत्ययो न भवति महान्तं पुत्रमिच्छतीति। क्व चित्तु भवति माणवकं मुण्डयतीति तत्र संदेहात्प्रश्नः। च्व्यन्तस्य चाव्ययत्वे ऽपि कर्मत्वं मन्यते। सत्त्वभूतत्वस्यानिवर्तनात्। प्रकृतिविवक्षायामिति। प्रकृतिविकारयोरभेदविवक्षायां च्विर्विधीयते। तत्रावश्यं विकारेण प्रकृतिविशेषोपेक्षणीयः। तदनपेक्षायां चेरभावात्। ततश्च यथा महान्तं कुम्भं करोतीत्यत्राण् न भवति एवं मृदं कुम्भीकरोतीत्यादावपीत्यर्थः। काशानकटीकरोतीत्यत्र त्विष्टत्वाण् प्रत्ययो भवति। तस्मिन्नुत्पन्ने काशशब्दात् कृद्योगे षष्ठी तस्याः षष्ठीति समासः। समासरूपस्यैव चेष्टत्वेनोपात्तत्वात् काशानां कटीकार इति वाक्यं न भवतीत्याहुः। निर्देश इति। कर्मणीति सत्सप्तमीविज्ञानात्सत्येव कर्मणि प्रत्ययो भविष्यतीति भावः। निर्देशः संज्ञाकरणार्थ

भविष्यति। कर्मण्यणित्यत्र विधीयते तत्र च प्रत्ययो भवतीति। ननु चान्यत्तत्रग्रहणस्य प्रयोजनमुक्तम्। किम्। तत्रग्रहणं विषयार्थमिति। अधिकारादप्येतत्सिद्धम्॥

कृदतिङ्॥ ९३॥ अतिङिति किमर्थम्। पचति पठति। अतिङिति शक्यमकर्तुम्। कस्मान्न भवति पचति पठतीति। धातोः परस्य कृत्संज्ञा। प्राक् च लादेशाद्धात्वधिकारः। एवमपि स्थानिवद्भावात्प्राप्नोति। अथातिङित्युच्यमाने यावता स्थानिवद्भावः। कथमेवैतत्सिध्यति। प्रतिषेधवचनसामर्थ्यात्। अथ वा तिङ्भाविनो लकारस्य कृत्संज्ञा प्रतिषेधः। किं च स्यात्। यद्यत्र कृत्संज्ञा स्यात्कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा स्यात्। ङ्याप्प्रातिपदिकादिति स्वाद्युत्पत्तिः प्रसज्येत। नैष दोषः। एकत्वादिषु अर्थेषु स्वादयो विधीयन्ते ते चात्र तिङोक्ता एकत्वादय इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति। टावादयस्तर्हि तिङन्ताद् मा भूवन्निति। स्त्रियां टावादयो विधीयन्ते। न च तिङन्तस्य स्त्रीत्वेन योगोस्ति। अणादयस्तर्हि तिङन्तान्मा भूवन्निति। अपत्यादिष्वणादयो विधीयन्ते। न च तिङन्तस्यापत्यादिभिर्योगोस्ति। अथापि कथं चिद्योगः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न तिङन्तादणादयो भवन्तीति। यदयं क्व चित्तद्धितविधौ तिङ्ग्रहणं करोति। अतिशायने तमबिष्ठनौ। तिङश्च। इह तर्हि पचति पठतीति। ह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति। धातोरिति वर्तते। एवमपि चिकीर्षतीत्यत्रापि प्राप्नोति। अत्रापि शपा व्यवधानात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः

---

इति। यथेत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायते तथार्थनिरपेक्षा कर्मणीत्यादिसप्तम्युपपदसंज्ञालिङ्गं सौत्रीति भावः। अर्थापेक्षायां तु सप्तम्यामण्प्रत्ययस्याभिधेयं कर्म स्यात् यथा धःकर्मणि ष्ट्रन्निति तथा च उपपदत्वं न प्रतीयते। अर्थानपेक्षत्वे च सप्तम्या धातोरण् भवति कर्म चोपपदसंज्ञमित्ययमर्थः स्यादिति कर्मणः प्रत्ययोत्पत्तिनिमित्तत्वं न प्रतीयेत। तत्रवचनमिति। तत्रैव सति प्रत्ययो भवति नासतीति तत्रग्रहणाल्लभ्यते। कथमिति चेत् उच्यते। प्रत्यय इत्यत्रानुवर्तते। तत्रायमर्थः। सप्तमीस्थमुपपसंज्ञं भवति। तत्र चोपपदे प्रत्ययो भवतीति॥९२॥

कृदतिङ्॥ स्थानिवद्भाव इति। अतिङिति प्रतिषेधः स्वाश्रयामेव तिङः कृत्संज्ञां बाधितुमुत्सहते नत्वतिदेशशास्त्रेण प्रसक्ताम्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति वचनादिति भाव। प्रतिषेध इति। अन्यथानर्थकः प्रतिषेधः स्यादिति भावः। अथ वेति। तिङ्भावी लकार एव तिङ्शब्देनोच्यतइति मूलोच्छेद एव कृत्संज्ञाप्रतिषेधेन क्रियते। टावादय इति। यथा साधनाश्रयसंख्यानिमित्तैकवचनोत्पत्तिस्तथैव तद्गतलिङ्गाश्रयाष्टावादयः स्युरिति भावः। स्त्रियामिति। शब्दशक्तिस्वाभाव्यात्साधनाश्रयसंख्योपादानमस्ति तिङन्तस्य न लिङ्गोपादानमिति भावः। धातो-

पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेवेति ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥ समाप्तमिदं वासरूपान्तं भाष्यम्।

**वासरूपोऽस्त्रियाम्** ॥ ९४ ॥ कथमिदं विज्ञायते स्त्रियामभिधेयायां वाऽसरूपो न भवतीति आहोस्वित् स्त्रीप्रत्ययेष्विति। किं चातः। यदि विज्ञायते स्त्रियामभिधेयायामिति। लव्या लवितव्या अत्र वासरूपो न प्राप्नोति। अथ विज्ञायते स्त्रीप्रत्ययेष्विति। व्यावक्रोशी व्यावक्रुष्टिरिति न सिध्यति। एवं तर्हि नैवं विज्ञायते स्त्रियामभिधेयायां नापि स्त्रीप्रत्ययेष्विति। कथं तर्हि स्त्रीग्रहणं स्वरयिष्यते। तत्र स्वरितेनाधिकारगतिर्भवतीति स्त्रियामित्यधिकृत्य ये प्रत्यया विहितास्तेषां प्रतिषेधो विज्ञास्यते। किमर्थं पुनरिदमुच्यते। असरूपस्य वावचनमुत्सर्गस्य बाधकविषये ऽनिवृत्त्यर्थम् *। असरूपस्य वावचनं क्रियते उत्सर्गस्य बाधकविषये ऽनिवृत्तिर्यथा स्यात्। तव्यत्तव्यानीयर उत्सर्गास्तेषाम् अजन्ताद्यदपवादः। चेयं चेतव्यमित्यपि यथा स्यात्। नैतदस्ति प्रयोजनम्। अजन्ताद्यद्विधीयते। हलन्तात् ण्यद्विधीयते। एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च। उच्यते च तव्यदादयस्ते वचनाद्भविष्यन्ति। एवं तर्हि ण्वुल्तृचावुत्सर्गौ पचादिभ्योऽजपवादः। पचतीति पचः पक्ता पाचक इत्यपि यथा स्यात्। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्। अजपि सर्वधातुभ्यो वक्तव्य इति। एवं तर्हि ण्वुल्तृजच उत्सर्गाः। तेषामिगुपधात्कोऽपवादः। विक्षिपः विलिखः

---

रिति। धात्वादेरित्यतः। एकादेशइति। ननु स्थानिवद्भाव बाधित्वा परत्वादन्तवद्भावेन भाव्यम्। नैष दोषः। परशब्दस्येष्टवाचित्वात् स्थानिवद्भाव एवान्तवद्भावस्य बाधक। नन्वतिङिति प्रत्याख्यायमाने पचेरन्निति प्रातिपदिकान्तत्वान्नकारलोपः प्राप्नोति। झस्य रन्निति नकारोच्चारणसामर्थ्यान्न भविष्यति। इह तर्हि चिचीयादिति कृद्यकारत्वाद्दीर्घो न प्राप्नोति। एषोप्यदोषः। सार्वधातुकप्रतिषेधो ज्ञापयत्यकृदिति प्रतिषेधस्तिङो न भवतीति। यदि हि स्यात् सुनुयाच्चिनुयादित्यादावपि सार्वधातुके कृत्प्रतिषेधेन दीर्घो न भविष्यतीति पृथक् सार्वधातुकप्रतिषेधो ऽनर्थक स्यात् ॥९३॥ इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

वासरूपोऽस्त्रियाम् ॥ कथमिति। स्त्रियामित्यभिधेयसप्तमी वा स्यात् स्त्रियामित्यस्यैव वास्वरूपस्य निषेधः स्यात् स्त्रियामित्युच्चार्य ये प्रत्यया विधीयन्ते तेषु वासरूपो न भवतीति संदिहानः पृच्छति लव्येति। अचो यदिति यता तव्यादीनां नित्यं बाधनं प्राप्नोतीत्यर्थः। व्यावक्रोशीति। कर्मव्यतिहारे णच् स्त्रियामिति णचा क्तिनो बाधः प्राप्नोतीत्यर्थः। स्त्रियामित्यधिकृत्येति। स्त्रियां क्तिन्नित्यस्मिन्नधिकारे ये उत्सर्गापवादास्ते-

विक्षेप्ता विक्षेपक इसपि यथा स्यात् । अस्ति प्रयोजनमेतत् । किं तर्हीति । तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते * । तत्रोत्पत्तिर्विभाषा प्राप्नोति यथा तद्धिते । अस्तु । यदा विक्षिपो क्लिख इत्येतन्न तदा विक्षेप्ता विक्षेपक इत्येतद्भविष्यति। यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् । किं कारणम् । यथा तद्धितइत्युच्यते । तद्धितेषु च सर्वमेवोत्सर्गापवादं विभाषा उत्पद्यते वा न वा । सिद्धं त्वसरूपस्य बाधकस्य वावचनात् * । सिद्धमेतत् । कथम् । असरूपस्य बाधकस्य वावचनात् । असरूपो वा बाधको भवतीति वक्तव्यम् । सिध्यति। सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धितइति । नैष दोषः । अस्ति कारणं येन तद्धितेषु विभाषोत्पत्तिर्भवति । किं कारणम् । प्रकृतिस्तत्र प्रकृत्यर्थे वर्तते अन्येन च शब्देन प्रत्ययार्थोऽभिधीयते । इह पुनर्न केवला प्रकृतिः प्रकृत्यर्थे वर्तते । नचान्यः शब्दोऽस्ति यस्तमर्थमभिदधीतेति कृत्वा तेनानुत्पत्तिर्न भविष्यति । अथ वा समयः कृतः । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति । एतस्मात्समयादनुत्पत्तिर्न भविष्यति । ननु च य एव तस्य समयस्य कर्ता स एवेदमप्याह । यद्यसौ तत्र प्रमाणमिहापि प्रमाणं भवितुमर्हति । प्रमाणमसौ तत्र चेह च । सामर्थ्यं त्विह द्रष्टव्यं शब्दानां प्रयोगे । न चानुत्पत्तौ सामर्थ्यमस्ति । ततोऽनुत्पत्तिर्न

---

स्त्वपवाद उत्सर्गस्य बाधक एवेत्यर्थः । तत्रोत्पत्तिवाप्रसङ्ग इति । वा सरूप इत्येतावच्छ्रूयते । तत्र वाग्रहणेन किं भावो विकल्प्यताम् । असरूपोऽपवादो वा भवति पक्षे न भवतीति। अथ बाधकत्वं विकल्प्यतां वा बाधको भवति पक्षे न बाधक इति । तत्रान्तरङ्गत्वात्सत्ताया एव विकल्पः स्यात् । यथोक्तम् । यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्ती पर इति । न तु बहिरङ्गस्य बाधकत्वस्येत्युत्पत्तेरेव विकल्पः स्यात्पक्षे तु न कश्चित् प्रत्यय उत्पद्येतेत्यर्थः। अस्त्विति। बाधकाभावे उत्सर्गस्यानिवार्यत्वादिति भावः। यद्येतदिति। अपवादशास्त्रेणोत्सर्गशास्त्रस्य बाधितत्वादपवादाभावपक्षेऽप्युत्सर्गस्याप्रवर्तनादिति भावः। तत्र यथा अत इञिति विकल्पितेनेञा मुक्ते पक्षे ऽण् न भवति अपि तु वाक्यमेव। तथेहाप्यपवादाभावपक्षे प्रकृतिरेव कर्त्रादीनर्थानभिदध्याद् यथाक्षिचिदित्यादौ क्विबादिलोपे कृते। सिद्धं त्विति। बाधकत्वे विकल्पिते यत्र पक्षेऽपवादस्य बाधकत्वं नास्ति तत्र बाधकत्वाभावादुत्सर्गः प्रवर्तते। अन्येनेति। दक्षस्यापत्यमित्यादावपत्यादिशब्देनेत्यर्थः। इह पुनरिति। केवला प्रकृतिः स्वार्थमपि नाभिधत्ते किंपुनः कर्त्रादिकमर्थमभिधास्यति। तथाहि। प्रकृतिप्रत्ययसमुदाये प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यां प्रकृतिः प्रकृत्यर्थे वर्तते प्रत्ययस्तु प्रत्ययार्थेइत्युच्यतेअनुत्पन्नप्रत्यया तु प्रकृतिर्न कञ्चिदर्थं गमयति । अथापि हि क्षिपेः कर्तेति कर्त्रादिशब्दाः प्रयुज्यन्ते तथापि करोति क्रियापेक्षमपि कर्तृत्वं प्रतीयेत न तु क्षिपिक्रियापेक्षमेव तस्मात्सामर्थ्याद् बाधकत्वं बहिरङ्गमपि विकल्प्यते। य एवेति । समयस्यायं बाधकोऽस्तिन्विति भावः । सामर्थ्यमिति ।

भविष्यति । कथं तर्हि तद्धितेष्वनुत्पत्तौ सामर्थ्यं भवति । अन्येन प्रत्ययेन सामर्थ्यम् । केन । षष्ठ्या । अथ वा रूपवत्तामाश्रित्य वाविधिरुच्यते । न चानुत्पत्ती रूपवती तेनानुत्पत्तिर्न भविष्यति । एवमपि कुत एतत् । अपवादो विभाषा भविष्यति न पुनरुत्सर्ग इति । नैतदस्ति विशेषो यदपवादो विभाषा स्यादुत्सर्गो वा । अपि च सापेक्षोयं निर्देशः क्रियते वासरूप इति । न चोत्सर्गवेलायां किं चिदपेक्ष्यमस्ति । अपवादवेलायां पुनरुत्सर्गोपेक्ष्यते । तेन यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भविष्यति । कः पुनरसौ । अपवादः । यदि यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भविष्यति । कः पुनरसौ । अपवादः । यदि यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भवतीत्युच्यते । क्षिप्रवादिषु समावेशो न प्राप्नोति । ग्रामणीः ग्रामणाय इति । न ह्येते रूपवन्तः । एतेपि रूपवन्तः । कस्यामवस्थायाम् । उपदेशावस्थायाम् । यद्येवम् । अनुबन्धविभिन्नेषु विभाषाप्रसङ्गः * । अनुबन्धविभिन्नेषु विभाषा प्राप्नोति । कर्मण्यण् आतोनुपसर्गे क इति । कविषये ऽणपि प्राप्नोति । सिद्धमनुबन्धस्यानेकान्तत्वात् * । सिद्धमेतत् । कथम् । अनुबन्धस्यानेकान्तत्वात् । अनेकान्ता अनुबन्धाः । अथवा प्रयोगे ऽसरूपाणां वाविधिर्न्याय्यः । प्रयोगे लादेशेषु प्रतिषेधः * । प्रयोगे चेल्लादेशेषु प्रतिषेधो वक्तव्यः । ह्योपचदित्यत्र लुङपि प्राप्नोति । श्वः पक्तेत्यत्र लृडपि प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न लादेशेषु वासरूपो भवतीति । यदयं हशश्वतोर्लङ् चेत्याह । अथ वा प्रयोगे ऽसरूपाणां वाविधौ न सर्वमिष्टं संगृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते । कोसौ उपदेशो नाम । उपदेशे चैते ऽसरूपाः । ननु चोक्तमनुबन्धविभिन्नेषु विभाषाप्रसङ्ग इति । परिहृतमेतत् । सिद्धमनुबन्धस्यानेकान्तत्वादिति । अथैकान्तेषु दोष एव । एकान्तेषु

---

अर्थप्रत्यायनाय शब्दाः प्रयुज्यन्ते न च प्रत्ययस्यानुत्पत्तावर्थः प्रत्याययितुं शक्यतइत्यर्थः । पूर्वस्मिन् परिहारे प्रकृतेरेव केवलायाः स्वार्थमात्राभिधानेपि सामर्थ्यं नास्तीत्युक्तम् । उत्तरत्र तु समयात् प्रयोगएव केवलाया नास्तीत्युच्यते । कथं तर्हीति । समयात् केवलस्य प्रातिपदिकस्य तद्धितानुत्पत्तौ साधुत्वं न प्राप्नोतीत्यर्थः । अन्येनेति । दक्षस्यापत्यमिति षष्ठ्यन्तस्य प्रातिपदिकस्य प्रयोगो न केवलस्य, इह तु कृदनुत्पत्तौ सत्यां केवल एव धातुः स्यात्तस्य च समयात् प्रयोगाभावः । अथ वेति । असरूपशब्देन भिन्नरूप उच्यते । तस्य च भिन्नरूपत्वं रूपवदुत्सर्गापेक्षया भवतीति स एव पक्षे ऽभ्यनुज्ञायते न त्वरूपानुत्पत्तिरित्यर्थः । न चैवास्तीति । उत्सर्गविकल्पे ऽप्राप्तविभाषा अपवादविकल्पे तु प्राप्तविभाषेति न कश्चिद्विशेषः । अपवादवेलायामिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य प्रवृत्तिरेव नास्तीत्यर्थः । उपदेशावस्थायामिति । प्रत्यासत्तिन्यायादुपदेशावस्थायामसारूप्यमाश्रीयते इत्यर्थः । ह्योपचादिति । लङ्य-

च न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति नानुबन्धकृतमसारूप्यं भवतीति। यदयं ददातिदधात्योर्विभाषां शास्ति अथ वाऽसरूपो वा बाधको भवतीत्युच्यते। अपवादश्च नाम अनुबन्धभिन्नो वा भवति रूपान्यत्वेन वा। तेनानेनावश्यं किं चित्त्याज्यं किं चिच्च संग्रहीतव्यम्। तद्यदनुबन्धकृतमसारूप्यं तन्नाश्रयिष्यामः यत्तु रूपान्यत्वेनासारूप्यं तदाश्रयिष्यामः। अथ वा असरूपो वा बाधको भवतीत्युच्यते। सर्वश्चासरूपस्तत्र प्रकर्षगतिर्विज्ञास्यते साधीयो योऽसरूप इति। कश्च साधीयान्। यः प्रयोगे प्राक् च प्रयोगात्। अथवासरूपो वा बाधको भवतीत्युच्यते। न चैवं सति कश्चिदपि सरूपः। त एवं विज्ञास्यामः। क्व चिद्येऽसरूपा इति। अनुबन्धभिन्नाश्च प्रयोगे सरूपाः। अथ कथमिदं विज्ञायते अस्त्रियामिति। किं स्त्रियां न भवतीति आहो स्वित् प्राक् स्त्रिया भवतीति। कश्चात्र विशेषः। स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः *। स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति। क्तः। हसितं छात्रस्य शोभनम्। घञपि प्राप्नोति। ल्युट्। हसनं छात्रस्य शोभनम्। घञपि प्राप्नोति। तुमुन्। इच्छति भोक्तुम्। लिङ्लोटावपि प्राप्नुतः। खलर्थः। ईषत्पानः सोमो भवता। खलपि प्राप्नोति। एवं तर्हि स्त्रियाः प्रागिति वक्ष्यामि। स्त्रियाः प्रागिति चेत् क्त्वायां वावचनम् *। स्त्रियाः प्रागिति चेत्क्त्वायां वावचनं कर्तव्यम्। आसित्वा भुङ्क्ते। आस्यते भोक्तुमित्यपि यथा स्यात्। कालादिषु तुमुन्विधाने वावचनम् *। कालादिषु तुमुन्विधाने वावचनं कर्तव्यम्। कालो भोजनस्येत्यपि यथा स्यात्। अर्हे तृज्विधानम् *। अर्हे तृज् विधेयः। इमे अर्हे कृत्या विधीयन्ते ते विशेषविहिताः सामान्यविहितं तृचं बाधेरन्। नैष दोषः। भावकर्मणोः कृत्या विधीयन्ते कर्तरि तृच्। कः प्रसङ्गो यद्भावकर्मणोः कृत्याः कर्तरि तृचं बाधेरन्। एवं तर्हि। अर्हे कृत्यतृज्विधानम् *। अर्हे कृत्यतृचो विधेयाः।

---

नच्कस्तकारः प्रत्ययः लुङि त्वपाक्षीदिति इच्छब्द इति भिन्नरूपत्वात्समावेशप्रसङ्ग। यदयमिति। परोक्षे लिडिति लिटा लङः समावेशो ऽसारूप्यात्सिद्ध एवेति नार्थो लङ्विधानेन। विहितस्तु लकाराणामसमावेशं ज्ञापयतीत्यर्थः। अथ वेति। क्विबादयो न संगृहीतास्तेषां प्रयोगे रूपाभावादित्यर्थः। क्व चिद्य इति। प्रयोगइत्यर्थः। उपदेशे सर्वस्यैवासारूप्यमित्यसरूपग्रहणमनर्थकं स्यात्। कथमिति। स्त्र्यधिकारविहितेष्वेव किं प्रतिषेधः परस्तात् स्त्र्यधिकारस्य भवत्येव वासरूपविधिः। अथ स्त्र्यधिकारात् प्राग्वासरूपविधिर्भवति स्त्र्यधिकारेण विच्छिद्यतइति प्रश्नः। लिङ्लोटाविति। लिङ्चेति लिङ् भवत्येव। इच्छार्थेषु लिङ्लोटावित्यत्र तु लिङ्लोटौ सहनिर्देशादत्रापि सहनिर्देशः कृतः। लिङ्चेति नियमाल्लोड् न भविष्यतीति शक्यते वक्तुम्। ननु तुमुन्भावे कर्तृकर्मणोर्लिङ्लोटाविति भिन्नार्थत्वात् कुतो बाध्यबाधकभावः। नैष दोषः।

अयमर्हे लिङ्विधीयते । स विशेषविहितः सामान्यविहितान् कृत्यतृचो वा बाधेत। वासरूपोस्त्रियाम् ॥

कृत्याः ॥ ९५ ॥ कृत्यसंज्ञायां प्राङ् ण्वुल्वचनम् * । कृत्यसंज्ञायां प्राङ् ण्वुल इति वक्तव्यम् । किं प्रयोजनम् । ण्वुलः कृत्यसंज्ञा मा भूदिति । अर्हे कृत्यतृज्ग्रहणं तु ज्ञापकं प्राङ् ण्वुल्वचनानर्थकस्य * । कृत्यतृचश्चेति तृज्ग्रहणं करोति तज् ज्ञापयत्याचार्यः प्राङ् ण्वुलः कृत्यसंज्ञा भवतीति । एवमपि ण्वुलः कृत्यसंज्ञा प्राप्नोति । योगापेक्षं ज्ञापकम् ॥

तव्यत्तव्यानीयरः ॥ ९६ ॥ केलिमर उपसंख्यानम् * । केलिमरउपसंख्यानं कर्तव्यम् । पचेलिमा माषाः, पक्तव्याः । भिदेलिमाः सरला, भेत्तव्याः । वसेस्तव्यत्कर्तरि णिच्च * । वसेस्तव्यत्कर्तरि वक्तव्यः णिच्चासौ भवतीति वक्तव्यम् । वसतीति वास्तव्यः । तद्धितो वा * । तद्धिता पुनरेष भविष्यति । वास्तुनि भवो वास्तव्यः ॥

अचो यत् ॥ ९७ ॥ अज्ग्रहणं किमर्थम् । अजन्ताद्यथा स्याद् हलन्तान्मा भूदिति । नैतदस्ति प्रयोजनम् । हलन्ताण्ण्यद्विधीयते स बाधको भविष्यति यथैव तर्हि ण्यद्यतं बाधते । एवं तव्यादादीनपि बाधेत । अज्ग्रहणे पुनः क्रियमाणे अजन्ताद्यद्विधीयते हलन्ताण्ण्यद्विधीयते । एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च । उच्यते च तव्यदादयः ते वचनाद्भविष्यन्ति । नैतदस्ति प्रयोजनम् । वासरूपेण तव्यदादयो भविष्यन्ति । इदं तर्हि प्रयोजनम् । अजन्तभूतपूर्वमात्रादपि यथा स्यात् । लव्यम् । पव्यम् । आर्द्धधातुकसामान्ये गुणे कृतेपि प्रत्ययसामान्येपि च वान्तादेशे कृते हलन्तादिति ण्यत् प्राप्नोति । तथा दित्स्यं धित्स्यम् । आर्द्धधातुकसामान्ये अकारलोपे कृते हलन्तादिति ण्यत् प्राप्नोति । अज्ग्रहण-

---

भावेपि लिङ्लोटोरस्ति विधानमिति तदपेक्षया बाध्यबाधकभावोभिमतः । आस्यते भोक्तुमिति । भोजनार्थत्वादासनस्य पौर्वकाल्यमात्रं गम्यते इति समानविषयत्वाद् बाध्यबाधकभावप्रसङ्गः । क्त्वाभावे तत्रैव च लकारोत्पत्तिरत्रेति समानार्थत्वमपि विद्यते । तत्रायं निर्णयः । स्त्र्यधिकारस्य परस्तादपि वासरूपविधिर्भवति । अर्हे कृत्यतृचश्चेत्यत्र तु कृत्यतृज्ग्रहणेन तस्यानित्यत्वं ज्ञाप्यते ॥ ९४ ॥

कृत्याः ॥ कृत्या इत्येतावत् सूत्रयित्वाह कृत्यसंज्ञायामिति । योगापेक्षमिति । ण्वुल्तृचावित्येतस्माद्योगात् प्राक् कृत्यसंज्ञाधिकार इत्येवं तृज्ग्रहणेनानुवाद्यत इत्यर्थः॥ ९५ ॥

तव्यत्तव्या ॥ केलिमर इति । कर्मकर्तरि चायं कैश्चिदिष्यते । भाष्यकारेण तु कर्मणि प्रदर्शितः । वास्तुनि भव इति । दिगादित्वाद्यत्प्रत्ययः । नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कर्तव्यमिति मन्यते । यथोक्तम् । उपादायापि ये हेयास्तानुपायान् प्रचक्षते । उपायानां च नियमो नावश्यमवतिष्ठ इति ॥ अत्रास्तव्य इत्यत्र स्वरभेदापि

सामर्थ्याद्यदेव भवति । यतिजनेरुपसंख्यानम् * । यतिजनेरुपसंख्यानं कर्तव्यम्। जन्यं वत्सेन । असत्पमिदमुच्यते । तकिशसिचातियतिजनीनामुपसंख्यानमिति वक्तव्यम्। तकि तक्यम् । शसि शस्यम् । चाति चत्यम् । यति यत्यम् । जनि जन्यम्। हनो वा वधच * । हन्तेर्वा यद्वक्तव्यः । वधइत्ययं चादेशः । वध्यः घातः । ताद्धितो वा * । तद्धितो वा पुनरेष भविष्यति । वधमर्हतीति वध्यः । यदि तद्धितः समासो न प्राप्नोति । असिवध्यो मुसलवध्य इति । यदि पुनः सति साधने कृतेति वा पादहारकाद्यर्थमिति समासः सिद्धो भवति । यदि पुनरसिवधशब्दादेवोत्पत्तिः स्यात् । असिवधमर्हतीति । नैवं शक्यं वक्तुम् । स्वरे हि दोषः स्यात् । असिवध्यः । एवं स्वरः प्रसज्येत । असिवध्य इति चेष्यते । अचो ॥

गदमदचरयमश्चानुपसर्गे ॥ १०० ॥ अनुपसर्गाच्चरेराङि चागुरौ । अनुपसर्गाच्चरेरिसत्राङि चागुराविति वक्तव्यम् । आचर्यो देशः । अगुराविति किमर्थम् । आचार्य उपनयमानः । गदमद ॥

अर्यः स्वामिवैश्ययोः ॥ १०३ ॥ स्वामिन्यन्तोदात्तत्वं च * स्वामिन्यन्तोदात्तत्वं च वक्तव्यम् । अर्यः स्वामी ॥

अजर्यं सङ्गतम् ॥ १०५ ॥ सङ्गतमिति किं प्रत्युदाह्रियते । अजरः कम्बलः अजरिता कम्बल इति । किं पुनः कारणं कर्तृसाधन एव प्रत्युदाह्रियते न भावसाधनः प्रत्युदाहार्यः । एवं तर्हि, अजर्यं कर्तरि * । अजर्यं कर्तरीति वक्तव्यम् । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । गत्यर्थानां क्तः कर्तरि विधीयते न योगाद् अजर्यं कर्तरि भविष्यति । गत्यर्थानां क्तः कर्मण्यपि विधीयते तेन योगादजर्यं कर्मण्यपि प्राप्नोति । जीर्यतिरकर्मकः । भावे तर्हि प्राप्नोति । संगतग्रहणमिदानीं किमर्थं स्यात् । कर्तृविशेषणं संगतग्रहणं संगतं कर्तृ चेद्भवतीति । तद्यथा हृषेर्लोमस्विति लोमानि चेत्कर्तॄणि भवन्ति । अजर्यम् ॥

---

नास्ति न कृत्यो केष्णुजिति यदन्तोदात्तत्वं विधीयते तदेव यततोश्चातदर्थइत्यनेन ॥ ९९ ॥

अचो यत् ॥ यति जनेरिति । यतो नाव इति स्वरार्थं जनेर्यद्विधानम् । जन्यमिति तु ण्यतापि सिध्यति । जनिवध्योश्चेति वृद्धिप्रतिषेधात् । वधमर्हतीति । दण्डादिभ्य इति यत्प्रत्ययः । यदि तद्धित इति । तेन सह समासस्य लक्षणाभावात् । स्वरे हि दोष इति । असिवधशब्दाद्यति सति तित् स्वरितमिति स्वरितः प्रसज्येत । कृदन्तेन तु समासे कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तो भवति । न चासिवधशब्दात् प्राप्नोति । यद्दण्डादिषु केवलवधशब्दस्य पाठात्तदन्तविध्यभावाच्च ॥ ९७ ॥

अजर्यम् ॥ तयोरेवेति वचनाद्भावेऽजर्यशब्दः प्राप्नोति । अजर्यं सङ्गतेनेति । कर्तरि च सङ्गतइष्यते अजर्यमार्यसङ्गतमित्यतः पृच्छति किं प्रत्युदाह्रियतइति । अजर इति । कर्तर्ययं प्रत्ययो निपात्यते । ततो ह्यङ्गविकलतापरिहाराय कर्तैव प्रत्युदाहरणे प्रदर्शनीय

वदः सुपि क्यप् च ॥ १०६ ॥ वदः सुप्यनुपसर्गग्रहणम् * । वदः सुप्यनुपसर्गग्रहणं कर्तव्यम् । इह मा भूत् । प्रवाद्यं संवाद्यम् । तत्तर्हि कर्तव्यम् । न कर्तव्यम् । अनुपसर्ग इति वर्तते । एवं तर्ह्यन्वाचष्टे अनुपसर्ग इत्येवं वर्तत इति । नैतदन्वाख्येयमधिकारा अनुवर्तन्त इति । एष एव च न्यायो यदुताधिकारा अनुवर्तेरन्निति ॥

भुवो भावे ॥ १०७ ॥ भावग्रहणं किमर्थम् । कर्मणि मा भूदिति । नैतदस्ति प्रयोजनम् । भवतिरकर्मकः । अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति । तेनानुभाव्यमामन्त्रणमित्यत्रापि प्राप्नोति । एतदपि नास्ति प्रयोजनम् । अनुपसर्ग इति वर्तते । उत्तरार्थं तर्हि भावग्रहणं कर्तव्यम् । हनस्त च भावे यथा स्यात् । श्वहत्या वर्तते इह मा भूत् श्वघातो वृषल इति ।

हनस्त च ॥ १०८ ॥ हनस्तश्चित्स्त्रियां छन्दसि * । हनस्त चेत्यत्र चित्स्त्रियां छन्दसि इति वक्तव्यम् । तां भ्रूणहत्यां निगृह्यानुचरणम् । अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृह्यते । स्त्रियामिति किमर्थम् । आघ्नते दस्युहत्याय । छन्दसीति किमर्थम् । श्वहत्या दस्युहत्या वर्तते ॥

एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥ क्यबिति वर्तमाने पुनः क्यब्ग्रहणं किमर्थम् । क्यबेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत् प्राप्नोति । ण्यत् । ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धमिति वक्ष्यति ।

---

इति भाव । गत्यर्थानामिति । यद्यपि सङ्गमनं सङ्गतमिति भावे इह क्तो विहितस्तथापि गत्यर्थानां क्तः प्रत्ययः कर्तरि दृष्टो गतो ग्रामं देवदत्त इति । अतो गत्यर्थधातुसाहचर्यादजर्यमिति कर्तरि निपातनमिति मन्यते । जीर्यतिरकर्मक इति सोपसर्गस्य सकर्मकत्वेपीहानुपसर्गस्य निपातनादकर्मकत्वं बोद्धव्यम् । द्रव्यकर्माभावाश्रयेण चाकर्मकत्वमुक्तम् । कालादिना सर्वस्यैव सकर्मकत्वम् । सङ्गतग्रहणमिति । नहि गमेर्भावस्य जीर्यतेर्भावेन सामानाधिकरण्यमुपपद्यत इति प्रश्नः । कर्तृविशेषणमिति । वैयधिकरण्यमनयोः पदयोः स्यादिति भावः । लोमानि चेदिति । तथा च हतं लोमभिर्हृष्टं लोमभिरिति वैयधिकरण्येपीद्विकल्पो भवति । तस्मात्कर्तरीति वक्तव्यम् । अथ वा सामानाधिकरण्यत्यागेन वैयधिकरणस्याश्रयणस्यायुक्तत्वान्निपातनाद्वा कर्तर्येव प्रत्ययो भवतीति स्थितम् ॥ १०५ ॥

वदः सुपि ॥ नैतदिति । यत्राधिकारस्य विच्छेदो ऽवध्यपरिज्ञानं वा सिंहावलोकनन्यायाश्रयणं वा तत्रावश्यवक्तव्यो विशेषः । एवमादौ तु प्रयोजनाभावादवक्तव्य इत्यर्थः ॥१०६

भुवो भावे ॥ भवतिरकर्मक इति । ननु प्राप्त्यर्थः सकर्मकोस्ति । नैष दोषः । प्राथम्यात्सत्तार्थस्यैवेह ग्रहणात् । ननु कालादिकर्माणि प्राप्नोति । अनभिधानात्कालादिकर्मणि न भविष्यतीति मन्यते ॥ १०७ ॥

हनस्त च । दस्युहत्यायेति । छन्दस्येवैतत् क्यबन्तं नपुंसकं भाषायां तु स्त्रीलिङ्गमेव ॥१०८॥

एतिस्तु ॥ अथवेति । पूर्वस्मात् क्यपो ऽस्य वैलक्षण्यप्रदर्शनाय क्यब्ग्रहणं कृतं

स पूर्वविप्रतिषेधो न पठितव्यो भवति । अथ वा इनस्तश्चित्स्त्रियां छन्दसि चोदितः स न वक्तव्यो भवति । क्यब्विधौ वृञ्ग्रहणम् । क्यब्विधौ वृञ्ग्रहणं कर्तव्यम् । इह मा भूत् वार्या ऋत्विज इति । अञ्जेश्चोपसंख्यानं संज्ञायाम् * । अञ्जेश्चोपसंख्यानं संज्ञायां कर्तव्यम् । आज्यम् । यदि क्यप् । वृद्धिर्न प्राप्नोति । तस्माण्ण्यदेषः । यदि ण्यत् । उपधालोपो न प्राप्नोति । तस्मात् क्यबेवैषः । ननु चोक्तं वृद्धिर्न प्राप्नोति । आङ्पूर्वस्य प्रयोगो भविष्यति । यद्येवमवग्रहः प्राप्नोति । न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥

ई च खनः ॥ १११ ॥ दीर्घोच्चारणं किमर्थम् । न इ च खन इत्येवोच्येत । का रूपसिद्धिः । खेयम् । आद्गुणेन सिद्धम् । न सिध्यति । षत्वतुकोरसिद्ध इति एकादेशस्यासिद्धत्वात्तुक् प्रसज्येत । नैतदस्ति । पदान्तपदाद्योरेकादेशोसिद्धो नैष तुक् पदान्तपदाद्योरेकादेशस्तस्मादि च खन इत्येव वक्तव्यम् ॥

भृञोऽसंज्ञायाम् ॥ ११२ ॥ भृञो ऽसंज्ञायामिति किमर्थम् । भार्या । भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोन्येन विहितत्वात् *। भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधः अप्रतिषेधः । किं कारणम् । अन्येन विहितत्वात् । अन्येन लक्षणेन स्त्रियां क्यब्विधीयते । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण इति । प्रतिषेध इदानीं किमर्थः स्यात् । प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः * । प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञास्ति तदर्थः प्रतिषेधः

---

तेन पूर्वं क्यप् छन्दसि स्त्रियां चिद्भवति । क्यब्विधाविति । ईडवन्दवृशंसुदुहां ण्यत इति वार्यशब्दस्याद्युदात्तविधानादेतज् ज्ञायते । तत्र हीडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते । तस्माण्ण्यदेष इति । ननु स्वरभेदो भवति । क्यपि सत्याद्युदात्तं पदं ण्यति सत्यन्तस्वरितम् । नैष दोषः । नब्विषयस्यानिसन्तस्येत्याद्युदात्तविधानात् । लक्षणेनेति । संहिताया एव नित्यत्वम् । पदविच्छेदस्य तु पौरुषेयत्वम् । तथा च यत्रार्थनिश्चयाभावस्तत्रावग्रहो न क्रियते । तदुक्तं हरिद्रुरनवगृह्यते इति हरिद्रूरित्यत्र किं हरिशब्द इकारान्तः । अथ हरित्शब्दस्तकारान्त इति सन्देहात् ॥१०९॥

ईच ख ॥ दीर्घोच्चारणे भाष्यकारेण प्रत्याख्याते केचित् प्रश्लेषनिर्देशेन द्वितीय इकारो ये विभाषेत्यात्वस्य पक्षे परत्वात् प्राप्तस्य बाधनार्थ इत्याहुः । तदयुक्तम् । क्यप्सन्नियोगेन विधीयमानस्येत्वस्यान्तरङ्गत्वादात्वस्य तु यकारादावुत्पन्ने विधीयमानस्याङ्गस्य बहिरङ्गत्वाद्विप्रतिषेधाभावात् प्राप्त्यभावात् ॥ १११ ॥

भृञो सं ॥ असंज्ञायां किमर्थमिति । क्रियमाणे प्रतिषेध इष्टं न सिध्यतीति प्रश्नः । भार्येति । गृहिण्या इयं संज्ञेति क्यबभावे ण्यत्प्रत्ययः । अनर्थक इति । भृञ इति प्राप्तेरयं प्रतिषेध आनन्तर्यान्न तु लक्षणान्तरप्राप्तेर्व्यवधानादिति भावः । प्रतिषेध इदानीमिति । प्रतिषेधविधानसामर्थ्याल्लक्षणान्तरेण प्राप्तस्यापि क्यपः

स्यात् । भार्या नाम क्षत्रियाः । सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात् * । सिद्धमेतत् । कथम् । स्त्रियां संज्ञाप्रतिषेधो वक्तव्यः । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । ततो न स्त्रियां भृञ इति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वादिति । नैष दोषः । भाव इति तत्रानुवर्तते । कर्मसाधनश्चायम् । अथ वा य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति । किं तर्हि । प्रत्ययान्तेन चेत्संज्ञा गम्यत इति । अपर आह । संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ॥ संज्ञायां पुंसि दृष्टत्वात्तव भार्याशब्दो न सिध्यति । स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ भाव इति तत्र वर्तते । कर्मसाधनश्चायम् । अथ वा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम् ॥ अथ वा कृत्यल्युटो बहुलमिति । एवमत्रापि ण्यद्भविष्यति । यथा यत्तं यथा जन्यं यथा भित्तिस्तथैव सा ॥ समश्चबहुलम् * । समश्च बहुलमुपसंख्यानं कर्तव्यम् । संभृत्या एव संभाराः । संभार्या एव संभाराः ॥

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ११४ ॥ सूर्यरुच्याव्यथ्याः कर्तरि * । सूर्य रुच्य अव्यथ्य इत्येते कर्तरि निपात्यन्ते । किं निपात्यते । सूर्यः । सृसर्तिभ्यां सरतेरुत्वं सुवतेर्वा रुडागमः ॥ सरणाद्वा सुवति कर्मणीति वा सूर्यः । रुच्य । रोचतेऽसौ रुच्यः । न व्यथतइत्यव्यथ्यः । कुप्यं संज्ञायाम् * । कुप्यं संज्ञयामिति वक्तव्यम् । गोप्यमन्यत् । कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च * । कृष्टपच्यस्यान्तोदात्तत्वं च वक्तव्यं संज्ञायां कर्मकर्तरि चेति वक्तव्यम् । कृष्टे पच्यन्ते स्वयमेव । कृष्टपच्याश्च मे । यो हि कृष्टे पक्तव्यः स कृष्टपाक्यो भवति । राजसूय ॥

---

प्रतिषेधो भविष्यतीति भावः । अस्त्रीसंज्ञेति । संज्ञायतइति संज्ञेति कर्मसाधनोऽत्र संज्ञाशब्दः । ततो न स्त्रियामिति । स्त्रीशब्देनात्र स्तनकेशवती गृह्यते । अन्यथा विधिप्रतिषेधयोर्विषयविभागो न स्यात् । तस्माद्भरणां भृत्येति विधेर्विषयः । लौकिकी तु स्त्री प्रतिषेधस्य । भाव इति तत्रेति । व्रजयजोर्भावे क्यबित्यतः । संज्ञायामिति । संज्ञाशब्दः कर्मसाधनो न गृह्यते किं तर्हि भावसाधनः । तेन प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः । न च भृत्याशब्देन हि गृहिण्यभिधीयतइति क्यपोऽप्रसङ्गः । संज्ञायामिति । भार्या नाम क्षत्रिया इत्यत्रासंज्ञायामिति प्रतिषेधस्य चरितार्थत्वात्सूत्रान्तरेण स्त्रियां संज्ञायां क्यपः प्रसङ्गाद्भार्याशब्दो न सिध्यतीति चोद्यम् । स्त्रीप्रकरणे भावग्रहणानुवर्तनात्कर्मणि क्यबभावाण्ण्यदेव भवतीत्युत्तरम् । यथेति । अजन्ताद्विधीयमानो यद् यथा हलन्तात् कुतश्चिद् भवति बहुलवचनात् । यथा च भित्तिरित्यङ्विषये क्तिन् भवति । एवं भार्येति क्यप्प्रसङ्गे ण्यद्भवतीत्यर्थः ॥ ११२ ॥

प्रत्यपिभ्यां ग्रहेः ॥ ११८ ॥ प्रत्यपिभ्यां ग्रहेश्छन्दसि * । प्रत्यपिभ्यां ग्रहेः छन्दसीति वक्तव्यम् । मत्तस्य न प्रतिगृह्यम् । अनृतं हि मत्तो वदाति तस्मान्नापिगृह्यम् । प्रतिग्राह्यमपिग्राह्यमित्येवान्यत्र । प्रत्यपिभ्याम् ॥

अमावस्यदन्यतरस्याम् ॥ १२२ ॥ कस्यायमनुबन्धः । प्रधानस्य । यदि प्रधानस्य । अमावस्या इत्येवं स्वरः प्रसज्येत । अमावस्या इति चेष्यते । तथा अमावास्याग्रहणेनामावस्याग्रहणं न प्राप्नोति । एवं तर्हि निपातनस्य । यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति श्रोत्रियंश्छन्दोधीतइति । ण्यपवर्गाभावात् ञ्नित्याद्युदात्तत्वं न प्राप्नोति । एवं तर्हि, अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् । तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ अमा ॥

छन्दसि निष्टक्र्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥१२३॥ निष्टक्र्य इति किं निपात्यते । निष्टक्र्यं कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थः। यथा कृतेस्तर्कः कसेः सिकता हिंसेः सिंहः । अपर आह । निष्टक्र्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् । ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥ निष्टक्र्यं चिन्वीत पशुकामः । ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः । ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ ण्यदेकस्मान्निष्टक्र्यः । चतुर्भ्यः क्यप् । देवहूयः प्रणीयः उन्नीयः उच्छिष्यः । चतुर्भ्यश्च यतो विधिः। मर्यः स्तर्या ध्वर्यः खन्यः । ण्यदेकस्मात् । खान्यः । यशब्दश्च । देवयज्या । द्वौ क्यपौ । आपृच्छ्यः प्रतिषीव्यः । ण्यद्विधिश्चतुः । ब्रह्मवाद्यः भाव्यः स्ताव्यः । उपचाय्यपृडम् । उपपूर्वाच्चिनोतेरायादेशोपि निपात्यते । नहि ण्यतैव सिध्यति । हिरण्य

---

अमावस्यत् ॥ प्रधानस्येति । विधीयमानत्वात् प्रत्ययस्य प्राधान्यमिति यत्प्रत्ययो निपात्यतइत्युक्तं भवति । एवं स्वर इति । यतो नाव इति उत्तरपदमाद्युदात्तं स्यात् । अन्तस्वरितं चेष्यते । अमावस्याग्रहणेनेति । शब्दान्तरत्वादमावास्याशब्दस्य ण्यदन्तत्वादमावस्याशब्दस्य यदन्तत्वादिति भावः । एवं तर्हीति । यत्प्रत्यान्तत्वं न निपात्यतइत्यर्थः । ननु तितिप्रत्ययग्रहणं चोदयिष्यते । निरस्तविभागे च निपातनआश्रीयमाणे स्वरितत्वं न सिध्यतीति मत्वाह यदि तर्हीति । एवंजातीयकानीति । निरस्तावयवविभागानीत्यर्थः । अमावसोरिति । वृद्धिभावाभावकृते भेदाश्रयो द्विवचननिर्देशः । निपातयामीति । एकतरस्येति शेषः । एकवृत्तितेति । एका तद्धितवृत्तिरुभयोः सिध्यति एकदेशविकृतस्यानन्यत्वात् । तथा हि ण्यत्यमावास्याशब्दस्य न्याय्यत्वादाकारस्य प्रकृतिर्धर्मकारस्य तु विकारत्वम् ॥ १२२ ॥

छन्दसि कृताद्यर्थ इति ॥ कृतशब्दस्य धातोर्थ आदिः ककारस्तत्प्रयोजनः । आदेरन्तत्वमन्तस्य चादित्वं यथा स्यादित्यर्थः । आद्यन्तयोः परस्पररूपापत्तिर्न तु वर्णान्तररूपापत्तिरिति प्रदर्शनाय कृताद्यर्थ इत्युक्तं भवति ॥ १२३ ॥

इति च । हिरण्य इति च वक्तव्यम् । उपचेयपृडमित्येवान्यत्र ॥

ऋहलोर्ण्यत् ॥ १२४ ॥ पाणौ सृजेर्ण्यद्विधिः * पाणौ सृजेर्ण्यद्विधेयः । पाणिसर्ग्या रज्जुः । समवपूर्वाच्च * समवपूर्वाच्चेति वक्तव्यम् । समवसर्ग्या रज्जुः । लपिदभिभ्यां च * । लपिदभिभ्यां चेति वक्तव्यम् । अपलाप्यम् । अपदाभ्यम् ॥

ओरावश्यके ॥ १२५ ॥ कथमिदं विज्ञायते आवश्यके उपपदे आहोस्विद् द्योत्यइति । कश्चात्र विशेषः । आवश्यकउपपदइति चेद् द्योत्यउपसंख्यानम् * । आवश्यके उपपदे इति चेद् द्योत्ये उपसंख्यानं कर्तव्यम् । पाव्यं लाव्यम् । अस्तु तर्हि द्योत्ये । द्योत्य इति चेत्स्वरसमासानुपपत्तिः * । द्योत्य इति चेत् स्वरसमासानुपपत्तिः प्राप्नोति । अवश्यलाव्यम् । अवश्यपाव्यम् । नैष दोषः । मयूरव्यंसकादित्वात् समासः विस्पष्टादिवत् स्वरश्च । ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धम् * । ओरावश्यके ण्यतः स्तौतेः क्यप् भवति पूर्वविप्रतिषेधेन । ओरावश्यके ण्यद्भवतीत्यस्यावकाशः अवश्यलाव्यम् अवश्यपाव्यम् । क्यपोऽवकाशः स्तुत्यः । इहोभयं प्राप्नोति । अवश्यस्तुत्यः । क्यप् भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तं तत्र क्यबिति वर्तमाने पुनः क्यब्ग्रहणस्य प्रयोजनं क्यबेव यथा स्याद् यदन्यत् प्राप्नोति तन्मा भूदिति ॥

आनाय्यो नित्ये ॥ १२७ ॥ दक्षिणाग्नाविति वक्तव्यम् । आनेयोऽन्यः । आनाय्योऽनित्यइति चेद् दक्षिणाग्नौ कृतं भवेत् । एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ पाय्यनिकाय्ययोः किं निपात्यते । पाय्यनिकाय्ययोरादिपत्वकत्वनिपातनम् * । पाय्यनिकाय्ययोरादिपत्वमादिकत्वं च निपात्यते । मेयं निचेयमित्येवान्यत्र ॥

ऋतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥ कुण्डपाय्ये यद्विधिः * । कुण्डपाय्ये यद्विधेयः । कुण्डपाय्यः क्रतुः ॥

---

ओरावश्यक । कथमिति । किमावश्यकार्थवाचिन्युपपदे प्रत्ययः उत प्रत्ययेन आवश्यके द्योत्यइति प्रश्नः । अवश्यलाव्यमिति । द्वावपूपावित्यादौ गतार्थस्यापि क्व चित् प्रयोगो लोके दृश्यते लाघवं प्रत्यनादरादिति मन्यते । विस्पष्टादिवदिति । यथा विस्पष्टकटुकमित्यत्र मयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरो भवत्येवमवश्यलाव्यमित्यादावपि मयूरव्यंसकादिषु निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थः ॥ १२५ ॥

आनाय्यो ॥ आनाय्योऽनित्य इति । चेदिति । घटादिष्वपि प्रसङ्ग इति शेषः । भवेदिति । सम्भावने लिङ् । निपातनाद्रूढिराश्रीयते । एकयोनाविति । यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिर्दक्षिणाग्निस्तत्रेत्यर्थः । यस्तु वैश्यकुलादानीयते तत्रानाय्यशब्दो न भवति ॥ १२७ ॥

अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥ समूह्य इत्यनर्थकं वचनं सामान्येन कृतत्वात् * । समूह्य इत्यनर्थकं वचनं किं कारणं सामान्येन कृतत्वात् सामान्येनैवात्र ण्यद्भविष्यति ऋहलोर्ण्यदिति । वह्यर्थं तर्हि निपातनं कर्तव्यम् । वहेर्ण्यद्यथा स्यात् । वह्यर्थमिति चेद् उहेस्तदर्थत्वात्सिद्धम् * । उहिरपि वह्यर्थे वर्तते । कथं पुनरन्यो नामान्यस्यार्थे वर्तते । कथमूहिर्वह्यर्थे वर्तते । बह्वर्था अपि धातवो भवन्ति । अस्ति पुनः क्व चिदन्यत्रापि उहिर्वह्यर्थे वर्तते । अस्तीत्याह । ऊहिविग्रहाच्च ब्राह्मणे सिद्धम् * । ऊहिविग्रहाच्च ब्राह्मणे सिद्धमेतत् । समूह्यं चिन्वीत पशुकामः । पशवो वै पुरुषः पशूनेवास्मै तत्समूहति ॥

चित्याग्निचित्ये च ॥ १३२ ॥ अग्निचित्येत्यन्तोदात्तो भावे *। अग्निचित्येति भावेन्तोदात्तो भवति । अग्निचयनमेवाग्निचित्या ॥

ण्वुल्तृचौ॥१३३॥ किमर्थश्चकारः स्वरार्थः। चितोन्तउदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाजयं तत्र नार्थः स्वरार्थेन चकारणानुबन्धेन प्रत्ययस्वरेणैव सिद्धम् । विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः । अप्तृन्तृजिति । तृ इत्युच्यमाने मातरौ मातरः पितरौ पितर इत्यत्रापि प्राप्नोति। स्वसृनप्तृग्रहणं नियमार्थं भविष्यति एतयोरेव योनिसंबन्धयोर्नान्येषां योनिसंबन्धानामिति । सामान्यग्रहणाविघातार्थस्तर्हि । क्व सामान्यग्रहणाविघातार्थेनार्थः। अत्रैव । यदेतत्तृन्तृचोर्ग्रहणमेतत्तृ इति वक्ष्यामि । यदि तृ इत्युच्यते मातरौ मातरः पितरौ पितरः, अत्रापि प्रसज्येत । स्वसृनप्तृग्रहणं नियमार्थं भविष्यति । एतयोरेव योनिसंबन्धयोर्नान्येषां योनिसंबन्धानामिति । तुश्छन्दसि तुरिष्ठेमेयःस्विति चोभयोर्ग्रहणं यथा स्यात् । ण्वुलि सकर्मकग्रहणम् * । ण्वुलि सकर्मग्रहणं कर्तव्यम् । इह मा भूद् आसिता शयितेति । न वा धातुमात्राद्दर्शनाद् ण्वुलः * । न वा वक्तव्यः । किं कारणम् । धातुमात्राद्दर्शनाद् ण्वुलः । धातुमात्राण्ण्वुल् दृश्यते । इमे अस्य आसकाः । इमे अस्य शायकाः । उत्थिता आसका वैश्रवणस्येति । तृजादिषु वर्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम् * । तृजादिषु वर्तमानकालोपादानं कर्तव्यम् । किं कारणम् । अध्यापकवेदाध्याया-

---

अग्नौ ॥ ऊहिविग्रहादिति । वहिसमानार्थेनोहिना ब्राह्मणे समूह्यशब्दस्य निर्वचनं कृतमित्यर्थः ॥ १३१ ॥

ण्वुल्तृचौ ॥ मातराविति । उणादिषु तृप्रत्ययान्ता मात्रादयो निपातिता इति भावः । स्वसृनप्तृग्रहणमिति । नप्तृग्रहणं नियमार्थं स्वसृशब्दस्तु ऋन्प्रत्ययान्तत्वाद्विध्यर्थ एव । सामान्यग्रहणाविघातार्थत्वं चकारस्य स्थितम् । तुश्छन्दसि तुरिष्ठेमेयःस्वित्यत्राप्येतत्प्रयोजनसद्भावात् ॥ १३३ ॥

द्यर्थम् । अध्यापकः वेदाध्यायः । अधीतवत्यध्येष्यमाणे वा मा भूद् इति न वा कालमात्रे दर्शनादन्येषाम् * । न वा वक्तव्यम् । किं कारणम् । कालमात्रे दर्शनादन्येषाम् । कालमात्रे ह्यन्ये प्रत्यया दृश्यन्ते । चर्चापारः शमनीपारः ॥

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ॥ १३४ ॥ अजपि सर्वधातुभ्यः * । अजपि सर्वधातुभ्यो वक्तव्यः । इहापि यथा स्याद् । भवः सव इति । न तर्हीदानीमिदं पचाद्यनुक्रमणं कर्तव्यम् । कर्तव्यं च । किं प्रयोजनम् । पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थं च * । अनुबन्धासञ्जनार्थं तावद् । नदट् नदी । चोरट् चोरी । अपवादबाधनार्थम् । जारभरा श्वपचेति । नन्दिग्रहिः ॥

**इगुपधज्ञाप्रीकिरः कः** ॥ १३५ ॥ इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः * इगुपधेभ्य उपसर्गे को विधेयः । किं प्रयोजनम् । मेषाद्यर्थः । मेषः देवः सेवः । न वा बुधादीनां दर्शनादनुपसर्गे ऽपि * । न वा को विधेयः । किं कारणम् । बुधादीनां दर्शनादनुपसर्गे ऽपि । बुधादीनामनुपसर्गे ऽपि को दृश्यते । बुधः युधः भिद इति । कथं मेषः देवः सेव इति । पचादिषु पाठः करिष्यते ॥

**प्राघ्राध्माधेट्दृशः शः** ॥१३७॥ जिघ्रः संज्ञायां प्रतिषेधः * । जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः। व्याजिघ्रतीति व्याघ्रः । इह केचिच्छस्यैव प्रतिषेधमाहुः । केचिज्जिघ्रभावस्य । किं पुनरत्र न्याय्यम् । शस्यैव प्रतिषेधो न्याय्यः । जिघ्रभावे हि प्रतिषिद्धे केन शे अकारलोपः स्यात् ॥

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च** ॥ १३८ ॥ अनुपसर्गान्नौ लिम्पेः * । अनुपसर्गान्नौ लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवाः । गावि च विन्देः संज्ञायामुपसंख्यानम् * । गावि चोपपदे विन्देः संज्ञायामुपसंख्यानं कर्तव्यम् । गोविन्दः । अस्वल्पमिदमुच्यते गवीति ॥ गवादिष्विति वक्तव्यम् । गोविन्दः अरविन्दः ॥

**ज्वलितिकसन्तेभ्यो णः** ॥ १४० ॥ तनोतेर्ण उपसंख्यानम् *। तनोतेर्ण उपसंख्यानं कर्तव्यम् । अवतनोतीत्यवतानः ॥

**शिल्पिनि ष्वुन्** ॥ १४५ ॥ नृतिखनिरञ्जिभ्य इति वक्तव्यम् । इह मा भूत् । वायकः ॥

**प्रुसृल्वः समभिहारे वुन्** ॥ १४६ ॥ प्रुसृल्वः साधुकारिणि वुन्विधानम् * । प्रुसृल्वः साधुकारिणि वुन्विधेयः । सकृदपि यः सुष्ठु करोति तत्र

---

नन्दि ॥ श्वपचेति । कर्मण्यण् बाध्यते । न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्पक्षे सोऽपि भवति ॥१३४॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

यथा स्याद्‌द्दृशोपि यो दुष्टु करोति तत्र मा भूद् इति । इति श्रीमद्भवत्पत‍ञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

कर्मण्यण् ॥ १ ॥ कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् । इह मा भूत् । आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीति । कर्मणि निर्वर्त्यमानविक्रियमाणे इति चेद् वेदाध्यायादीनामुपसंख्यानम् * । कर्मणि निर्वर्त्यमानविक्रियमाण इति चेद्वेदाध्यायादीनामुपसंख्यानं कर्तव्यम् । वेदाध्यायः चर्चापारः शमनीपारः । यत्र च नियुक्तः * । यत्र च नियुक्तस्तत्र चोपसंख्यानं कर्तव्यम् । छत्रधारः द्वारपालः । हृग्रहिनीवहिभ्यश्च * । हृग्रहिनीवहिभ्यश्चेति वक्तव्यम् । हृ । भारहारः । ग्रहि । कमण्डलुग्राहः । नी । उष्ट्रप्रणायः । वहि । भारवाहः । अपरिगणनं वा * । न वार्थः परिगणनेन । कस्मान्न भवति । आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीति । अनभिधानात् * । अनभिधानादत्र न भविष्यति । अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन * । अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाशः पचतीति पचः । कर्मोपपदस्यावकाशः कुम्भकारः, नगरकारः । इहोभयं प्राप्नोति । ओदनपाचः । कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्या-

---

कर्मण्यण् ॥ निर्वर्त्यमानेति । हरिणा निर्वर्त्यादीनां विशेषो दर्शितः । सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ यस्योपादानकारणं नास्ति तन्निर्वर्त्यं यथा संयोगं करोतीति । यस्यापि सदप्युपादानकारणं न विवक्षितं तन्निर्वर्त्यं यथा घटं करोतीति । यदा तूपादानकारणमेव परिणामित्वेन विवक्ष्यते मृदं घटं करोतीति तदा विकार्यं कर्म । भेदविवक्षायां तु मृदा घटं करोतीति निर्वर्त्यमेव कर्म । विकार्यमपि द्विधम् । प्रकृत्युच्छेदसम्भूतं किंचित्काष्ठादिभस्मवत् । किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति ॥ प्राप्यमपि । क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते इति ॥ तत्र प्राप्यत्वं सर्वस्य कर्मणोस्तिक्रियया प्राप्यमाणत्वादवान्तरविवक्षायां तु त्रैविध्यमुच्यते । वेदाध्याय इति । नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाभावः । छत्रधरा इति । वेदाध्यायादिग्रहणेन छत्रधारादीनां ग्रहणं नास्ति प्रकारार्थेनादिशब्देन सदृशानां शास्त्राध्यायादीनामेव शब्दानां ग्रहणात् । तत्प्राप्यमेव न विकार्यम् । नहि धारणादूर्ध्वं छत्रस्य कश्चित् क्रियाकृतो विशेषः प्रत्यक्षानुमानपरिच्छेद्योस्ति । अनभिधानादिति । नित्यानां शब्दानामिदमन्वाख्यानमात्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नानुशास्यन्त इत्यर्थः । कर्मोपपदस्येति । यदा गणपठितधातुविषय एवाच्प्रत्ययस्तदायं विप्रतिषेधो यदा तु सर्वधातुविषयोऽच्प्रत्ययस्तदा येन नाप्राप्तिन्यायादणप्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोनुपपन्नः । तथा च करोतेरच्प्रत्ययः कृतः शिवशमरिष्टस्य कर इति । त-

वकाशः विक्षिपः विलिखः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति काष्ठभेदः । कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाशः जानातीति ज्ञः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति अर्थज्ञः । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां णः । तस्य कः । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत । कर्मोपपदोऽपि तृतीयः । ण्वुल्तृजचः । तेषामण् । अणः कः । उभयोस्तृतीययोर्युक्तो विप्रतिषेधः । अनुपपदस्यावकाशः लिम्पतीति लिम्पः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति कुड्यलेप इति । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः ण्वुल्तृजचः । तेषां कः । कस्य शः । स यथैव शः कं बाधते एवं कर्मोपपदमपि बाधते । का तर्हि गतिः । मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानित्येवं शः कं बाधिष्यते । कर्मोपपदं न बाधिष्यते । अनुपपदस्यावकाशः सुग्लः सुम्लः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति गोसंदायः बडवासंदायः । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां णः । तस्य कः । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधते । का तर्हि गतिः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्येवमयं को णं बाधिष्यते । कर्मोपपदं न बाधिष्यते । शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च * । शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । शीलि । मांसशीला मांसशीलः । कामि । मांसकामः मांसकामा । भक्षि । मांसभक्षः मांसभक्षा । आचरी । कल्याणाचारः कल्याणाचारा । ईक्षिक्षमिभ्यां च * । ईक्षिक्षमिभ्यां चेति वक्तव्यम् । सुखप्रतीक्षः सुखप्रतीक्षा । कल्याणक्षमः कल्याणक्षमा । किमर्थमिदमुच्यते । पूर्वपदकृतिस्वरत्वं

---

तश्च कुम्भकारादिरपि नाणोऽवकाशः तत्राप्यच्प्रत्ययप्रसङ्गात् । अत एव भाष्यकार
उदाहरणान्तराणि काष्ठभेदादीनि विप्रतिषेधस्य वक्ष्यति । काष्ठभेद इति । सर्वथा-
तुभ्यो विधानादच उत्सर्गस्य काणावपवादौ तयोर्विप्रतिषेधादणेवात्र भवति । स य-
थैव क इति । प्राप्तिमात्रस्य बाध्यत्वमपेक्ष्यैतदुच्यते । यदा तु प्राप्तिविशेषोऽपेक्ष्यते तदा
तु येन नाप्राप्तिन्यायाण्णस्यैव को बाधको न तु कर्मोपपदस्याणः । कः पुनरनयोः प्रत्यय-
योर्विशेषः । उच्यते । कर्मोपपदे के सति नित्यसमासो भवति । अकर्मोपपदे तु विकल्पेन
षष्ठीसमासः स्यात् । नन्वर्थज्ञ इत्यज्ञातोनुपसर्गे क इति कः प्राप्नोति न त्वण् प्रत्ययः
तत्कथमुच्यते कर्मोपपदस्य स एवेति । न हि कुम्भकारः कर्मोपपदस्य विषयः । एवं तर्हि
काणोर्विप्रतिषेधे परत्वादण् कं बाधते अणमपि कर्मोपपदः कोपवादत्वादिति क्रमप्रा
प्त्यैतदुक्तमित्यदोषः । मांसकाम इति । मांसशब्दः सप्रत्ययान्तोन्तोदात्तः कल्याणश-
ब्दश्च लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते

वक्ष्यामि। ईकारश्च मा भूदिति। नैतदस्ति प्रयोजनम्। इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति। तत्र योसौ भक्षयतेरच् तदन्तेन बहुव्रीहिः। एवं तर्हि सिद्धे सति यत्कर्मोपपदं णं शास्ति तज्ज्ञापयत्याचार्यः। समानेर्थे केवलं विग्रहभेदाद् यत्र कर्मोपपदश्च प्राप्नोति बहुव्रीहिश्च। कर्मोपपदस्तत्र भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। काण्डलावः। काण्डानि लावो ऽस्येति बहुव्रीहिर्न भवति। भवति बहुव्रीहिरपि मांसे कामोऽस्य मांसकामः मांसकायक इति वा। न त्वम्भोभिगमा। न त्विदं भवति अम्भोऽभिगमोऽस्या अम्भोभिगमा इति। किं तर्हि। अम्भोभिगमामित्येव भवति। काण्डलावेपि च विग्रहाभावान्न ज्ञापकस्य प्रयोजनं भतीति। नैषोस्ति विग्रहः काण्डानि लावोस्येति। अन्नादायेति च कृतां व्यत्ययश्छन्दसि *। अन्नादायेति च कृतां व्यत्ययश्छन्दसि द्रष्टव्यः। अन्नादायान्नपतये य आहुतिमन्नादां कृत्वा॥

**आतोनुपसर्गे कः॥ ३॥** कविधौ सर्वत्र प्रसारणिभ्यो डः *। कविधौ सर्वत्र प्रसारिणिभ्यो डो वक्तव्यः। ब्रह्मज्य इति। किमुच्यते सर्वत्रेति। अन्यत्रापि। नावश्यमिहैव। क्वान्यत्र। आह्वः प्रह्व इति। के हि संप्रसारणप्रसङ्गः *। के हि सति संप्रसारणं प्रसज्येत। संप्रसारणे कृते संप्रसारणस्य पूर्वत्वे च उवङादेशः। आहुव इत्येतद्रूपं प्रसज्येत। स तर्हि वक्तव्यः। न वक्तव्यः। अस्त्वत्र संप्रसारणम्। संप्रसारणे कृते आकारलोपः क्रियतां पूर्वत्वमिति। किमत्र कर्तव्यम्। परत्वाद् आकारलोपः। न सिध्यति। अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति। एवं तर्हि वार्णादाङ्गं बलीय इत्याकारलोपो भविष्यति। एवं तर्हि। इदमिह संप्रधार्यम्। आकारलोपः क्रियतां संप्रसारणमिति। किमत्र कर्तव्यम्। परत्वादाकारलोपः। नित्यं संप्रसारणं कृतेऽप्याकारलोपे प्राप्नोत्यकृते

---

पूर्वपदप्रकृतिस्वरो विधीयते। भक्षयतेरजिति। परजण्यन्तानामित्येतत्तु मुनित्रयस्य मते नास्ति कल्यादिभ्यः प्रतिषेधएवास्ति। ननु च बहुव्रीहौ सति बहवो भक्षा अस्य बहुभक्ष इत्यत्र बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वं प्राप्नोतीति पूर्वपदप्रकृतिस्वरो न सिध्यति। नैष दोषः। भक्षणं भक्षः बहुषु भक्षोस्येत्येवं व्यधिकरणपदो बहुव्रीहिः करिष्यते तत्रोत्तरपदभूमाभावाद्बहुव्रीहौ प्रकृत्येति स्वरो भविष्यति। काण्डानि लावोऽस्येति। लावयतेरच्। भवति बहुव्रीहिरपीति। तेन ज्ञापनस्य प्रयोजनाभावादण्बाधनार्थमेवेदं वक्तव्यमित्यर्थः। न त्वम्भोभिगमेति। तेनात्रानभिधानाद्बहुव्रीहिर्न भवतीति भावः। नैषोस्तीति। काण्डानि लुनातीति प्रकृत्यर्थाविवक्षायामभावाण्णिचः लूयत इति लवः काण्डानि लवोस्येति विग्रहेण भाव्यमिति भावः। अन्नादायेति। अन्नमत्तीत्यणः प्रसङ्गे ऽच्प्रत्ययः क्रियते तेनान्न अदायेत्येवमवग्रह उपपद्यते॥ १॥

आतोनुपस॥ ब्रह्मज्य इति। ब्रह्म जिनातीति डप्रत्ययः वार्णादाङ्गमित्युक्ते यो ब्रूयात्

पि । आकारलोपोपि नित्यः । कृते पि संप्रसारणे प्राप्नोत्यकृते पि । अनित्य आकारलोपः । न हि कृते संप्रसारणे प्राप्नोति । अन्तरङ्गं हि पूर्वत्वं बाधते । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवाकारलोपस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादाकारलोपः । आकारलोपे कृते संप्रसारणे कृते यणादेशेन सिद्धं रूपमाह्वः प्रह्व इति । एवमपि न सिध्यति । योनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्वो भवति । एवं तर्हि आकारलोपस्यासिद्धत्वादुवङादेशो न भविष्यति । इहापि तर्ह्याकारलोपस्यासिद्धत्वादुवङादेशो न स्याद् जुहुवतुः जुहुवुरिति । अस्त्यत्र विशेषः । अकृतेऽत्रात्वे पूर्वत्वं भवति । इदमिह संप्रधार्यम् । आत्वं क्रियतां पूर्वत्वमिति । किमिह कर्तव्यम् । परत्वात्पूर्वत्वम् । न सिध्यति । अन्तरङ्गत्वादात्वं प्राप्नोति । एवं तर्हीदमिह संप्रधार्यम् । आत्वं क्रियतां संप्रसारणमिति । किमत्र कर्तव्यम् । परत्वादात्वम् । नित्यं संप्रसारणं, कृतेप्यात्वे प्राप्नोत्यकृते ऽपि । आत्वमपि नित्यम् । कृते ऽपि संसाप्ररणे प्राप्नोत्यकृते ऽपि । अनित्यमात्वम् । नहि कृते संप्रसारणे प्राप्नोति परत्वात्पूर्वत्वेन भवितव्यम् । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादात्वमात्वे कृते संप्रसारणम् । एवं तर्हि पूर्वत्वे योगविभागः करिष्यते । संप्रसारणात्परः पूर्वो भवति । तत एङः । एङश्च संप्रसारणात्पूर्वो भवति । किमर्थमिदम् । अकृते आत्वे पूर्वत्वं यथा स्यात् । ततः पदान्तादिति । एङ इत्येव । इहापि तर्ह्यकृतआत्वे पूर्वत्वं स्याद् आह्वः प्रह्वः इति । अस्त्यत्र विशेषः । आकारान्तलक्षणः कप्रत्ययविधिः । तेनानेनावश्यमात्वं प्रतीक्ष्यम् । लिट्

---

समानाश्रयाङ्गवार्णात्त्रिषयमेतादिति नं प्रत्याह एवं तर्हीति । नित्यमिति । संप्रसारेण कृते पूर्वत्वेन भाव्यमित्याकारलोपस्यानित्यत्वं मन्यते । अन्तरङ्गमिति । वार्णादाङ्गं बलीय इत्येतत्तु समानाश्रयाविषयमित्युक्तम् । एवमपि न सिध्यतीति । आह इत्यादिरूपमिति शेषः । योनादिष्टादिति । उकारश्चानादिष्टादचः पूर्वो न भवति । नन्वनादिष्टादचः पूर्वो वकार इति तदादेशस्यापि स्थानिवद्भावादनादिष्टादचः पूर्वत्वं भविष्यति । नैतदस्ति । शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके । आकारलोपस्यासिद्धत्वादिति । असिद्धवदत्राभादित्यनेनेति भाव । जुहुवतुरिति । ह्वेञो लिटि ह्वः संप्रसारणमभ्यस्तस्य चेति संप्रसारणे रूपम् । परत्वादात्वमिति । अशितीति पर्युदासाश्रयेणैतदुक्तं प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्तरङ्गं न चान्तरङ्गबहिरङ्गयोर्युक्तो विप्रतिषेधः । एवं तर्हीति । एङः पदान्तादतीत्ययं योगो विभज्यते एङ इति तेनात्वं बाध्यते पूर्वत्वविधानेन । आकारान्तलक्षण इति । पर्युदासाश्रये ऽपि ह्वा-

पुनरविशेषेण धातुमात्राद्विधीयते । नित्यं प्रसारणं ह्वो यण् वार्णादाङ्गं न पूर्वत्वं हि । योनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्त्वं हि ॥ प्रोवाच भगवान् कात्स्तेनासिद्धिर्यणस्तु ते । आतः कोलिण्नेङः पूर्वः सिद्ध आह्वस्तथा सति ॥

सुपि स्थः ॥ ४ ॥ सुपि स्थो भावे च *। सुपि स्थ इत्यत्र भावे चेति वक्तव्यम् । इहापि यथा स्यात् । आखूत्थो वर्तते । श्येनोत्थः शलभोत्थः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । योगविभागात्सिद्धम् * । योगविभागः करिष्यते । आतोनुपसर्गे को भवति । ततः सुपि । सुपि चातः को भवति । कच्छेन पिबति कच्छपः । कटाहेन पिबति कटाहपः । द्वाभ्यां पिबति द्विपः । ततःस्थः । स्थश्च सुपि को भवति । किमर्थमिदम् । भावे यथा स्यात् । कुतो नु खल्वेतद् भावे भविष्यति न पुनः कर्मादिष्वपि कारकेष्विति । योगविभागादयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे आदिश्यते । अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति । तद्यथा गुप्तिज्किद्भ्यः सन् । यावादिभ्यः कन् इति । सोऽसौ स्वार्थे भवन् भावे भविष्यति ॥

तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥ तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः * । तुन्दशोकयोः परिमृजापनुदोरित्यत्रालस्यसुखाहरण-

---

मश्चेतिज्ञापकादाकारान्तलक्षणे कप्रत्यये कर्तव्ये पूर्वमेवात्वं भवति । ततस्तन्निमित्तः प्रत्यय इति भावः । उक्तार्थसंग्रहार्थश्लोकाः । नित्यं प्रसारणमिति । कृताकृतप्रसङ्गित्वादिति भावः । तत्र कृते पूर्वत्वं क्रियतामाकारलोप इति वार्णादाङ्गमिति वचनादाकारलोपो भवति न तु पूर्वत्वं तत्राकारलोपस्य स्थानिवत्त्वादुवङ् नास्तीति ह्वो यण् प्रवर्तत इत्यर्थः । इतर आह योनादिष्टादिति । तेनासिद्धिरिति । असिद्धवदत्राभादित्याकारलोपस्येत्यर्थः । तस्यासिद्धत्वाद्यणादेशो भवत्वित्यर्थः । जुहुवतुरित्यत्रापि तथैव यण् स्यादित्याह ङः पूर्व इति । आह्व इत्यत्रापि तथैव पूर्वत्वं स्यादित्याह आतः क इति । लिण्नेति । लिड् धातुमात्राद्विधीयते न त्वाकारान्तादेवेत्यर्थः ॥

सुपि स्थः ॥ कच्छेन पिबतीति । अत्र केचिदाहुः । कच्छं पिबतीत्येवमसन्तमप्यवयवार्थमाश्रित्य कर्मोपपदः को विधास्यते किं योगविभागेन । नैतत्साध्वुच्यते । कच्छेन पिबति द्वाभ्यां पिबति इत्येतस्मिन् सत्येवार्थे ऽसदर्थाश्रयेण रूढिशब्दानामपि व्युत्पत्तेरयुक्तत्वात् । यत्र तु सर्वात्मनाऽर्थानुगमो नास्ति यथा तैलपायिकेति तत्रैवासदर्था व्युत्पत्तिः क्रियते । भावे यथा स्यादिति । अत्राप्याहुः । घञर्थे कविधानमिति कः सिद्ध इति । एवं तर्हि नित्यसमासार्थं स्थ इत्यनेन उपपदाश्रयः को विधीयते । अन्यथा पाक्षिकः षष्ठीसमासः स्यात् । अनिर्दिष्टार्था इति । प्रत्यासन्नत्वात्तस्यार्थस्येति भावः । यद्येव स्थ इत्यनेन भावे विधीयमानः कर्तारं बाधते । तथा च समस्थ इति कर्तरि न स्यात् । नैष दोषः । यद्यत्र साक्षाद्भावशब्दोपादानेन भावे को विधीयते । तदा भावः कर्तारं तक्रकौण्डिन्यन्यायेन बाधेत । सामर्थ्यात्त्वयं भावे व्यवतिष्ठत इति भावेन न बाध्यते कर्ता ॥४॥

तुन्द ॥ आलस्यसुखाहरणयोरिति । आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो

योरिति वक्तव्यम्। तुन्दपरिमृजोऽलसः शोकापनुदः पुत्रो जातः। यो हि तुन्दं परिमार्ष्टि तुन्दपरिमार्जः स भवति। यश्च शोकमपनुदति शोकापनोदः स भवति। कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् *। कप्रकरणे मूलविभुजादिभ्य उपसंख्यानं कर्तव्यम्। मूलविभुजो रथः। नखमुचानि धनूंषि * काकगुहास्तिलाः। सरसीरुहं कुमुदम्॥

गापोष्टक्॥८॥ सुराशीध्वोः पिबतेः *। सुराशीध्वोः पिबतेरिति वक्तव्यम्। इह मा भूत् क्षीरपा ब्राह्मणीति। पिबतेरिति च वक्तव्यम्। या हि सुरां पाति सुरापा सा भवति। बहुलं तणि *। बहुलं तणीति वक्तव्यम्। किमिदं तणीति। संज्ञाछन्दसोर्ग्रहणम्। या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति। या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति॥

हरतेरनुद्यमनेऽच्॥९॥ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम् *। अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानं कर्तव्यम्। शक्तिग्रहः लाङ्गलग्रहः अङ्कुशग्रहः यष्टिग्रहः तोमरग्रहः घटग्रहः घटीग्रहः धनुर्ग्रहः। सूत्रे च धार्यर्थे *। सूत्रे च धार्यर्थे ग्रहेरुपसंख्यानं कर्तव्यम्। सूत्रग्रहः। धार्यर्थ इति किमर्थम्। यो हि सूत्रं गृह्णाति सूत्रग्रहः स भवति॥

स्तम्बकर्णयोरमिजपोः॥१३॥ स्तम्बकर्णयोर्हस्तिसूचकयोः *। स्तम्बकर्णयोरित्यत्र हस्तिसूचकयोरिति वक्तव्यम्। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः। स्तम्बे रन्ता कर्णे जपितेत्येवान्यत्र॥

शमि धातोः संज्ञायाम्॥१४॥ धातुग्रहणं किमर्थम्। शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् *। शमि संज्ञायां धातुग्रहणं क्रियते कृञो हेत्वादिषु टो मा भूदिति। शमिसंज्ञायां धातोरज्भवतीत्यस्यावकाशः। शम्भवः। शंवदः। टस्यावकाशः श्राद्धकरः पिण्डकरः। शङ्करा नाम परिव्राजका शङ्करा नाम शकुनिका तच्छीला च तस्यामुभयं प्राप्नोति। परत्वाट्टः

---

भवतीत्यर्थः। तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाहर्तरि प्रत्ययो भवतीत्युक्तं भवति। शोकापनोद इति। यः संसारानित्यतोद्भावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः॥५॥

गापोष्टक्॥ पिबतेरिति। लुग्विकरणपरिभाषालभ्यार्थकथनम्॥८॥

हरतेरनु॥ अच्प्रकरण इति। घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यज्ञापनार्थम्॥९॥

शमि धातोः॥ शङ्करेति। पृषोदरादित्वात्संज्ञायां गकारस्य ककारव्यत्ययेन शङ्क-

स्यात्। धातुग्रहणसामर्थ्यादजेव भवति। कुरणवाडवस्त्वाह। नैषा शङ्करा। शङ्करैषा। कुत एतत्। शृणातिः शब्दकर्मा तस्यैष प्रयोगः॥

अधिकरणे शेतेः॥ १५॥ अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम् *। अधिकरणे शेतेः पार्श्वादिषूपसंख्यानं कर्तव्यम्। पार्श्वशयः पृष्ठशयः उदरशयः। दिग्धसहपूर्वाच्च *। दिग्धसहपूर्वाच्चेति वक्तव्यम्। दिग्धसहशयः। उत्तानादिषु कर्तृषु *। उत्तनादिषु कर्तृष्विति वक्तव्यम्। उत्तानशयः। अवमूर्धशयः। गिरौ डश्छन्दसि * गिरावुपपदे छन्दसि डो वक्तव्यः। गिरौ शेते गिरिशः। तद्धितो वा *। तद्धितो वा पुनरेष भविष्यति। गिरौ शेते गिरिरस्यास्तीति गिरिशः॥

चरेष्टः॥ १६॥ इह कस्मान्न भवति कुरूंश्चरति पञ्चालांश्चरतीति अधिकरण इति वर्तते। ननु च कर्मणोऽपि वर्तते। तत्र कुत एतद् अधिकरणे भविष्यति न पुनः कर्मणीति। चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य *। यदयं भिक्षासेनादायेषु चेति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो न भवति कर्मणीति॥

**दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलीभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु॥ २१॥** किंयत्तद्बहुषु कृञोऽज्विधानम् *। किंतत्तद्बहुषु कृञोऽज्विधानं कर्तव्यम्। किङ्करा यत्करा तत्करा बहुकरा॥

स्तम्बशकृतोरिन्॥ २४॥ स्तम्बशकृतोर्व्रीहिवत्सयोः *। स्तम्बशकृतोरित्यत्र व्रीहिवत्सयोरिति वक्तव्यम्। स्तम्बकरिर्व्रीहिः शकृत्करिर्वत्सः॥

फलेग्रहिरात्मम्भरिश्च॥२६॥ आत्मम्भरिरिति किं निपात्यते। आत्मनो मुम् भृञश्चेन्प्रत्ययः। अत्यल्पमिदमुच्यते। भृञः कुक्ष्यात्मनोर्मुम् च *। भृञः

---

राशब्दस्तत्सिद्धत्वात्तदर्थं धातुग्रहणं न कर्तव्यमित्यर्थः॥ १४॥

अधिकर॥ दिग्धसहपूर्वाच्चेति। दिग्धसहशब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम्। तत्र दिग्धेन सह शेतइत्यचि कृते मयूरव्यंसकादित्वात् समासः। तद्धितो वेति। गिरौ शेते गिरिस्यास्तीति लोमादिषु दर्शनात् शप्रत्ययः। अन्ये त्वाहुः। गिरौ गिरौ शेत इति सख्यैकवचनादिति सप्तम्यन्ताच्छस् प्रत्ययः। व्युत्पत्तिर्हि यथाकथं चित्कर्तव्या उपायानामनियमात्। तदुक्तं हरिणा। वैरवासिष्ठगिरिशास्तथैकागारिकादयः। कैश्चित्कथं चिदाख्याता निमित्तावधिसंकरैरिति। छन्दसीति वचनाद्भाषायां गिरिशशब्दस्यासाधुत्वमाहुः॥१५॥

चरेष्टः॥ कुरूंश्चरतीति। यस्य कुरव एव प्राप्याः स कुरूंश्चरीत्युच्यते। यश्च कुरुषु भ्रमति स कुरुषु चरतीत्युच्यते॥१६॥

दिवा विभा॥ किं यदादीति। वार्तिकेन सूत्रस्य बाधितत्वात्तस्याभावे किंकरीत्यसाधुरित्याहु॥ २१॥

कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम् । कुक्षिम्भरिः । आत्मम्भरिश्चरति यूथमसेवमानः ॥

एजेः खश् ॥ २८ ॥ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः * । खश्प्रकरणे वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्य इति वक्तव्यम् । वातमजाः मृगाः शुनिन्धयः तिलन्तुदः शर्द्धञ्जहा माषाः ॥

नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥ स्तनेधेटः * । स्तने धेट इति वक्तव्यम् । स्तनन्धयः । ततो, मुष्टौ ध्मश्च * । मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम् । मुष्टिन्धमः मुष्टिन्धयः । नासिकायां ध्मश्च धेटश्च * । नासिकायां ध्मश्च धेटश्चेति वक्तव्यम् । नासिकन्धमः । नासिकन्धयः । असल्पमिदमुच्यते । नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम् । नासिकन्धयः नासिकन्धमः । नासिका । नाडिन्धयः नाडिन्धमः । नाडी । मुष्टिन्धयः मुष्टिन्धमः । घटिन्धमः घटिन्धयः । खारिन्धयः खारिन्धमः ॥

प्रियवशे वदः खच् ॥ ३८ ॥ खच्प्रकरणे गमेः सुपि उपसंख्यानम् * । खच्प्रकरणे गमेः सुपि उपसंख्यानं कर्तव्यम् । मितङ्गमो हस्ती, मितङ्गमा हस्तिनी । विहायसो विह च * । विहायसो विह इत्ययमादेशो वक्तव्यः खच । विहङ्गमः । खच डिद्वा * । खच डिद्वा वक्तव्यः । विहङ्गः । डे च * । डे च विहायसो विह इत्ययमादेशो वक्तव्यः । विहगः । प्रियवशे ॥

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् * । डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानं कर्तव्यम् । सर्वत्रगः पन्नगः । उरसो लोपश्च * । उरसो लोपश्च वक्तव्यः । उरगः । सुदुरोरधिकरणे * । सुदुरोरधिकरणे डो वक्तव्यः । सुगः दुर्गः । निसो देशे * । निसो देशे डो वक्तव्यः । निर्गो देशः । अपर आह । डप्रकरणे अन्येष्वपि दृश्यते । डप्रकरणे अन्येष्वपि डो भवतीति वक्तव्यम् । तत्र स्त्र्यगारगः । अश्नुते यावदन्नाय ग्रामगः ध्वंसते गुरुतल्पग इति । अन्तात्यन्ता ॥

आशिषि हनः ॥४९॥ दारावाहनोणन्त्यस्य च टः संज्ञायाम् * । दारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वक्तव्यः । दार्वाघाटस्ते वनस्पतीनाम् । चारौ वा * । चारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वा वक्तव्यः । चार्वाघाटः चार्वाघातः । कर्मणि समि च * । कर्मण्युपपदे संपूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वा वक्तव्यः । वर्णसंघाटः वर्णसंघातः

---

नासिका ॥ स्तने धेटइति । यथासंख्याभावार्थएतावान् योगः कर्तव्यइत्यर्थः । वार्तिकस्याव्यव्याप्तिमुद्भावयन् भाष्यकार आह अत्यल्पमिति ॥२९॥

डे चेति ॥ विहायः शब्दपूर्वाद् गमेरन्येष्वपि दृश्यत इति डप्रत्यये सति विहादेशः ३८॥

पदसंघाटः पदसंघातः। आशिषि॥

लक्षणे जायापत्योष्टक्॥ ५२॥ कथमिदं विज्ञायते लक्षणे कर्तरि आहो स्वित्लक्षणवति कर्तरीति। किं चातः। यदि विज्ञायते लक्षणे कर्तरीति। सिद्धं जायाघ्नस्तिलकालकः; पतिघ्नी पाणिरेखेति। इदं तु न सिध्यति। जायाघ्नो ब्राह्मणः; पतिघ्नी वृषलीति। अथ विज्ञायते लक्षणवति कर्तरीति। सिद्धं जायाघ्नो ब्राह्मणः; पतिघ्नी वृषलीति। जायाघ्नस्तिलकालकः; पतिघ्नी पाणिरेखेति न सिध्यति। अस्तु तर्हि लक्षणे कर्तरीति। कथं जायाघ्नो ब्राह्मणः; पतिघ्नी वृषलीति। अकारो मत्वर्थीयः। जायाघ्नोऽस्मिन्नस्ति सोयं जायाघ्न इति पतिघ्नी वृषलीति न सिध्यति। अस्तु तर्हि लक्षणवति कर्तरीति। कथं जायाघ्नस्तिलकालकः; पतिघ्नी पाणिरेखेति। अमनुष्यकर्तृके चेत्येवं भविष्यति। लक्षणे॥

अमनुष्यकर्तृके च॥ ५३॥ अप्राणिकर्तृक इति वक्तव्यम्। इह मा भूत्; नगरघातो हस्ती। यद्यप्राणिकर्तृक इत्युच्यते। शशघ्नी शकुनीति न सिध्यति। अस्तु तर्हि अमनुष्यकर्तृके च इत्येव कथं नगरघातो हस्ती। कृतल्युटो बहुलमित्येवात्राण् भविष्यति॥

पाणिघताडघौ शिल्पिनि॥ ५५॥ राजघ उपसंख्यानम् *। राजघ उपसंख्यानं कर्तव्यम्। राजघः॥

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्॥५६॥ ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात् *। ख्युनि च्विप्रतिषेधोनर्थकः। किं कारणम्। ल्युट्ख्युनोरविशेषात्। ख्युना मुक्ते ल्युटा भवितव्यम्। न चैवास्ति विशेषः। च्व्यन्तउपपदे ख्युनो वा ल्युटो वा। तदेव रूपं स एव च स्वरः। अयमस्ति विशेषः। ल्युटि सति ईकारेण भवितव्यम्। ख्युनि सति न भवितव्यम्। ख्युन्यपि सति ईकारेण भवितव्यम्। एवं हि सौनागाः पठन्ति। नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति। अयं तर्हि विशेषः। ख्युनि सति नित्यसमासेन भवितव्यम्। उपपदसमासो हि नित्यसमास इति। ल्युटि सति न भवितव्यम्। ल्युट्यपि सति भवितव्यम्। गतिसमासोपि हि नित्यसमासः। च्व्यन्तं च गतिसंज्ञं भवति। मुमर्थं तर्हि प्रतिषेधो वक्तव्यः। ख्युनि सति मुमा भवितव्यं ल्युटि सति न भवितव्यम्। मुमर्थमिति चेन्नाव्ययत्वात् *। मुमर्थमिति चेत् तन्न। किं कारणम्। अव्ययत्वात्। अनव्ययस्य मुमुच्यते।

---

भाष्य॥ उत्तरार्थमिति। उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादाढ्यीकरणमिति ल्युटा भाव्यम्। तत्र यदन्यैरुक्तं प्रतिषेधसामर्थ्यात्, ख्युन्यसति ल्युडपि न भवतीति

च्व्यन्तं चाव्ययसंज्ञं भवति । उत्तरार्थं तु * । उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । कर्तरि भुवः खिष्णुच्खुकञौ अच्वाविसेन । आढ्यीभविता । अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज् विधीयते सोत्र कस्मान्न भवति । रूढिशब्दप्रकारास्ता-च्छीलिकाः । न च रूढिशब्दा गतिभिर्विशिष्यन्ते । न हि भवति देवदत्तः प्रदेव-दत्त इति । आढ्य ॥

कर्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥ किमर्थं खिष्णुजिकारादिः क्रि-यते न ख्स्नुरित्येवोच्येत । तत्रायमप्यर्थः । स्वरार्थश्चकारो न कर्तव्यो भवति । केनेदानीमिकारादित्वं क्रियते । इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः ॥ भवतेरुदात्तस्तस्योदात्तत्वादिड् भविष्यति । इदं तर्हि प्रयोजनं खिदयं क्रियते तत्र चर्त्वे कृते संदेहः स्यात् किद्वा खिद्वेति । संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति । खिदिति व्याख्यास्यामः । नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥ इदं तर्हि प्रयो-जनं कृत्स्नोकेष्णुच्चार्वादयश्चेत्येष स्वरो यथा स्यात् । एतदपि नास्ति प्रयोजनम् । अयमपि इटि कृते षत्वे णत्वे चेष्णुजेव भविष्यति । न सिध्यति । लक्षणप्रतिप-दोक्तयोः प्रतिपदोक्तस्यैवेति । अथ वा असिद्धं खल्वपि षत्वं तस्यासिद्धत्वादि-ष्णुजेव भविष्यति । इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः । नञस्तु स्वर-सिद्ध्यर्थमिकारादित्वमिष्णुचः ॥ कर्तरि भुवः ॥

स्पृशोनुदके क्विन् ॥ ५८ ॥ किमर्थो नकारः । स्वरार्थः । ञ्नित्तीत्या-

---

च्व्युदोप्ययमर्थतः प्रतिषेध इति । तदयुक्तम् । रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोपि गौर्भ-वति । गोपिण्डाद्यान्योर्थो गमनविशिष्टोपि गौर्न भवति । तथा ताच्छीलिका अपि क्रिया-विषयं ताच्छील्यमुपादाय क्रियाविशाभावेपि प्रयुज्यन्ते । केचिदेव तु गतिना संबध्य-न्ते । आगामुकः प्रवर्षुक इति । न तु सर्वे यथा कामुक इति । न च भवति प्रकामुक इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषां चिद् गतिसंबन्धो भवति ताच्छीलिकानां तु भवति केषां चिन्न सर्वेषामिति प्रतिपादयति । द्रव्योपलक्ष-णार्थं क्रियायाः प्रवृत्तत्वादात्मातिशयं प्रति आकाङ्क्षाया अभावात्तदतिशयद्योतनार्थं गति-संबन्धाभावस्ताच्छीलिकेष्वित्यर्थः । प्रदेवदत्त इति । प्रकर्षेण देवनक्रिया न विशेष्य-ते । देवशब्दस्य रूढिशब्दत्वात् तदवयवस्य च देवदत्तशब्दस्येत्यर्थः । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा स्तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ ५६ ॥

कर्तरि ॥ नञ इति । पञ्चमी नञ उत्तरस्य स्वरसिद्ध्यर्थमित्यर्थः । अयमपीति । कृत्स्नुच्प्रत्ययः क्रियते चकारः सामान्यग्रहणार्थ इति मन्यते । खिष्णुचि तु कृते इका-रोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते ॥ ५७ ॥

स्पृशोनु ॥ संदेहः स्यादिति । किमेकपकारको निर्देश उत द्विपकारक इत्यर्थः ।

द्युदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाचोयं विधीयते । तत्र नार्थः स्वरार्थेनानुबन्धेन नकारेण । धातुस्वरेणैव सिद्धम् । यस्तर्ह्यनेकाज्दधृगिति । वक्ष्यत्येतद्धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यत इति । विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः । क्विन्प्रत्ययस्य कुरिति । क्विप्रत्ययस्य कुरित्युच्यमाने संदेहः स्यात् क्विर्वा एष प्रत्ययः क्विब्वेति संदेहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदहादलक्षणमिति । क्विनिति व्याख्यास्यामः । स्पृशोनु-

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥** दधृगिति क्विन् निपात्यते । धृषेर्द्विर्वचनमन्तोदात्तत्वं च * । धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते॥

**त्यदादिषु दृशोनालोचने कञ्च ॥ ६० ॥** किमर्थो ञकारः । स्वरार्थः । ञ्नितीत्याद्युदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । नकारेणाप्येष स्वरः सिद्धः । विशेषणार्थस्तर्हि भविष्यति । क्व विशेषणार्थेनार्थः । कञ्क्रराविति । कन्क्रराविप्युच्यमाने याविका इत्यत्रापि प्रसज्येत । दृशेः समानान्ययोश्च * । दृशेः समानान्ययोश्चोपसंख्यानं कर्तव्यम् । सदृक् सदृशः । अन्यादृक् । अन्यादृशः । कृदर्थानुपपत्तिस्तु * । कृदर्थस्तु नोपपद्यते । दृशेः कर्तरि प्राप्नोति । इवार्थे तु तद्धितः * । इवार्थे त्वयं तद्धितो द्रष्टव्यः । स इवायं तादृक् तादृशः । अन्य इवायमन्यादृक् अन्यादृश इति । अथ वा युक्त एवायं कृदर्थः । कर्मकर्तायम् । तमिवेमं पश्यन्ति जनाः सोयं स इव दृश्यमानस्तमिवात्मानं पश्यति तादृक् । अन्यमिवेमं पश्यन्ति जनाः सोयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति अन्यादृगिति । त्यदादिषु ॥

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ६१॥** सदादिषु सुब्ग्रहणम् * । सदादिषु सुब्ग्रहणं कर्तव्यम् । होता वेदिषत् । अतिथिर्दुरोणसत् । न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् । वक्तव्यं च । किं प्रयोजनम् । ज्ञापकार्थम् । किं ज्ञाप्यम् । एतज्ज्ञापयत्याचार्यः अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । वदः सुप्यनुपसर्गग्रहणं चोदितं तन्न वक्तव्यं भवति ॥

---

व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाभावः ॥ ५८ ॥

त्यदादिषु ॥ ञकारस्य कार्यद्वयं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते । किमर्थ इति । कृदर्थानुपपत्तिस्त्विति । यः कृतोर्थः स तादृशादिशब्दवाच्यो न भवति । तादृशादयो हि संदृशलक्षणमर्थमाचक्षते न तु दर्शनक्रियायाः कर्तारमित्यर्थः । कर्मकर्तेति । कर्मण एव सौकर्यात् कर्तृत्वविवक्षायां कर्तर्येव प्रत्ययः क्रियत इत्यर्थः ॥ ६० ॥

सत्सूद्विष ॥ सदादीनां केषांचित्सकर्मकत्वात्कर्मैवोपपदं प्राप्नोतीति मत्वाह सदादिष्विति । वेदिषदिति । वेद्यां सीदतीति । क्विप् पूर्वपदादिति षत्वं दुरोणे

अदोनन्ने ॥ ६८ ॥ क्रव्ये च ॥ ६९ ॥ किमर्थमिदमुच्यते न अदोनन्न इत्येव सिद्धम्। न सिध्यति। छन्दसीति वर्तते। भाषार्थोयमारम्भः। पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तम्। तच्चावश्यं निवर्त्यम्। आमात्तस्यादित्येवमर्थम्। अत उत्तरं पठति। अदोनन्ने क्रव्यग्रहणं वासरूपनिवृत्त्यर्थम् *। अदोनन्ने क्रव्यगृहणं क्रियते वासरूपो मा भूदिति। अदोन ॥

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥७१॥ श्वेतवहादीनां डस् *। श्वेतवहादीनां डस्वक्तव्यः। श्वेतवा इन्द्रः। पदस्य च *। पदस्येति च वक्तव्यम्। इह मा भूत्। श्वेतवाहौ श्वेतवाह इति किं प्रयोजनम्। वर्थम् *। रुर्यथा स्यात्। क्रियते वर्थं निपातनम्। अवयाः श्वेतवाः पुरोडाश्चेति। आतश्च वर्थम्। स उक्थशःशब्दस्यान्येन रुः सिद्धः। न तस्य निपातनं क्रियते। तन्न वक्तव्यं भवति। अवश्यं तद्वक्तव्यम्। दीर्घार्थम्। नैतदस्ति प्रयोजनम्। सिद्धमत्र दीर्घत्वम्। अत्वसन्तस्य चाधातोरिति। यत्र तेन न सिध्यति तदर्थम्। क्व च तेन न सिध्यति। संबुद्धौ। हेश्वेतवा इति। न तर्हीदानीं डस्वक्तव्यः। वक्तव्यश्च। किं प्रयोजनम्। उत्वार्थम्। श्वेतवोभ्यां श्वेतवोभिः। मन्त्रेश्वेत ॥

स्थः कच ॥ ७७ ॥ किमर्थं स्थः कक्विपावुच्येते। न क्विप्सिद्धोन्येभ्योपि दृश्यत इति। कश्च। आतोनुपसर्गे क इति। न सिध्यति। विशेषविहितः कः सामान्यविहितं क्विपं बाधेत। वासरूपेण क्विवपि भविष्यति। इदं तर्हि शंस्थः

---

सीदतीति दुरोणसत् दुरोणं गृहम्। तन्न वक्तव्यमिति। अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्तेः सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते। यत्र चानुपसर्गग्रहणानुवृत्तिर्न संभाव्यते। स्पृशोनुदके क्विन्नित्येतदपि ज्ञापनस्य प्रयोजनम्। तेनोपस्पृशतीत्यादौ क्विन्न भवतीति। क्रव्ये च वासरूपो मा भूदिति। तेन क्रव्याद इत्यण्न भवतीत्यर्थः ॥ ६१ ॥

मन्त्रे ॥ डस् वक्तव्य इति। ण्विन्प्रत्ययबाधनार्थ इति भावः। पदस्येति। भाविपदाश्रयेणेदमुच्यते। यत्र तु डसन्तस्य पदत्वं भविष्यति तत्र डस्प्रत्ययोऽन्यत्र ण्विन्नेवेत्यर्थः। तन्न वक्तव्यामिति। डसैव सिद्धत्वान्निपातनं न कर्तव्यमित्यर्थः। वक्तव्यश्चेति। अवया इत्यादीनि प्रथमान्तान्येव निपात्यन्त इति श्वेतवोभ्यामित्यादिरूपमन्यथा न स्यात्। अथापि पदमात्रविषयं निपातनमाश्रीयते। तथाप्यत उत्वं विधीयमानमाकारान्न स्यात्। तस्मात् संबुद्ध्यर्थं निपातनमपि कर्तव्यम्। डसप्युत्वार्थो वक्तव्यः। उक्थशा इत्येतदपि संबुद्ध्यर्थं निपातनं कर्तव्यम्। उक्थशोभ्यामित्यादिसिद्धये डसपि कर्तव्यः। ण्विनि हि नलोपे निपात्यमाने वृद्धौ सत्यामुत्वं न स्याद्यदि मन्त्रे दर्शनमस्ति ॥ ७१ ॥

स्थः क च ॥ शंस्था इति। ईत्वमवकारादाविति वचनाद्भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाभावः ॥ ७७ ॥

शंस्थाः । उक्तमेतत् । शमिसंज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थमिति । स यथैवाच् टं बाधते । एवं कक्विपावपि बाधते ॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥ सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् । अनुपसर्ग इत्येवं तदभूत् । इदं सुम्मात्रे यथा स्यात् । उदासारिण्यः प्रसासारिण्य इति । णिन्विधौ साधुकारिण्युपसंख्यानम् * । णिन्विधौ साधुकारिण्युपसंख्यानं कर्तव्यम् । साधुकारी साधुदायी । ब्रह्मणि वदः * । ब्रह्मणि वद उपसंख्यानं कर्तव्यम् । ब्रह्मवादिनो वदन्ति ॥

व्रते ॥ ८० ॥ किमुदाहरणम् । अश्राद्धभोजी । किं योऽश्राद्धं भुङ्क्ते सोऽश्राद्धभोजी । किं चातः । यदासावश्राद्धं न भुङ्क्ते तदास्य व्रतलोपः स्यात् । तद्यथा स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवति । एवं तर्हि णिन्यन्तेन समासो भविष्यति । न श्राद्धभोज्यश्राद्धभोजीति । नैवं शक्यम् । स्वरे हि दोषः स्यात् । अश्राद्धभोजीत्येवं स्वरः प्रसज्येत । अश्राद्धभोजीत्येवं चेष्यते । एवं तर्हि नञ् एवायं भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासमर्थसमासः न भोजी श्राद्धस्येति । स तर्ह्यसमर्थसमासो वक्तव्यः । यद्यपि वक्तव्यः । अथ वैतर्हि बहूनि प्रयोजनानि । कानि । असूर्यम्पश्यानि मुखानि । अपुनर्गेयाः श्लोकाः । अश्राद्धभोजी ब्राह्मणः । सुडनपुंसकस्येति ॥

---

सुप्य ॥ णिन्विधाविति । अताच्छील्यार्थमिदम् । एवं ब्रह्मणि वद इति ॥ ७८ ॥

व्रते ॥ उदाहरणे विचार्यमस्तीति प्रश्नः । किमिति । यदासाविति । ननु बुभुक्षाप्रयुक्तं श्राद्धाश्राद्धभोजनं प्रसक्तम् । तत्राश्राद्धं भुङ्क्त इत्यनेन श्राद्धभोजनं निषिध्यते । यथा पञ्च पञ्चनखा भक्ष्या इति शशादिव्यतिरिक्तपञ्चनखभक्षणं निवर्त्यते । तत्र कथं व्रतलोपः स्यात् । स्थण्डिलस्थायीत्यत्र तु स्थानविपरीतगमनाचरणे युक्तो व्रतलोपः । उच्यते । अश्राद्धं मया भोक्तव्यमिति येन संकल्पः कृतः स यदा बुभुक्षायां सत्यां यस्मिन्नहन्यश्राद्धं न भुङ्क्ते तदा तस्य स्यादेव व्रतलोपः । न श्राद्धभोजीति । समासार्थं प्रक्रियावाक्यमिदं न तु लौकिकम् । न हि केवलः श्राद्धभोजिशब्दो व्रतविषय उपपद्यते । अश्राद्धभोजिशब्दस्यैव व्रतविषयत्वात् । एवं स्वर इति । अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तं पदं स्यात् । कृदुत्तरपदप्रकृतिस्वरत्वे नान्तोदात्तत्वं चेष्यत इत्यर्थः । ननु च णिनीत्यनेन पूर्वपदाद्युदात्तत्वेनैव भाव्यमिति नास्ति स्वरे भेदः । अत्राहुः । यदा णिनीत्यत्र संज्ञायामित्यनुवर्तते । तदाऽसंज्ञायामस्ति स्वरे भेदः । अथ नानुवर्तते । स्वरभेदाभावः । भोजीति । एतदपि भुजिना संबन्धं नञः प्रदर्शयितुं प्रक्रियावाक्यमुपात्तम् । न हि केवलस्य भोजिशब्दस्य प्रयोगः । सुप्युपपदे प्रत्ययविधानात् । तदेतदुक्तं भवति । न श्राद्धं भुङ्क्त इति वाक्यं कृत्वा नञः श्राद्धशब्देनासमर्थसमासं विधायाश्राद्धशब्द उपपदे णिनिः कर्तव्यः । णीनीत्यत्र संज्ञानुवृत्तौ सत्यामत्र कृत्स्वरः ॥ ८० ॥

आत्ममाने खश्च ॥ ८३ ॥ आत्मग्रहणं किमर्थम्। परमाने मा भूदिति। क्रियमाणेपि वै आत्मग्रहणे परमाने प्राप्नोति। किं कारणम्। आत्मन इतीयं कर्तरि षष्ठी। मान इत्यकारो भावे। स यद्येवात्मानं मन्यते ऽथापि परमात्मन एवासौ मानो भवति। नैष दोषः। आत्मन इतीयं कर्मणि षष्ठी कथम्। कर्तृकर्मणोः कृतीति। ननु च कर्तर्यपि वै तेनैव विधीयते। तत्र कुत एतत्। कर्मणि भविष्यति न पुनः कर्तरीति। एवं तर्हि, कर्मकर्तरि च *। कर्मकर्तरि खश्चेति वक्तव्यम्। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। आत्मन इतीयं कर्मणि षष्ठी। कथम्। कर्तृकर्मणोः कृतीति। ननु चोक्तं कर्तर्यपि वै तेनैव विधीयते। तत्र कुत एतत्। कर्मणि भविष्यति न पुनः कर्तरीति। एवं तर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते। एवमपि कर्मकर्तृग्रहणं कर्तव्यम्। कर्मापदिष्टो यग्यथा स्यात् श्यन् मा भूदिति। कश्चात्र विशेषः, यको वा श्यनो वा यकि सत्यन्तोदात्तत्वेन भवितव्यम्। श्यनि सत्याद्युदात्तत्वेन। श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्। खश्स्वरः श्यन्स्वरं बाधिष्यते। सति शिष्टत्वात् श्यन्स्वरः प्राप्नोति। आचार्यप्रवृत्तिर्ज्ञापयति सतिशिष्टोपि विकरणस्वरः सार्वधातुकस्वरं न बाधत इति। यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति। लसार्वधातुक एवैतज्ज्ञापकं स्यात्। नेत्याह। अविशेषेण ज्ञापकम्॥ इति व्याकरणमहाभाष्यस्य तृतीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

भूते ॥ ८४ ॥ भूत इत्युच्यते। कस्मिन् भूते। काले। न वै कालाधिकारोस्ति। एवं तर्हि धातोरिति वर्तते। धातौ भूते। धातुर्वै शब्दः। न च शब्दस्य

---

आत्ममाने ॥ आत्मशब्दः प्रत्यात्मवचनः परव्यावृत्तिं करोति। कर्मकर्तरीति। यदा प्रत्ययार्थः कर्ता आत्मानमेव पाण्डित्यादियुक्तं मन्यते तदासौ कर्मकर्ता भवति तत्र यदि कर्तरि षष्ठी स्यात्तदात्मग्रहणमनर्थकं स्यात्। कर्तृसंबन्धाव्यभिचारान्मननक्रियायाः। कर्मापदिष्ट इति। लान्तस्य कर्ता कर्मवदित्यनपेक्ष्योक्तं श्यनैव सिद्धेर्वक्ष्यमाणत्वात्। यकः सिद्धान्तत्वाभावादुपेक्षणीयत्वात्। अविशेषेणेति। सार्वधातुकमात्र इत्यर्थः॥८३॥ इति जैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयाध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

भूते ॥ यस्य स्वसत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते। तत्र विशेषज्ञानाय पृच्छति। कस्मिन्निति। इतर आह काल इति। तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भावः। अत्र केचिन्नित्यं कालं पदार्थानामनुज्ञाप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते। तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च। अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणायाः क्रियायाः परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहुः। न वै कालाधिकार इति। ततश्च सामान्यशब्दस्य विशेषे ऽवस्थानं न लभ्यत इत्यर्थः। न च शब्दस्येति। शब्दस्यार्थे गुणभावाद् गुणस्य विशेषणासंबन्धायोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वे ऽपि

भूतभविष्यद्वर्तमानतायाः संभवोस्ति। शब्दे ऽसंभवादर्थे कार्यं विज्ञास्यते। कः पुनर्धात्वर्थः। क्रिया। क्रियायां भूतायाम्। यद्येवं निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः *। निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात्। का इतरेतराश्रयता। भूतकालेनायं शब्देन निर्देशः क्रियते। निर्देशोत्तरकालं च भूतकालता। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि कार्याणि च न प्रकल्पन्ते। अव्ययनिर्देशात्सिद्धम् *। अव्ययवता शब्देन निर्देशः करिष्यते। अवर्तमाने अभविष्यतीति। स तर्हि अव्ययवता शब्देन निर्देशः कर्तव्यः। न कर्तव्यः। अव्ययमेप भूतेशब्दः। नैषा भवतेर्निष्ठा। कथमव्ययत्वम्। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा। निपातोव्ययमित्यव्ययसंज्ञा। अथापि भवतेर्निष्ठा। एवमप्यव्ययमेव कथम्। नव्येतीत्यव्ययमिति। क्व पुनर्न व्येति। एतौ कालविशेषौ भविष्यद्वर्तमानौ स्वभावतो भूते एव वर्तते। यदि तर्हि न व्येतीत्यव्ययम्। न वा तद्विधानस्यान्यत्राभावात् *। न वा भूताधिकारेणार्थः। किं कारणम्। तद्विधानस्यान्यत्राभावात्। ये ऽपि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते ते ऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ। स्वभावतो भूत एव वर्तन्ते। अत उत्तरं पठति। भूताधिकारस्य प्रयोजनम्। कुमारघाती, शीर्षघाती, आखुहा बिडालः, सुत्वानः सुन्वन्तः सुषुपुषोऽनेहाः। अग्निमाद्धानस्य भूतकालनिवृत्त्यर्थं भविष्यद्वर्तमानकालसंप्रत्ययार्थम्। कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थो भूतनि-

---

भूतात्प्रत्ययविधानासंभवादुच्चरितत्वलक्षणभूतत्वाश्रये च विशेषणवैयर्थ्यादिति भावः। भूतकालेनेति। भवतेर्निष्ठाप्रत्ययो भूतक्रियावाचिनो विधातव्यः। न च भूताधिकारमन्तरेण निष्ठाप्रत्ययस्य भूतक्रियाविषयत्वं लभ्यते। न च भूतक्रियाविषयनिष्ठाविधानमन्तरेण भूताधिकार उपपद्यते। ततश्चाधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इतीतरेतराश्रयत्वमित्यर्थः। एवमपीति। न शास्त्रीयमव्ययत्वमभिप्रेतं किं तर्हि नित्यत्वमित्यर्थः। ततो नित्यो भूतशब्दोऽतिक्रान्तार्थवाची नित्येनार्थेन भविष्यद्वर्तमानप्रतिद्वन्द्विना संबद्धोधिक्रियत इत्यर्थः। कुमारघातीति। यदीह भूताधिकारो न क्रियते तदा कर्मणि हन इति णिनिः सामान्येन विधीयते। कुमारशीर्षयोर्णिनिरित्ययमपि णिनिस्तथैव कालसामान्ये। पुनर्विधानं तु वासरूपनिवृत्त्यर्थं स्यात्। ततश्च विशेषविहितः कुमारशीर्षयोर्णिनिरित्ययं भूते ऽपि प्रसज्येत। सति तु भूताधिकारे तक्रकौण्डिन्यन्यायेन कुमारशीर्षयोरित्यनेन भूते णिनिं बाधित्वा भविष्यद्वर्तमानयोरेव णिनिर्विधीयते। आखुहेति। सति भूताधिकारे ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवतीति नियमेन भूतएवोपपदान्तरे क्विम्निवर्त्यते न तु कालान्तरइत्याखुहेति भविष्यद्वर्तमानयोः प्रयोग उपपन्नो भवति। सुन्वन्त इति। सुञो यज्ञसंयोग इति शतृप्रत्ययः। तत्र यदि भूताधिकारो वर्तमानाधिकारश्च न क्रियते तदा यज्ञसंयोगे विशेषे विधीयमानः शता कालत्रये ऽपि ङ्वनिपं बाधेत। ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात्। अथ वासरूप

वृत्त्यर्थः। आखुहा विडाल इति भविष्यद्वर्तमानार्थौ भूतनिवृत्त्यर्थः। इतरथा हि ब्रह्मादिनियमस्त्रिषु कालेषु निवर्तकः स्यात्। सुत्वानः सुन्वन्तः। यज्ञसंयोगे ङ्वनिपस्त्रिषु कालेषु शतापवादो मा भूत्। सुषुपुपः। नजिङ् सर्वकालापवादो मा भूत् अनेहा इति वर्तमानकाल एव। अन्यत्र अनाहन्ता। आदधानस्य कानचश्चानश् ताच्छील्यादिषु सर्वकालापवादो मा भूत्। अग्निमादधानस्येसेवान्यत्र॥

ब्रह्मभ्रूणवृत्रेषु क्विप्॥ ८७॥ किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते न क्विप्चान्येभ्योपि दृश्यत इत्येव सिद्धम्। ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् *। नियमार्थोयमारम्भः। ब्रह्मादिष्वेव हन्तेर्भूते क्विब्यथा स्यादिति। किमविशेषेण। नेत्याह। उपपदविशेषे एतस्मिंश्च विशेषे। अथ ब्रह्मादिषु हन्तेर्णिनिना भवितव्यम्। न भवितव्यम्। किं कारणम्। उभयतोनियमात्। उभयतो नियमोयम्। ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति क्विबेव हन्तेर्भूते ब्रह्मादिष्विति तथा चोत्तरस्य वचनार्थः *। एवं च कृत्वोत्तरस्य योगस्य वचनार्थ उपपन्नो भवति। बहुलं छन्दसीति। यो मातृहा पितृहा भ्रातृहा। न च भवति अमित्रघातइति।

---

इति ङ्वनिप् विधीयते तथापि सुत्वा सुन्वन्निति कालभेदो न स्यात्। सति त्वधिकारे कालभेदेन तयोरवस्थानं भवति। सुषुपुष इति। असति भूतवर्तमानाधिकारे विशेषविहितेन नजिङा लिटो बाधनं स्यात्। ताच्छीलिकेषु वासरूपविधिर्नास्ति। सति त्वधिकारे भूते लिङ् वर्तमाने नजिङिति बाध्यबाधकभावाभावः। अनेहा इति। नञ्याहन् एह चेति असिप्रत्ययो ऽसत्यधिकारे सर्वस्मिन् काले तृचं बाधेत। सति त्वधिकारे वर्तमानकाल एवौणादिकस्तृचं बाधेत। चानशिति। असत्यधिकारे कानचश्चानश् बाधकः स्यात्। कः पुनरनयोर्भेदः यावताऽभ्यस्तानामादिरिति लसार्वधातुके विधीयते न सार्वधातुकमात्रे एवं तद्ग्रहणकृतो भेदः। कानजात्मनेपदत्वात्कर्त्रभिप्राय एव भवति। चानश् पुनरविशेषेण। सति त्वधिकारे भूते कानज् वर्तमाने चानशिति बाध्यबाधकभावाभावः॥ ८४॥

ब्रह्मभ्रूण॥ किमविशेषेणेति। किं धातूपपदकालप्रत्ययाश्चत्वारोपि नियम्यन्ते अथ किं चिदेव नियम्यत इति प्रश्नः। उपपदविशेष इति। अनेन धातुनियमं दर्शयति। ब्रह्मादिष्वेव हन्तेर्भूते क्विप् भवति नोपपदान्तरे। तेन पुरुषं हतवानित्यत्र क्विन्न भवति। अथेति। कर्मणि हन इत्यनेनेति भावः। क्विबेवेति। ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तरमिति। क्विप् भूतकाले नियम्यत इति कालनियमोयं भवति। एतदेव नियमद्वयं भाष्यकारेणाश्रितम्। ब्रह्मादिषु हन्तेरेव भूते क्विप् भवति। ब्रह्मादिषु हन्तेः क्विप् भूत एवेत्येतत्तु नियमद्वयं नाभ्युपगतम्। अन्यैस्त्वाहोपुरुषिकया चतुर्विधो नियमो व्याख्यातः। स भाष्यविरोधान्नादरणीयः। तथा चेति। यस्माद् ब्रह्मादिष्वेवेति नियमोऽनेन क्रियते तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति। उपपदान्तरेपि हन्तेश्छन्दसि क्विप् यथा स्यादिति॥ ८७॥

कर्मणीनिविक्रियः ॥ ९३ ॥ कर्मणि कुत्सिते * । कर्मणि कुत्सितेइति वक्तव्यम् । इह मा भूत् । धान्याविक्रायइति ॥

अन्येष्वपि दृश्यते॥१०१॥अन्येभ्योपि दृश्यते * । अन्येभ्योपि दृश्यते इति वक्तव्यम् । इहापि यथा स्यात् आखा उखा परिखा ॥

निष्ठा ॥ १०२ ॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः* । निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् । केतरेतराश्रयता । सतोः क्तक्तवत्वोः संज्ञया भवितव्यम् । संज्ञया च क्तक्तवतू भाव्येते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । द्विर्वा क्तक्तवतुग्रहणम् * । द्विर्वा क्तक्तवतुग्रहणं कर्तव्यं भवति । क्तक्तवतू भूते । क्तक्तवतू निष्ठेति । यदि पुनरिहैव निष्ठासंज्ञाप्युच्येत । क्तक्तवतू भूते । ततो निष्ठा क्तक्तवतू निष्ठासंज्ञौ भवत इति । किं कृतं भवति । द्विः क्तक्तवतुग्रहणं न कर्तव्यं भवति । एवमपि ताविति वक्तव्यं स्यात् । वक्ष्यति ह्येतत् । तौ सदिति वचनमसंसर्गार्थमिति । असंसक्तयोर्भूतकालेन क्तक्तवत्वोर्निष्ठासंज्ञा यथा स्यात् । ञिमिदा । मिन्नः । ञिक्ष्विदा । क्ष्विण्णः । यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठासंज्ञोच्येत । नैवं शक्यम् । दृष्टश्रुतयोर्हि न स्यात् । ञिमिदा मिन्नः । ञिक्ष्विदा क्ष्विण्ण इति । तस्मान्नैवं शक्यम् । न चेदेवं द्विः क्तक्तवतुग्रहणं कर्तव्यं भवति । इतरेतराश्रयं वा भवति । नैष दोषः । इतरेतराश्रयमात्रमेतद्भवति । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि । सिद्धं तु नित्यशब्दत्वादिति ।

---

कर्मणि ॥ कर्मणि कुत्सित इति । यस्तु सोमघृतादेः शास्त्रेण विक्रयः प्रतिषिद्धस्तत्कर्म विक्रये कुत्सितम् ॥ ९३ ॥

अन्येष्वपि ॥ अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रितं न तु धात्वन्तरमित्याह अन्येभ्योपीति ॥ १०१ ॥

निष्ठा ॥ यदि पुनरिति । यौ लौकिके प्रयोगे दृष्टौ नापीह शास्त्रे श्रुतौ तौ क्तक्तवतू निर्दिश्य संज्ञा विधीयते । एतदुक्तं भवति । इहैव प्रकरणे क्तक्तवतू निष्ठेति सूत्रं कर्तव्यम् । यौ भूते क्तक्तवतू तौ निष्ठासंज्ञौ भवतः । तत्र संज्ञाविधानान्यथानुपपत्त्या तयोर्भूते विधानमनुमास्यते । इतरेतराश्रयदोषश्च न भविष्यतीति । दृष्टश्रुतयोरिति । यद्यपि क्तवतुरन्यो नास्ति तथापि संज्ञाविधाने द्वयोः सह निर्देशादत्रापि द्विवचनेन निर्देशो न तु द्वित्वं विवक्षितम् । एकत्वेनेति । सामान्येनेत्यर्थः । न हि संज्ञा नित्येति । वृद्ध्यादिका संज्ञा विषयनियतत्वान्नित्या आकारादयो हि प्रयोगे विद्यन्ते तत्र मृजेर्वृद्धिरित्यादिनां साधुत्वमात्रमन्वाख्यायते । मृजेर्वृद्धिः साधुर्भवति । क्तक्तवतू तु सानुबन्धकौ प्रयोगे न विद्येते इति नित्यत्वाभावं संज्ञिनोऽभिप्रेत्यैतदुक्तम् । भाविनी संज्ञेति । संज्ञिनोर्भावित्वात्संज्ञा भाविनीति । तथा हि । निष्ठेत्युक्ते संज्ञावाक्यं क्तक्तवतू निष्ठेति स्मर्यते । तत्र सामर्थ्यात् क्तक्तवतुविधानं संपद्यते । आदिकर्मणीति । आद्येषु

नेदं तुल्यमन्यैरितरेतराश्रयैः। न हि संज्ञा नित्या। एवं तर्हि भाविनी संज्ञा विज्ञास्यते। तद्यथा। कश्चित्कं चित्तन्तुवायमाहाऽस्य सूत्रस्य शाटकं वयेति। स पश्यति यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता। स मन्ये वातव्यः यस्मिन्नुते शाटक इत्येतद्भवतीति। एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठेत्येषा संज्ञा भविष्यति। आदिकर्मणि निष्ठा *। आदिकर्मणि निष्ठा वक्तव्या। प्रकृतः कटं देवदत्त इति। किं पुनः कारणं न सिध्यति। यद्वा भवन्त्यर्थे *। यद्वा भवन्त्या अर्थे भाष्यते। प्रकृतः कटं देवदत्तः। प्रकरोति कटं देवदत्त इति। न्याय्या त्वाद्यपवर्गात् *। न्याय्या त्वेषा भूतकालता। कुतः। आद्यपवर्गात्। आदिरत्रापवृक्तः। एष च नाम न्याय्यो भूतकालः। यत्र किं चिदपवृक्तं दृश्यते। वा चाद्यतन्याम्। वा चाद्यतन्यां भाष्यते। प्रकृतः कटं देवदत्तः प्राकार्षीत्कटं देवदत्त इति। किं शक्यं त एते शब्दाः प्रयोक्तुमित्यतो न्याय्यैषा भूतकालता। नावश्यं प्रयोगादेव। क्रिया नामेयमत्यन्तापरदृष्टा अनुमानगम्या न शक्या पिण्डीभूता निदर्शयितुम्। यथा गर्भो निर्लुठित इति। सासौ येन येन शब्देनाभिसम्बध्यते तावति तावति परिसमाप्यते। तद्यथा। कश्चित्पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाह इदमद्य गतमिति। न च तावता तस्य व्रजिक्रिया समाप्ता भवति। यत्तु गतं तदभिसमीक्ष्यैतत् प्रयुज्यत इदमद्य गतमिति। एवमिहापि

---

क्रियाक्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम्। न चादिकर्माणि क्त कर्तरि चेत्येतदर्थातिदेशनमादिकर्मणि निष्ठाया ज्ञापकम्। ञीतः क्त इत्यादिना वर्तमानकालविषयस्य क्तस्य संभवात्तस्यैवैतदर्थादेशनं स्यात्। यद्वा भवन्त्यर्थ इति। यस्माल्लटोर्थे विकल्पेन भाष्यते निष्ठा तस्माद्वक्तव्येत्यर्थः। न्याय्येति। आदिभूत एवावयवे समूहरूपस्य समाप्तत्वादस्ति भूतत्वोपपत्तिरित्यर्थः। तदुक्तं हरिणा। समूहस्य तथा भूतः प्रतिभेदं समूहिषु। समाप्यते ततो ऽभेदे कालभेदस्य संभव इति॥ वाचाद्यतन्यामिति। यदुक्तं भवन्त्यर्थे भाष्यत इति। तस्य व्यभिचारः। लुङेपि विषये निष्ठाया अयं प्रयोगः। तस्मादवश्यमाद्यपवर्गात् भूतत्वैष्टव्या। अन्यथा लुङः प्रयोगो न स्यादित्यर्थः। किं शक्यन्त इति। यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्न भवति तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम्। ततश्च वस्तुशून्या एवामी शब्दाः प्रयुज्यन्त इति भावः। अत्यन्तापरदृष्टेति। परं प्रधानं प्रमाणं प्रत्यक्षम्। अनुमानस्य तत्पूर्वकत्वात्तेन क्रिया न दृश्यते। अवयवसमूहस्य युगपदनुत्पादादनवस्थानाच्च। तदुक्तम्। क्रमात्सदसतां तेषामात्मानो न समूहिनाम्। सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिरिति॥ येन येनेति। शब्देन प्रत्याय्यमाना येन येनावयवेन संबध्यते समूहरूपा क्रिया तस्मिन्नेवावयवे समाप्यते। तत्रावयवानां कालत्रययोगात् क्रियाया अपि कालत्रययोगः॥१०२॥

यत्कृतं तदभिसमीक्ष्यैतत्प्रयुज्यते प्रकृतः कटं देवदत्त इति । यदा हि वैणिकान्तः कटोभिसमीक्षितो भवति । प्रकरोति कटमित्येव तदा भवितव्यम् ॥

लिटः कानज्वा ॥ १०६ ॥ क्वसुश्च ॥ १०७ ॥ किमर्थं कानच्क्वस्वोर्वावचनं क्रियते । कानच्क्वस्वोर्वावचनं छन्दसि तिङो दर्शनात् * । कानच्क्वस्वोर्वावचनं क्रियते छन्दसि तिङो दर्शनात् । छन्दसि तिङपि दृश्यते । अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथिवी आततानेति । न वानेन विहितस्यादेशवचनात् * । न वा एतत्प्रयोजनमस्ति । किं कारणम् । अनेन विहितस्यादेशवचनात् । अस्त्वनेन विहितस्यादेशः । केनेदानीं छन्दसि विहितस्य लिटः तिङः श्रवणं भविष्यति । छन्दसि लुङ्लङ्लिट इत्यनेन । तदेतद्वावचनं तिष्ठतु तावत् सान्यासिकम् । अथ कित्करणं किमर्थम् । नासंयोगाल्लिट् किदित्येव सिद्धम् । कित्करणं संयोगान्तार्थम् * । कित्करणं क्रियते संयोगान्तार्थम् । संयोगान्ताः प्रयोजयन्ति । बन्धे, वृत्रस्य यद्बद्बधानस्य रोदसी । त्वमर्णवान् बद्बधानाँ अरम्णाः । अञ्जेः आजिवानिति । छान्दसौ कानच्क्वसू । लिट् च च्छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिद् ङिद्भवति । ङित्वादुपधालोपो भविष्यति । ऋकारान्तगुणप्रतिषेधार्थं वा * । ऋकारान्तानां गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम् । अयं हि लिटि ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते । स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति । तेरतुः तेरुरिति । एवमिहापि स्यात् । तितीर्वान् । तितिराण इति । पुनः कित्करणात् प्रतिषिध्यते । तस्मात्कित्त्वं कर्तव्यम् ॥

भाषायां सदवसश्रुवः ॥ १०८ ॥ भाषायां सदादिभ्यो वा लिट् * । भाषायां सदादिभ्यो वा लिड्वक्तव्यः । किं प्रयोजनम् । तद्विषये लुङो निवृत्त्यर्थम् * । तस्य लिटो विषये लुङो निवृत्तिर्यथा स्यात् । उपसेदिवान् कौत्सः

---

लिटः कान ॥ छन्दसि तिङो दर्शनादिति । वासरूपविधिश्च लादेशेषु नास्तीत्युक्तम् । अनेनेति । छन्दसि लिडित्यनेनेत्यर्थः । तस्यैव लिट इहानुकृतत्वाद् आनन्तर्यादिति भावः । तदेतदिति । उत्तरत्रोपयोक्ष्यत इति भावः । बद्बधानस्येति । बन्धबन्धने छान्दसत्वादभ्यासधकारस्य हलादिशेषेण निवृत्त्यभावे झलां जश् झशीति जश्त्वे दकारः ॥ १०६ ॥

भाषायाम् ॥ इह क्स्वादेशविधानाद् भूतसामान्ये लिट् सदादिभ्योऽनुमीयते सविशेषविषयत्वाल्लुङो बाधकः प्राप्नोतीति मत्वाह भाषायामिति अपवादविप्रतिषेधादिति । लुङोपवाद एतत् सूत्रानुमितो लिट् । तथाऽनद्यतने लङ् परोक्षे लिडिति च तत्रास्य लङ्लिटोश्च विप्रतिषेधे परत्वाल्लङ्लिटौ स्यातामित्यर्थः । अस्य तु भूतसामान्यमवकाशः । एतदादेशविधानानुमितस्यैव लिटः सदादिभ्यः क्वसुः न तु परोक्षे लिडि-

पाणिनिम् । उपासदत् । अनद्यतनपरोक्षयोश्च * । अनद्यतनपरोक्षयोश्च वा लिड्वक्तव्यः । उपसेदिवान् कौत्सः पाणिनिम् । उपासीदत् उपससाद । अपवादविप्रतिषेधाद्धि तयोर्भावः * । अपवादविप्रतिषेधाद्धि तौ स्याताम् । कौ लङ्लिटौ । तस्य क्वसुरपरोक्षे नित्यम् * । तस्य लिटो भाषायां क्वसुरपरोक्षे नित्यमिति वक्तव्यम् । अपरोक्षग्रहणेन नार्थः । तस्य क्वसुर्नित्यमित्येव । केनेदानीं लिटः परोक्षे श्रवणं भविष्यति । परोक्षे लिडित्यनेन । तर्हि वक्तव्यम् । न वक्तव्यम् । अनुवृत्तिः करिष्यते । भाषायां सदादिभ्यो वा लिड् भवति । लिटश्च क्वसुर्भवति ततो लुङ् । लुङ् भूते काले भवति । भाषायां सदादिभ्यो वा लिड् भवति लिटश्च क्वसुर्भवति । ततोनद्यतने लङ् । ततोनद्यतने भूतकाले लङ् भवति । भाषायां सदादिभ्यो वा लिड् भवति लिटश्च क्वसुर्भवति । परोक्षे लिट् । परोक्षे लिड् भवति । भाषायां सदादिभ्यो वा लिड् भवति लिटश्च क्वसुर्भवति । तत्रायमप्यर्थः । तस्य क्वसुरपरोक्षे नित्यमित्येतन्न वक्तव्यं भवति ॥

उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥ किमर्थमुपेयिवानिति निपातनं क्रियते । उपेयुषि निपातनमिडर्थम् । उपेयुषि निपातनं क्रियते इडर्थम् । इडन्यथा स्यादिति । नैतदस्ति प्रयोजनम् । सिद्धोऽत्रेड् वस्वेकाजाद्घसामित्येव । द्विर्वचने कृते ऽनेकाच्त्वान्न प्राप्नोति । इदमिह संप्रधार्यं द्विर्वचनं क्रियतामिडिति । किमत्र कर्तव्यम् । परत्वादिडागमः । नित्यं द्विर्वचनं कृते ऽपीति प्राप्नोत्यकृते ऽपि प्राप्नोति । इडपि नित्यः कृते ऽपि द्विर्वचने एकादेशे च प्राप्नोत्यकृते ऽपि प्राप्नोति । नात्रैकादेशः प्राप्नोति । किं कारणम् । दीर्घ इणः कितीति दीर्घत्वेन बाध्यते । तदेतदुपेयुषि निपातनमिडर्थं क्रियते । उपेयुषि निपातनमिडर्थमिति चेदजादाव-

---

त्यनेन विहितस्य तस्याप्रकृतत्वात् । तस्येति नित्यग्रहणं प्रकृतस्य विकल्पस्य निवृत्त्यर्थमपरोक्षग्रहणं परोक्षे लिडित्यनेन विहितस्य लिटस्तिङां श्रवणार्थम् । अपरोक्षग्रहणेनेति । अनद्यतनपरोक्षयोश्चेति वचनेन वा लिडयं विधीयते तत्र यस्मिन् पक्षेऽयं लिण्न भवति तत्र लङ्लिटौ भवतः । ततश्च परोक्षे लिडिति विहितस्य लिटः सूत्रान्तरविहितत्वात् क्वस्वभावात्तिङो भवन्ति । भाषायां सदादिभ्यो वा लिडिति । लिटः कानज्वेत्यतो वेत्यनुवर्तते । तच्च क्वसुना संबध्यते किं तर्हि लिटा । तत्र वावचनात्पक्षे लुङ्भावः सिध्यति । ततोनद्यतने लङ् परोक्षे लिडित्यत्रास्य सूत्रस्यानुवर्तनादनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड् भवतीत्यर्थः ॥ १०८ ॥

उपेयिवान् ॥ उपसर्गस्यातन्त्रत्वादीयिवान् समीयिवान् इत्याद्यपि भवति । उपेयुषीति । इणो लिट् क्वसुः तत्रेडागमात्पूर्वं नित्यत्वाद् द्विर्वचनं दीर्घ इणः कितीत्यभ्यासस्य दीर्घत्वं तत्सामर्थ्यादेकादेशो न प्रवर्तते । न च दीर्घस्यावकाश ईयतुरित्यादिस्तत्रापि पूर्वपरविधेः पूर्वविधित्वात् तत्र कर्तव्ये यणादेशस्य स्थानिवत्वादेकादेशप्रसङ्गात्

तिप्रसङ्गः * । उपेयुषि निपातनमिडर्थमिति चेदजादावितोतिप्रसङ्गो भवति। उपेयुषा उपेयुषे उपेयुषः उपेयुषीति । एकादिष्टस्येय्भावार्थं तु * । एकादिष्टस्येय्भावार्थं तु निपातनं क्रियते । एकादिष्टस्य ईय् इत्येतद्रूपं निपात्यते । ननु चोक्तं नात्रैकादेशः प्राप्नोति । किं कारणम् । दीर्घ इणः कितीति दीर्घत्वेन बाध्यत इति । तद्धि न सुष्ठूच्यते । न हि दीर्घत्वमेकादेशं बाधते । कस्तर्हि बाधते । यणादेशः स चापि क्व बाधते । यत्रास्य निमित्तमस्ति । यत्र हि निमित्तं नास्ति निष्प्रतिद्वन्द्वस्तत्रैकादेशः । व्यञ्जने यणादेशार्थं वा * । अथ वा व्यञ्जन एव यणादेशो निपात्यते । यणादेशे कृते एकाच इतीट् सिद्धो भवति । अपर आह । नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् । द्विर्वचनं क्रियतामिडिति परत्वादिड् भविष्यति विप्रतिषेधेन । इहापि तर्हि द्विर्वचनादिट् स्याद् विभिद्वान् चिच्छिद्वानिति । अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः । अन्येषामेकाचां द्विर्वचनं नित्यम् । कृतेऽपीटि प्राप्नोति अकृतेऽपि । अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य ॥ अस्य पुनरिट् चैवं नित्योस्य हि द्विर्वचनं च न विहन्यते । द्विर्वचने चैकाच्त्वात् । द्विर्वचने कृते एकादेशे चैकाज्भवति । तस्मादिड् बाधते द्वित्वम् ॥ तस्मादिड् द्विर्वचनं बाधते । अनूचानः कर्तरि * । अनूचानः कर्तरीति वक्तव्यम् । अनूक्तवाननूचानः । अनूक्तमित्येवान्यत्र । नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् अन्येषामेकाचां द्विर्वचनं

---

तत्रानेकाच्त्वादिडप्राप्तो निपात्यत इत्यर्थः । अजादावतिप्रसङ्ग इति । यदा ऽपूर्व इड्निपात्यते तदा विशेषानुपादानादजादावपि प्राप्नोति । यथा स्यसिच्सीयुडित्यत्रोक्तं नित्यश्चायं वल्निमित्तो विघातीति । यदि त्वनेन निपातनेन क्रादिनियमप्राप्तस्य वस्वेकाजाद्घसामित्यनेन नियमेन निवारितस्य प्रतिप्रसवमात्रमिटः क्रियते न त्वपूर्वो विधिस्तदाऽजादावतिप्रसङ्गाभावः । इदानीमजादावतिप्रसङ्गपरिहाराय प्रकारान्तरमाश्रयति । एकादिष्टस्येति । द्विर्वचने कृते अभ्यासस्य दीर्घत्वे चैकादेशस्तस्येयादेशो निपात्यते। यद्यप्युपेयिवानित्येतदियादेशनिपातनेन सिध्यति तथापि समीयिवानित्यादि न सिद्ध्यति तदर्थमीयादेशो निपात्यते । क्व चित्तु भाष्ये इय् इति पाठः स उपेयिवानित्येतद्रूपसिद्ध्यपेक्षया द्रष्टव्यः । कस्तर्हीति । इणो यणित्यनेनाजादौ विधीयमान इत्यर्थः । ननु चोक्तमीयतुरित्यत्राभ्यासदीर्घत्वे कृते एकादेशात् पूर्वं वार्णादाङ्गं बलीय इति यणि कृते स्थानिवत्त्वादेकादेशः ततश्चावश्यमभ्यासदीर्घत्वेनैकादेशो बाध्यः । नैष दोषः । नहि स्थानिवद्भावेन रूपमतिदिश्यते रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति । अथ वा यणादेशेन वार्णादाङ्गमिति वचनेन बाधितस्यैकादेशस्य स्थानिवद्भावाद् बाधितत्वादेव प्रवृत्त्यभावात् व्यञ्जन इति । अभ्यासदीर्घत्वे कृते ऽजादौ विधीयमान इणो यणिति यणादेशो हलादौ न प्राप्नोतीति निपात्यते ततश्चैकाच्त्वाद्वस्वेकाजाद्घसामित्यनेनैवेड्भवतीत्यजादौ न भवति । नोपेयिवानिति । इणो भाषायां

निसमिसाहुः ॥ अस्य पुनरिद्द् च निसो द्विर्वचनं च न विहन्यते ह्रस्य। द्विर्वचने चैकाच्त्वात्तस्मादिड् बाधते द्वित्वम् ॥

लुङ् ॥ ११० ॥ लुङ्लृटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् * । लुङ्लृटोरपवादः प्राप्नोति । अगमाम घोषान् । अपाम पयः । अशयिष्महि पूतीकतृणेषु । गमिष्यामो घोषान् पास्यामः पयः शयिष्यामहे पूतीकतृणेषु । किं कारणम् । भूतभविष्यतोरविशेषवचनात् । भूतभविष्यतोर्ह्यविशेषेणैतौ विधीयेते लुङ्लृटौ तयोर्विशेषविहितौ लङ्लुटावपवादौ प्राप्नुतः । न चापवादस्य निमित्ताभावाद-नद्यतने हि तयोर्विधानम् * । न वा एष दोषः । किं कारणम् । अपवादस्य-निमित्ताभावात् । नात्रापवादस्य निमित्तमस्ति । किं कारणम् । अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ लङ्लुटौ विधीयेते । न चात्रानद्यतनः कालो विवक्षितः । किं तर्हि । भूतकालसामान्यं भविष्यत्कालसामान्यं च । यद्यपि ताव-देतच्छक्यते वक्तुं गमिष्यामो घोषान् पास्यामः पयः । शयिष्यामहे पूतीकतृणेषु । यत्रैतन्न ज्ञायते । किं कदेति । इह तु कथम् । अगमाम घोषान् अपाम पयः अश-यिष्महि पूतीकतृणेष्विति । यत्रैतन्निर्ज्ञातं भवति अमुष्मिन्नहनि गतमिति । अत्रापि नवापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानमित्येव । कथं पुनः सतो नामाविवक्षा स्यात् । सतोऽप्यविवक्षा भवति । तद्यथाऽलोमिका एडका अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा समुद्रः कुण्डिका विन्ध्यो वर्धितक-मिति । वसेर्लुङ्रात्रिशेषे * । वसेर्लुङ् रात्रिशेषे वक्तव्यः । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कं चित्पृच्छति क्व भवानुषित इति स आह अमुत्रावात्समिति । अमु-त्रावासमिति प्राप्नोति । जागरणसन्ततौ * । जागरणसंततावीति वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्रामुत्रावसमित्येव भवितव्यम् ॥

---

केवलभूतमात्रे वा क्लिङ्विधेयस्तस्य च नित्यं क्वसुरादेशः कार्यान्तरं तु सिध्यत्येवेत्यर्थः । अन्येषामिति । भिदादीनां द्विर्वचने कृते ऽनेकाच्त्वादिटोऽप्रसङ्गादनित्यत्वम् ॥१०९॥

लुङ् ॥ लुङ्लृटोरिति । कालविशेषसद्भावाश्रयेण चोद्यम् सामान्यविवक्षाश्रयेण प्रतिसमा-धानम् । न वेति । यत्रैतन्निति । विशेषनिश्चयाभावात् सामान्यस्यैव युक्ता विवक्षेति भावः । असतश्चेति । विवक्षोपारूढ एवार्थः शब्दप्रयोगनिमित्तमित्येतदनेन द्रढयति । इह तु सदेव विशेषेषु सामान्यमाश्रित्य लुङादियोगे उपपद्यत एव । विशेषविवक्षायां तु लङादिप्र-योग इति न कश्चिद्दोषः । वसेर्लुङिति । रात्रेश्चतुर्थे यामे प्रबुद्धो यदा वाक्यं प्रयुङ्क्ते अमुत्रावात्समिति तदा तत्रातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रसङ्गे लुङ् वक्तव्यः । एकस्या रात्रेश्चतुर्थो यामो दिवसश्च सर्वो द्वितीयायाश्च रात्रेः प्रथमोऽद्य-तन इत्याहुः । जागरणसन्ततावीति । यदा प्रयोक्ता सकलमतिक्रान्तरात्रिप्रहरत्रयं जागरितवांस्तदा लुङ्प्रयोगः । यदा तु सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥

अनद्यतने लङ् ॥ १११ ॥ अनद्यतन इति बहुव्रीहिनिर्देशोऽद्य ह्योभु-क्ष्महीति * । अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाद्यतनोनद्य-तन इति । किं प्रयोजनम् । अद्य ह्योभुक्ष्महीति । अद्य च ह्यश्चाभुक्ष्महीति व्या-मिश्रे लुङेव यथा स्यात् । यद्येवमद्यतनेऽपि लुङ् प्राप्नोति न ह्यद्यतनेद्यतनो विद्यते । अद्यतनेऽपि हि अद्यतनो विद्यते । कथम् । व्यपदेशिवद्भावेन । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषयः * । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शन-विषये लङ् वक्तव्यः । अरुणद्यवनः साकेतम् । अरुणद्यवनो माध्यमिकाम् । परोक्ष इति किमर्थम् । उदगादादित्यः । लोकविज्ञात इति किमर्थम् । चकार कटं देव-दत्तः । प्रयोक्तुर्दर्शनविषय इति किमर्थम् । जघान कंसं किल वासुदेवः ॥

विभाषा साकाङ्क्षे ॥ ११४ ॥ किमुदाहरणम् । अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । तत्र सक्तून् पास्यामः । अभिजानासि देवदत्त कश्मी-रानगच्छाम । तत्र सक्तूनपिबाम । भवेत् पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात् परं तु कथं साकाङ्क्षम् । परमपि साकाङ्क्षम् । कथम् । अस्त्यस्मिन्ना-काङ्क्षेत्यतः साकाङ्क्षम् । विभाषा साकाङ्क्षे सर्वत्र * । विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम् । क्व सर्वत्र । यदि चायदि च । यदि तावत् । अभिजानासि देवदत्त यत्कश्मीरान् गमिष्यामः यत्कश्मीरानगच्छाम । यत्तत्रौदनं भोक्ष्यामहे यत्तत्रौदनमभुञ्ज्महि । अयदि । अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ॥

परोक्षे लिट् ॥ ११५ ॥ परोक्ष इत्युच्यते । किं परोक्षं नाम । परमक्ष्णः परोक्षम् । अक्षि पुनः किम् । अश्नोतेरयमौणादिकः करणसाधनः क्सिप्रत्ययः ।

---

अनद्यतने ॥ व्यपदेशिवद्भावेनेति । यथा मुख्ये भेद आधाराधेयभावो भवति तद्वे तिष्ठतीति ॥ तथेहापि समुदायावयवभेदाश्रयेण समुदाये ऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते ननु तत्त्वतो ऽवयवव्यतिरिक्तोत्र समुदाय आधा-रोस्ति । तदुक्तं हरिणा । कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः । न च निर्देश-मात्रेण व्यतिरेकोनुगम्यत इति ॥ परोक्षे चेति । अननुभूतत्वात्परोक्षोपि प्रत्यक्षयोग्य-तामात्राश्रयेण दर्शनविषये इति विरोधाभावः ॥ १११ ॥

विभाषा सा ॥ भवेत्पूर्वमिति । यदतिप्रसिद्धं वासगमनादि तल्लक्षणं तच्च परार्थमु-पादीयमानं यत्तत् स्मार्यमाणत्वाल्लक्ष्यं भोजनादि प्रति भवतु साकाङ्क्षं लक्ष्यन्तु प्रधा-नमपरोपकारि कथं साकाङ्क्षमित्यर्थः । अस्त्यस्मिन्निति । सहशब्दो विद्यमानार्थवृत्तिः तेन विद्यमानाकाङ्क्षः साकाङ्क्षोर्थे उच्यते लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद् द्वयोर-पि साकाङ्क्षत्वमित्यर्थः।सर्वत्रेति।यदीति नानुवर्तते तेनोभयत्र विभाषेयमिति भावः॥११४॥

परोक्षे लिट् ॥ किं परोक्षमिति । यद्यपीन्द्रियाविषयोर्थः परोक्षशब्दवाच्य इति

अश्नुते ऽनेनेत्यक्षि। यद्येवं पराक्षमिति प्राप्नोति। नैष दोषः। परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम्॥ परशब्दस्याक्षिशब्दे उत्तरपदे परोभावो वक्तव्यः। उत्वं वादे परादक्ष्णः॥ अथ वा परशब्दादुत्तरस्याक्षिशब्दस्योत्वं वक्तव्यम्। सिद्धं वास्मान्निपातनात्॥ अथ वा निपातनादेव सिद्धं परोक्षे लिडिति। कस्मिन् पुनः परोक्षे लिड् भवति। काले। न वै कालाधिकारोस्ति। एवं तर्हि धातोरिति वर्तते धातौ परोक्षे। धातुर्वै शब्दः। न च शब्दस्य प्रत्यक्षपरोक्षतायां सम्भवोस्ति। शब्दे ऽसम्भवादर्थे कार्यं विज्ञास्यते परोक्षे धातौ परोक्षे धात्वर्थइति। कः पुनर्धात्वर्थः। क्रिया। क्रियायां परोक्षायामिति। यद्येवं ह्योपचादिषु लिट् प्राप्नोति। किं कारणम्। क्रियानामेयमसन्तापरदृष्टा अनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम्। यथा गर्भो निर्लुठितः। एवं तर्हि साधनेषु परोक्षेषु। साधनेषु च परोक्षेषु भवतः। कः सम्प्रत्ययः। यदि तावद् गुणसमुदायः साधनम्। साधनमप्यनुमानगम्यम्। अथान्यद् गुणेभ्यः साधनं

---

जानाति तथापि सर्वस्याः क्रियायाः परोक्षत्वाद्विशेषणानर्थक्यमिति पृच्छति परमक्ष्ण इति। मयूरव्यंसकादित्वात्समासः। अच्प्रत्यन्ववपूर्वेत्यत्राजिति योगविभागादत एव वा निपातनादच्समासान्तः। यद्वा प्रतिपरसमनुभ्योक्ष्ण इति टच्समासान्तः। स च यद्यप्यव्ययीभावे विधीयते तथापि परशब्दस्याक्षिशब्देनाव्ययीभावासंभवात्समासान्तरे विज्ञायते। वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवाची न तु चक्षुर्मात्रपर्यायः। अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षशब्दवाच्यं स्यात्। अत एवान्ये दर्शनपर्यायोयमक्षिशब्दो न भवतीति अक्ष्णोदर्शनादित्येवं समासान्तं कुर्वन्ति। ततो यदिन्द्रियात्परमिन्द्रियगोचरतामापन्नं वस्तु तत्परोक्षमित्यर्थः। अक्षि पुनरिति। किं चक्षुरेवाक्षिशब्देनोच्यते अथ सर्वमिंति प्रश्नः। अश्नोतेरिति। व्युत्पत्तिद्वारेण विषयव्यापनात्सर्वमिन्द्रियं वृत्तिविषयेऽक्षिशब्दो धक्तीत्यर्थः। सिद्धं चेति। निर्भागः समुदाय एवेन्द्रियागोचरार्थवाची निपात्यत इत्यर्थः। काल इति। यथाकालस्य नित्यपक्ष उपाधिभेदाद् भूतादिव्यपदेशस्तथा परोक्षत्वमपि। अनित्यक्रियारूपकालपक्षे तु स्वत एव परोक्षत्वम्। न च शब्दस्येति। प्रत्ययप्रकृतेः शब्दस्योच्चार्यमाणस्यानुभूतत्वात्परोक्षत्वासंभवः। ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य विशेषणं न संभवति एवं परोक्षत्वमप्यसंभवाद्विशेषणमित्यर्थः। कः पुनरिति। यद्येकैकः क्षणो धात्वर्थस्तदा तस्य प्रत्यक्षत्वपरोक्षत्वसंभवाद्युक्तं विशेषणम्। अथ समूहस्तस्य युगपदसंनिधानादप्रत्यक्षत्वाव्यभिचारात्परोक्षत्वमविशेषणमिति मत्वा प्रश्नः। क्रियेति। समूहरूपेति भावः। साधनेष्विति। शक्तिशक्तिमतोरभेदविवक्षया साधनशब्देन शक्तिमन्ति द्रव्याण्युच्यन्ते। इतरो यथोक्तमभिप्रायमप्रतिपद्य पृच्छति साधनेष्विति। गुणसमुदाय इति। शक्तीनां समुदाय इत्यर्थः। समुदायग्रहणं सर्वासां करणादिशक्तीनां क्रियासिद्धौ निमित्तत्वाविशेषात् साधनत्वप्रतिपादनार्थम्। तेन यावदुक्तं सर्वाः शक्तयः साधनमिति तावद् गुणसमुदायः साधनमिति। साधनमपीति। शक्तीनां नित्यानुमेयत्वात्। अथान्यदिति।

भवति प्रत्यक्षपरोक्षतायां सम्भवः। अथ यदानेन रथ्यायां तण्डुलोदकं दृष्टं कथं तत्र भवितव्यम्। यदि तावत्साधनेषु परोक्षेषु। पपाचेति भवितव्यम्। भवन्ति हि तस्य साधनानि परोक्षाणि। अथ य एते क्रियाकृता विशेषाश्चीत्काराः फूत्काराश्च तेषु परोक्षेषु। एवमपि पपाचेति भवितव्यम्। कथंजातीयकं पुनः परोक्षं नाम। के चित्तावदाहुः वर्षशतवृत्तं परोक्षमिति। अपर आहुः वर्षसहस्रवृत्तं परोक्षमिति। अपर आहुः कुड्यकटान्तरितं परोक्षमिति। अपर आहुः द्व्यहवृत्तं त्र्यहवृत्तं चेति। सर्वथोत्तमो न सिध्यति। सुप्तमत्तयोरुत्तमः ॥ सुप्तमत्तयोरुत्तम इति वक्तव्यम्। सुप्तोऽहं किल विललाप। मत्तोऽहं किल विललाप। सुप्तोन्वहं किल विललाप। मत्तोन्वहं किल विललाप। अथ भवति वै कश्चिज्जाग्रदपि वर्तमानं कालं नोपलभते। तद्यथा। वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे। किं पुनः कारणं कश्चिज्जाग्रदपि वर्तमानं कालं नोपलभते। मनसा प्रयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति मनसोऽसांनिध्यात्। परोक्षे लिङत्यन्तापह्नवे च ॥ परोक्षे लिडित्यत्यन्तापह्नवे चेति वक्तव्यम्। नो खण्डिकान् जगाम। नो कलिङ्गाञ्जगाम। न कारि सोमं प्रपपावन्न दार्वजस्य प्रतिजग्राह। को मे मनुष्यः प्रहरेद्वधाय। परो भावः परस्याक्षे परोक्षं लिटि दृश्यताम्। उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात् ॥

---

शक्तिव्यतिरिक्तं शक्तिमद्द्रव्यमित्यर्थः। तत्र द्रव्यप्रत्यक्षत्वे लोकस्य क्रियाप्रत्यक्षत्वाभिमानः तत्परोक्षत्वे क्रियापरोक्षत्वमित्यर्थः। यदि तावदिति। दृष्ट्वापि तण्डुलोदकं यदा न निश्चितवान् किमेते तण्डुलाः पच्यन्तेऽथ हूयन्तेऽथ कुट्यन्ते इति तदा प्रमाणान्तरेण यदा कालान्तरे प्रयोक्ता पाकमवगम्य वाक्यं प्रयुङ्क्ते तदा साधनत्वस्य संरम्भरूपस्य परोक्षत्वात्पपाचेति प्रयुङ्क्ते। अथेति। क्रियाकृतविशेषप्रत्यक्षत्वेऽपि लोकस्य क्रियाप्रत्यक्षत्वाभिमानः। तत्परोक्षत्वे तु पपाचेत्येव भाव्यमित्यर्थः। कथंजातीयकमिति। यस्मिन् भूतानद्यतनपरोक्षे लिटा भाव्यं तत्परिज्ञानाय प्रश्नः। के चिदिति। मतभेदप्रदर्शनायानेकदर्शनोपन्यासः। इन्द्रियागोचरसाधनसाधितानद्यतनक्रियावाचिनस्तु धातोर्लिट्प्रत्यय इति निर्णयः। तथाच ह्यः पपाचेत्याद्यपि भवति। सर्वथेति। आत्मसाध्यायाः क्रियायाः प्रत्यक्षत्वाभिमानइतिभावः। सुप्तमत्तयोरिति। सुप्तमत्तग्रहणं चित्तविक्षेपनिमित्तोपलक्षणम्। असान्निध्यादिति। विषयान्तरेणाकृष्टत्वान्मदाद्यभिभवाद्वेति भावः। अत्यन्तापह्नवे चेति। न केवलं तद्देशस्य भोजनादेरपह्नवः यावत्तद्देशगमनादेरपि यदि भवतीत्यर्थः। खण्डिका नाम जनपदः। त्वया अयाज्यो याजित इत्युक्तः कश्चिदाह नकारि सोममिति। कारी याजक ऋत्विगुच्यते। तस्य सोमं नाहं पपौ। ऋत्विग् भूत्वा सोमं न पीतवान्। अपि तु यजमान एव भूत्वेत्यर्थः। ऋत्वि-

लट् स्मे ॥ ११८ ॥ स्म पुराभूतमात्रे न स्मपुराद्यतने * । स्मपुराभूतमात्रे न स्मपुराद्यतन इति वक्तव्यम् । किमयं स्मादिविधिः पुरान्तोऽविशेषेण भूतमात्रे भवति । तत्र वक्तव्यं स्मलक्षणः पुरालक्षणश्चाद्यतने न भवत इति आहोस्वित् स्मलक्षणः पुरालक्षणश्चाविशेषेण भूतमात्रे भवत इति । तत्र स्माद्यर्थे न स्मपुराद्यतन इति वक्तव्यम् । किं चातः । स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति । न स्म पुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ स्मादिविधिः पुरान्तो यद्यविशेषेण भवति किं वार्तिककारः प्रतिषेधेन करोति न स्मपुराद्यतन इति । अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम् । लट् स्म इत्यत्रानद्यतन इत्येतदनुवर्तिष्यते । अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ ॥ न पुराद्यतनइति भवेदेतद्वाच्यम् । तत्रैतावद्वक्तव्यं स्याद् न पुराद्य-

---

एकमेवापह्नुते । तथा प्रतिग्रहस्त्वया ऽयोग्याद्गृहीत इत्युक्त आह न दार्वेजस्येति । दार्वो नाम जनपदविशेषः । तत्र जातस्याहं न प्रतिजग्राहेति सर्वथा प्रतिगृहीतृत्वमपह्नुते । को ते मनुष्य इति । को मनुष्यो वधाय ममासत्यारोपणेन प्रहरेदित्यर्थः ११५॥

लट् स्मे ॥ इत आरभ्य पञ्चसूत्र्यां कालविभागप्रतिपादनाय वार्तिकद्वयम् । स्मपुराभूतमात्रे न स्म पुराद्यतन इति । तस्यायमर्थः । प्रथमे वार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां पञ्चसूत्री लक्ष्यते । तत्र भूतमात्रे प्रत्ययो भवति । स्मपुरालक्षणस्तु प्रत्ययोऽद्यतने न भवति । एतदुक्तं भवति । लट् स्मे अपरोक्षे च पुरि लुङ् चास्मे इति सूत्रत्रयेणानद्यतने भूतविशेषे प्रत्ययो भवति । ननौ पृष्टप्रतिवचने नन्वोर्विभाषेत्येताभ्यां तु भूतमात्रे प्रत्ययः । तत्र स्मपुरेति वार्तिकद्वये विधिप्रतिषेधयोरुपादानाद्भूतमात्रस्य विधानात्तस्यैव चाद्यतननिषेधद्वारेणानद्यतनलक्षणविशेषप्रतिपादनेन निषेधादेकस्मिन् विषय एकस्य विधिप्रतिषेधयोरत्यन्तविरोधात् पूर्वोक्तविषयविभाग आश्रीयते । किमर्थमिति । स्मपुराभूतमात्र इत्यत्र वार्तिके स्मपुराशब्दाभ्यां यदि पञ्चसूत्री लक्ष्यते तदा मध्यमौ योगौ भूतमात्रे भवतो न स्मपुराद्यतन इति वचनाच्च स्मपुरालक्षणो विधिरनद्यतन एव । अथ स्मपुराभूतमात्र इत्यनेन स्मपुरालक्षणस्यैव विधेर्भूतमात्रं निर्दिश्यते । न स्मपुराद्यतन इत्यत्र वार्त्तिके स्मपुराशब्दाभ्यां मध्यमौ योगौ लक्ष्येते तदा ननौ पृष्टप्रतिवचनेनन्वोर्विभाषेत्येताभ्यां योगाभ्यामनद्यतन एव विधिना भवितव्यमिति प्रश्नः । किं चात इति । एकतरस्मिन् वार्तिके स्मपुराशब्दावुपलक्षणत्वेनाश्रयणीयौ तत्र पूर्वस्मिन् परस्मिन् वा विशेषमपश्यन् पृच्छति । इतरो वार्तिकप्रत्याख्यानाय मया विकल्पितमेतदित्याह स्मादिविधिरिति । लट्स्मे । अपरोक्षे च । पुरि लुङ् चास्मे । इत्येतेषु योगेष्वनद्यतनग्रहणानुवृत्त्येष्टस्यार्थस्य सिद्धत्वान्न स्म पुराद्यतन इति वार्तिकं न कर्तव्यमित्यर्थः । अपरोक्षानद्यतनाविति । तेन भूतमात्र एताभ्यां योगाभ्यां विधिरित्यर्थः । पुरि लुङ् चास्म इत्यत्राप्यनद्यतनग्रहणनिवृत्तौ भूतमात्रे विधिः प्राप्नोतीत्याह न पुरेति । तत्रेति । पुरि लुङ् चास्म इत्यत्रानद्यतनग्रहणमनुव-

तन इति। तत्र चापि लुङ्ग्रहणम्॥ तत्र चापि लुङ्ग्रहणं ज्ञापकं न पुरालक्षणोद्यतने भवतीति। अथ बुद्धिरियमविशेषेण स्मपुरा हेतू इति। तत्र चापि शृणु-भूयः॥ अपरोक्षे चेत्येष प्राक् पुरिसंशब्दनादविनिवृत्तः। सर्वत्रानद्यतनस्तथा-सति नञा किमिह कार्यम्॥ स्मादावपरोक्षे चेत्सकार्यमपि शक्यमेतदिति विद्धि। शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र॥ स्यादेषा तव बुद्धिः स्मलक्षणेप्येवमेव सिद्धमिति। लट् स्म इति भवेन्नार्थस्तस्मत्कार्यं पुरार्थं तु॥ एवं तर्हि ज्ञापयत्याचार्यः स्मलक्षणः पुरालक्षणश्चानद्यतने भवत इति॥

ननौ पृष्टप्रतिवचने॥ १२०॥ ननौ पृष्टप्रतिवचन इत्यशिष्यं क्रियासमाप्तेर्विवक्षितत्वात् *। ननौ पृष्टप्रतिवचन इति अशिष्यो लट्। किं कारणम्। क्रियासमाप्तेर्विवक्षितत्वात्। क्रियाया अत्र असमाप्तिर्विवक्षिता। एष एव न्याय्यो

---

तेत इत्येतल्लुङ्ग्रहणेन ज्ञाप्यते। यदि तु भूतमात्रेऽयं विधिः स्यात्तदा नन्वोर्विभाषेत्यतो विभाषाग्रहणानुवृत्त्या विकल्पेन लटो विधानात् पक्षे लुङ् भविष्यति किं लुङ्ग्रहणेन। अनद्यतनानुवृत्तौ तु लुङ्ग्रहणमन्तरेण पक्षे लुङ् न लभ्यते लङा बाधितत्वाद् इति भावः। अथ बुद्धिरिति। लटस्मे पुरि लुङ् चास्मे एतावाद्यन्तौ योगौ यदि भूतमात्रे भवत इत्यर्थः। स्मपुराहेतू इति। स्मपुराशब्दौ प्रत्ययोत्पत्तेर्निमित्ते इत्यर्थः। तत्र चापीति। अयमर्थः। न स्म पुराद्यतन इत्ययं निषेधो यद्याद्यन्तोपलक्षितमध्यमयोगविषयस्तदा न कर्तव्य एव। अपरोक्षग्रहणं ननौ पृष्टप्रतिवचने नन्वोर्विभाषेत्यत्रानुवर्तिष्येत। तदनुवृत्त्याऽनद्यतनग्रहणानुवृत्तिरनुमास्यते। यस्मात्परोक्षानद्यतनयोः प्रकृतत्वेऽन्यतरनिवृत्तिर्यत्नेन क्रियमाणा द्वितीयस्यानुवृत्तिमनुमापयति। अपरोक्षग्रहणेन हि परोक्षाधिकारो निवर्त्यते यथाऽद्वन्द्वग्रहणं द्वन्द्वाधिकारग्रहणनिवृत्त्यर्थमित्युक्तम्। इदानीमपरोक्षे चेत्येतत् सूत्रं प्रत्याख्यातुमाह स्मादाविति। स्मादिग्रहणेन स्मादिविधिः पुरान्त इत्येष पक्षो लक्ष्यते। लट् स्मइत्यादिसूत्रेषु परोक्षग्रहणस्य निवृत्तत्वादपरोक्षे चेत्येतत् सूत्रं न कर्तव्यमित्यर्थः। इदानीमाचार्यः सूत्रं समर्थयितुमाह स्यादेषेति। यदि त्वं मन्यसे लट् स्म इत्यत्र परोक्षग्रहणनिवृत्तौ सत्यां परोक्षे चापरोक्षे च लङ् भविष्यतीति नार्थोऽपरोक्षे चेत्येतत्सूत्रेणेति। तन्न। यस्मादपरोक्षग्रहणमनद्यतनानुवृत्तिज्ञापनार्थं कर्तव्यम्। लट्स्म इत्ययं योगः परोक्षानद्यतने वर्तेते। यदि ह्यत्र परोक्षग्रहणं निवर्तेत तदा तत्संबद्धमनद्यतनग्रहणमपि निवर्तेत तस्मादपरोक्षे चेतिसूत्रारम्भात् लट्स्मे इत्ययं योगः परोक्षानद्यतनविषयः अपरोक्षे चेत्ययमपरोक्षानद्यतनविषयः। पुरि लुङ् चास्मे इत्ययं तु लुङ्ग्रहणादनद्यतनविषयः। मध्यमौ तु भूतमात्रविषयाविति सूत्रेणैव व्यवस्थायाः सिद्धत्वान्नार्थो वार्तिकारम्भेणेत्यर्थः। ननौपृष्टप्रतिवचनइत्ययं योगो येन नाप्राप्तिन्यायेन लुङो बाधकः परत्वेन लङ्लिटोः ११८॥

ननौ पृष्ट॥ असमाप्तिरिति। निवृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवर्तनात्तस्या एवासमाप्तिविवक्षायां लट् सिद्ध इत्यर्थः। इष्यते इत्यनेन प्रत्याख्यानं द्रढयति। यदि हि भूताश्रयो लट् क्रियेत तदा वर्तमानाधिकाराद्वर्तमाने विहितस्य

वर्तमानः काल: यत्र क्रियाया असमाप्तिर्भवति तत्र वर्तमाने लडिसेव सिद्धम्। यदि वर्तमाने लडित्येव लड् भवति। शतृशानचौ च प्राप्नुतः। इष्येते शतृशानचौ। ननु मां कुर्वन्तं पश्य। ननु मां कुर्वाणं पश्येति॥

पुरि लुङ् चास्मे॥ १२२॥ हशश्वद्भ्यां पुरा *। हशश्वल्लक्षणात्पुरालक्षणो भवति विप्रतिषेधेन। हशश्वल्लक्षणस्यावकाशः। इति हाकरोत् इति ह चकार। शश्वदकरोत्। शश्वच्चकार। पुरालक्षणस्यावकाशो रथेनायं पुरा याति। रथेनायं पुरायासीत्। इहोभयं प्राप्नोति। रथेन हशश्वत्पुरा याति। रथेन हशश्वत्पुरायासीत्। पुरालक्षणो भवति विप्रतिषेधेन। स्मः सर्वेभ्यो विप्रतिषेधेन *। स्मलक्षणः सर्वेभ्यो भवति विप्रतिषेधेन। हशश्वल्लक्षणात्पुरालक्षणाच्च। हशश्वल्लक्षणस्यावकाशः। इति हाकरोत् इति ह चकार। शश्वदकरोत् शश्वच्चकार। पुरालक्षणस्यावकाशः। रथेनायं पुरा याति। रथेनायं पुरायासीत् स्मलक्षणस्यावकाशः। धर्मेण स्म कुरवो युध्यन्ते। इह सर्वं प्राप्नोति न ह स्म वै पुरा शश्वदग्निरपशुदृक्कणं दहति। स्मलक्षणो लड् भवति विप्रतिषेधेन। पुरि लुङ्॥

वर्तमाने लट्॥ १२३॥ प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात् *। प्रवृत्तस्याविरामे शासितव्या भवन्ती। इहाधीमहे। इह वसामः। इह पुष्यमित्रं याजयाम इति। किं पुनः कारणं न सिध्यति। अवर्तमानत्वात्। नित्यप्रवृत्ते च कालाविभागात् *। नित्यप्रवृत्ते च शाशितव्या भवन्ती। तिष्ठन्ति पर्वताः स्रवन्ति नद्य इति। किं पुनः कारणं न सिध्यति। कालाविभागात्। इह भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः कालः न चात्र भूतभविष्यन्तौ कालौ स्तः। न्याय्या त्वारम्भानपवर्गात् *। न्याय्या त्वेषा वर्तमानकालता। कुतः। आरम्भानपव-

---

लटो विधीयमानौ शतृशानचावस्य लटो न स्याताम्। अथ पृष्टग्रहणं किमर्थम्। यावता प्रश्नपूर्वकमेव प्रतिवचनं भवति। नैतदस्ति। विरुद्धमपि वचनं वचनाभिमुख्यमपि तथा वचनं वचनं प्रति प्रतिवचनमित्यनेकार्थसंभवात् पृष्टग्रहणं कर्तव्यम् १२०॥

पुरि लुङ्॥ स्मः सर्वेभ्य इति। परविप्रतिषेधेन पूर्वविप्रतिषेधेन च। ततश्च पुरि-लुङ् चास्मे इति अस्म इति न वक्तव्यं भवतीति भावः॥ १२२॥

वर्तमा॥ प्रवृत्तस्येति। इहाधीमह इत्यध्ययनं प्रवृत्तं प्रारब्धं न च तद्विरतम्। यदा च भोजनादिकां क्रियां कुर्वन्तो नाधीयते तदाऽधीमह इति प्रयोगो न प्राप्नोति इति वचनम्। भवन्तीति। लटः पूर्वाचार्यसंज्ञा। नित्यप्रवृत्ते चेति। पर्वतास्तिष्ठन्तीत्यादौ स्थानादेः सर्वदा सद्भावात् साध्यत्वाभावात् क्रियारूपत्वाभावात्तद्धर्मस्य वर्तमानत्वस्याप्यभाव इति भावः। भूतेति। साध्यस्यार्थस्यानित्यत्वादवश्यं भविष्यत्वेन भाव्यम्। उत्पन्नस्यापि नाशाद्भूतत्वेन भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानो धात्वर्थो नित्यप्रवृत्तस्य भूतभविष्यत्त्वाभावाद्वर्तमानत्वाभावः क्रियारूपत्वाभावश्चेत्यर्थः। न्याय्या त्विति।

र्गात्। आरम्भोत्रानपवृक्तः। एष एव च नाम न्याय्यो वर्तमानकालो यत्रारम्भोनपवृक्तः। अस्ति च मुक्तसंशये विरामः *। यं खल्वपि भवान् मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते भुङ्क्ते देवदत्त इति। तेनैतत्तुल्यम्। सोपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति। यद्यत्र युक्ता वर्तमानकालता दृश्यते। इहापि युक्ता दृश्यताम्। सन्ति च कालविभागाः *। सन्ति च खल्वपि कालविभागाः।तिष्ठन्ति पर्वताः स्थास्यन्ति पर्वतास्तस्थुः पर्वताइति। किं शक्यन्त एते शब्दाः प्रयोक्तुमिसतः सन्ति कालविभागाः। नावश्यं प्रयोगादेव। इह हि भूतभाविष्यद्वर्तमानानां राज्ञां याः क्रियास्ताः तिष्ठतेरधिकरणम्। इह तावत्तिष्ठन्ति पर्वता इति संप्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु। स्थास्यन्ति पर्वता इति। इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु। तस्थुः पर्वता इति।इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तास्वतिक्रान्तासु। अपरआहुः। नास्ति वर्तमानः काल इति। अपि चात्र श्लोकानुदाहरन्ति। न वर्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय। कूटस्थोयं लोको न विचेष्टितास्ति यो ह्येवं पश्यति सोप्यनन्धः॥ मीमांसको मन्यमानो युवा मेधाविसंमतः। काकं स्मेहानुपृच्छति किं ते पतितलक्षणम्॥ अनागतेन पतासि अतिक्रान्ते च काकता। यदि संप्रति पतसि सर्वो लोकः पतत्ययम्॥

---

अध्ययनं यदा प्रवृत्तं न चोपरतं तदा तस्य भोजनादिक्रियानान्तरीयकत्वादव्यवधायिका। अथ वाध्ययनस्यैवावयवक्रियेति भावः। तदुक्तं हरिणा। व्यवधानमिवोपैति निवृत्त इव दृश्यते। क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः॥ न च विच्छिन्नरूपोपि सोविरामान्निवर्तते। सर्वैव हि क्रियान्येन संकीर्णेवोपलभ्यते। तदन्तरालदृष्टा वा सर्वैवावयवक्रिया। सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यत इति॥ नित्यप्रवृत्तस्य वेत्यस्योत्तरं सन्तीति। इहेति। प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपारिच्छेदात्काल इत्युक्तम्। तत्र राज्ञां स्थितिभूतातिभेदेन भिन्ना पर्वतादिस्थित्यादंभेदिकेति क्रियारूपत्वं कालत्रययोगश्चोपपन्न इत्यर्थः। उक्तञ्च हरिणा। परतोभिद्यते सर्वमात्मा तु न विकल्पते। पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते॥ प्रसिद्धभेदाव्यापाराविरूपापयवक्रियाः। साहचर्येण भिद्यन्ते सरूपावयवक्रिया इति॥ ता इति। तासामेव कालरूपत्वात् कालस्य च क्रियाधिकरणत्वादिति भावः। नास्तीति निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य भावित्वान्निष्पन्नान्निष्पन्नव्यतिरेकेण रूपान्तरस्याभावः। न वर्तत इति। परिवर्तनक्रियाया वर्तमानाया अभावादिति भावः। कूटस्थ इति। स्वरूपस्थो न तु वर्तमानक्रियाविशिष्ट इत्यर्थः। अत एवाह न विचेष्टितेति। व्यापारस्य न कर्तेत्यर्थः। एवं यो वेत्ति सोप्यनन्धः किं पुनर्योऽनुष्ठाता योगीत्यर्थः। स ह्यविकृतमात्मतत्त्वं भावयन् प्रत्यक्षीकरोति। तथा चोक्तं भगवता। ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमिति॥ मीमांसक इति। विचारकः। युवेत्यनेन प्रज्ञायां पाटवं दर्शयति। मेधाविसंमत इति। मेधावी चासौ सम्मतश्चेति कर्मधारयः।

हिमवानपि गच्छति ॥ अनागतमतिक्रान्तं वर्तमानमिति त्रयम् । सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥ क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् । तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥ अपर आह । अस्ति वर्तमानः काल इति । आदित्यगतिवन्नोपलभ्यत इति । अपि चात्र श्लोकमुदाहरन्ति । विसस्य वाला इव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते । अस्तीति तां वेदयन्ते त्रिभावाः सूक्ष्मो हि भावोऽनुमितेन गम्यः ॥ इति वर्तमाने लट् । इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥** लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र * । लस्य अप्रथमासमानाधिकरणेनायोगादादेशयोरनुपपत्तिर्यथान्यत्र । तद्यथा । अन्यत्रापि लस्याप्रथमा-

---

षष्ठीसमासस्य तु केन च पूजायामिति निषेधात् । पतितलक्षणमिति । पातः पतितं तस्य किं रूपं नास्त्येव पतनक्रियेत्यर्थः । अनागत इति । अनागतत्वादेवासत्त्वात् पातक्रियायाः पतसीति व्यपदेशोऽनुपपन्न इत्यर्थः । अतिक्रान्त इति । तथैव क्रियाया असत्त्वात् । सर्वो लोक इति । क्रियाया वर्तमानत्वाभावेऽपि यदि पतसीति व्यपदेशस्तदा विशेषाभावात् पर्वतादावपि पतसीति व्यपदेशप्रसङ्ग इत्यर्थः । अनागतमिति । एक एव क्षण उपलभ्यते नातीतो नाप्यनागतो न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः । सर्वत्रेति । कालवृत्तित्वाविवक्षायां दाप्रत्ययो न कृतः । क्रियाप्रवृत्ताविति । परिहारः । हेतुः प्रयोजनं गमनस्य देशान्तरप्राप्तिस्तदर्थं फलार्थमित्यर्थः । इह प्रत्यभिज्ञानात् क्षणभङ्गनिरासे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न संभवतीति गमनक्रियैव तस्यानिमित्तम् । तदालम्बनश्च गच्छतीति प्रत्ययो ऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यते क्रियायाः वर्तमानत्वाभावे च भूतभविष्यतोरप्यभावप्रसङ्गो वर्तमानो भूतत्वं भविष्यत्त्वञ्च प्रतिपद्यते । तत्रानेकक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्ध्या संकलय्य गच्छतीत्यादिप्रयुज्यतइत्यर्थः । अविचारयन्निति । कुविकल्पकलङ्करहितमित्यर्थः । विसस्येति । विसस्य वाला विसे दह्यमाने दह्यमाना अपि न प्रत्यक्षं दह्यमानत्वेनावसीयन्ते । किं तर्ह्यनुमानेन विसान्तर्गतत्वात्तद्दाहे तेषामपि दाहः प्रतीयते । तथा कारकसंनिपात एकैकक्षणग्रहणे क्रियावेशलक्षणा विकृतिः प्रत्यक्षेण लक्ष्यते । तां तु त्रिभावा अस्तीति निश्चिन्वन्ति । त्रिषु कालेषु भावो भावना येषां ते त्रिभावा योगिनो ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति । सूक्ष्म इति । अनेकक्षणसमूहात्मकस्य धातुवाच्यस्य अर्थस्य क्रियारूपस्य युगपदसंनिधानादनुमीयत इत्यर्थः ॥१२३॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

लटः शतृ ॥ लस्येति । इहायं लकारो लः कर्मणि च भावे चेत्यनेन कर्तृकर्मणोर्विधीयमानो गुणभूते क्रियां प्रति कर्तृकर्मणी प्रतिपादयति । तथा च पचत्योदनं देवदत्त

समानाधिकरणेन योगो न भवति क्वान्यत्र । लङि । अपचदोदनं देवदत्त इति । योग इति चेदन्यत्रापि योगः स्यात्* । अथ मतमेतद् । भवति योग इति । अन्यत्रापि योगः स्याद् । क्वान्यत्र । लङि । अपचदोदनं देवदत्त इति । न क्वचिद्योग इति कृत्वातः सर्वत्र योगेन भवितव्यम् । क्व चिद्वाऽयोग इति कृत्वा सर्वत्रायोगेन । तद्यथा । समानमीहमानानां चाधीयानानां च के चिदर्थैर्युज्यन्ते । अपरे ना न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुं कश्चिद्वानर्थक इति सर्वैरनर्थकः । तत्र किमस्माभिः शक्यं कर्तुं यल्लटोऽप्रथमासमानाधिकरणेन योगो भवति लङो न भवति । स्वाभाविकमेतद् । अथ वाऽऽदेशेन सामानाधिकरण्यं दृष्ट्वानुमानाद्गन्तव्यं प्रकृतेरपि सामानाधिकरण्यं भवतीति । तद्यथा । धूमं दृष्ट्वाग्निरत्रेति गम्यते त्रिविष्टब्धकं दृष्ट्वा परिव्राजक इति । विषम उपन्यासः । प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति । त्रिविष्टब्धकपरिव्राजकयोश्च । स त द्विदेशस्थमपि दृष्ट्वाध्यवस्यति अग्निरत्र परिव्राजकोऽत्रेति । भवति वै प्रत्यक्षादप्यनुमानबलीयस्त्वम् । तद्यथा । अलातचक्रं प्रत्यक्षं दृश्यते अनुमानाच्च गम्यते नैतदस्तीति । कस्य चित्खल्वपि सकृत्कृतोभिसम्बन्धोऽत्यन्ताय कृतो भवति । तद्यथा । वृक्षपर्णयोरयं वृक्ष इदं पर्णमिति । स तद्विदेशस्थमपि दृष्ट्वा जानाति

---

ओदनः पच्यते देवदत्तेनेति क्रियाप्रधानत्वात् क्रियान्तरयोगाभावाच्छक्त्यन्तरावेशाभावः । अन्ये तु कृतः प्राधान्येन कर्त्रादीनि प्रतिपादयन्ति तथा च क्रियान्तरयोगे शक्त्यन्तरावेशो भवति । पाचकं पश्य पक्त्रेन तृप्त इति । ततश्च लङादिवल्लटोपि क्रियान्तरयोगाभावाद् द्वितीयाद्यनुत्पत्तावप्रथमान्तेन सामानाधिकरण्यं नोपपद्यत इत्यर्थः । अपचदिति । तथा चापचद्यो नं देवदत्तं पश्येत्यादि प्रसज्येतेत्यर्थः । न क्वचिदिति । तिङ्भाविनो लकारस्य गुणभूतकर्त्राद्यभिधानम् । शत्रादिविषयस्य तु क्रियोपसर्जनकर्त्राद्यभिधानम् । तथा च क्रियान्तरनिमित्तद्वितीयादिसामानाधिकरण्योपपत्तिरित्यर्थः । शक्यं च कर्तुमिति । प्रतिपत्तुमित्यर्थः । अथ वेति । सिद्धानां शब्दानामिदमन्वाख्यानं प्रवृत्तम् । तत्र पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोपि लटः प्रक्रियार्थं विहितस्याप्रथमासामानाधिकरण्यमनुमीयत इत्यर्थः । विषम इति । अग्निधूमयोर्हि प्रत्यक्षेण सम्बन्धो गृह्यते । लकारस्य तु प्रयोगाभावादप्रथमासामानाधिकरण्यं न क्व चिदुपलब्धमिति भावः । भवतीति । यद्यपि लटो ऽप्रयोगादप्रथमासामानाधिकरण्याभावः प्रत्यक्षेण निश्चीयते तथापि प्रत्यक्षस्यान्यथासिद्धत्वाल्लकाराप्रयोगनिमित्तत्वाद्भावग्राहिणो बाध्यत्वमनन्यथासिद्धे न तु सामान्यतो दृष्टेनानुमानेन लटो ऽप्रथमासामानाधिकरण्यावगमो नह्यन्यथा देशस्य तदुपपद्यते इति भावः । तद्यथेति । आशुसञ्चाराच्चक्रभ्रान्तिरुत्पद्यते । रूपसहचारिणस्तु स्पर्शस्यानेकदिकस्य युगपद्ग्रहणादनन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यन्ते । तदुक्तं हरिणा । स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः । न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तदिति ॥

वृक्षस्येदं पर्णमिति । किं पुनरयं पर्युदासो यदन्यत्प्रथमासमानाधिकरणादिति आहो स्वित् प्रसज्यप्रतिषेधः प्रथमासमानाधिकरणे नेति । कश्चात्र विशेषः । लटः शतृशानचावप्रथमासमानाधिकरणे इति चेत्प्रत्ययोत्तरपदयोरुपसंख्यानम् * । लटः शतृशानचावप्रथमासमानाधिकरण इति चेत् प्रत्ययोत्तरपदयोरुपसंख्यानं कर्तव्यम् । कौर्वतः पाचतः . कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति । अस्तु तर्हि प्रसज्यप्रतिषेधः प्रथमासमानाधिकरणे नेति । प्रथमाप्रतिषेधे उत्तरपदे आदेशानुपपत्तिः * । प्रथमाप्रतिषेधे उत्तरपदे आदेशयोरनुपपत्तिः । कुर्वती चासौ भक्तिश्च कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति । ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तेषु शतृशानचौ न प्राप्नुतः । कुर्वत्तरः पचत्तरः कुर्वाणतरः पचमानतरः कुर्वद्रूपः पचद्रूपः कुर्वाणरूपः पचमानरूपः कुर्वत्कल्पः पचत्कल्पः कुर्वाणकल्पः पचमानकल्प इति । सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् * । सिद्धमेतत् । कथम् । प्रत्ययोत्तरपदयोश्च शतृशानचौ भवत इति वक्तव्यम् । तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः * । तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः । आदेशनिमित्तः प्रत्ययः प्रत्ययनिमित्तश्चादेशः । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः * । उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः । उत्तरपदनिमित्तः सुप् सुबन्तनिमित्तं चोत्तरपदम् । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । न वा लकारस्य कृत्त्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् * । न वा एष दोषः । किं कारणम् । लकारस्य कृत्त्वात् प्रातिपदिक-

---

कस्य चिदिति न भूयोदर्शनेन सम्बन्धग्रहणमपि तु सकृद्दर्शनेनापीत्यर्थः । वृक्षपर्णयोरिति । भाष्यकारवचनप्रामाण्याज्जातिरप्राणिनामित्येकवद्भावो न कृतः । किं पुनरिति । यद्यपि प्रसज्यप्रतिषेधे वाक्यभेदाद् गौरवप्रसङ्गस्तथापि लक्ष्यसिद्धये शास्त्रे कचिदसावङ्गीकृतइति विचार्यते । कौर्वत इति । कुर्वतो देवदत्तस्यापत्यमित्यत्र सापेक्षत्वात्तद्धितो नोत्पद्यते । पदान्तरनिरपेक्षे च पदान्तरेण सामानाधिकरण्याभावादादेशाप्रसङ्ग इति भावः । कुर्वद्भक्तिरिति । षष्ठीसमासः । समानाधिकरणसमासे तु प्रसज्यप्रतिषेधेऽपि दोषः । स च वक्ष्यत एव । कुर्वत्तर इति । अत्र देवदत्तादिना पदान्तरेण सामानाधिकरण्यादादेशाप्रसङ्गः । पूर्वस्मिन्नपि पक्षे एष दोषः । सिद्धं त्विति । लक्षणशेषः कर्तव्य इत्यर्थः । पृथगुत्तरपदग्रहणमन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति लुकि कृते प्रत्ययलक्षणप्रतिषेधादप्रत्ययपरत्वार्थम् । उत्तरपदनिमित्त इति । सत्युत्तरपदे शतृशानचौ भवतः तयोश्च कृत्त्वात् सुबुत्पत्तिः सुम्निमित्तः समासः समासनिमित्तं चोत्तरपदमित्यर्थः । न वेति । लस्य कृत्त्वात् सुबुत्पत्तौ सत्यामणादिषु तरबादिषु

त्वम् । लकारः कृत् । कृत् प्रातिपदिकमिति प्रातिपदिकसंज्ञा । तदाश्रयं प्रत्ययविधानम् । प्रातिपदिकाश्रया स्वाद्युत्पत्तिर्भविष्यति । तिङादेशात् सुबुत्पत्तिः * । तिङादेशः क्रियतां सुबुत्पत्तिरिति । परत्वात्सुबुत्पत्तिर्भविष्यति । तस्मादुत्तरपदप्रसिद्धिः * । तस्मादुत्तरपदस्य प्रसिद्धिर्भविष्यति । उत्तरपदे प्रसिद्धे उत्तरपद इति शतृशानचौ भविष्यतः । इहापि तर्हि तिङादेशात्सुबुत्पत्तिः स्यात् पचतिं पठतीति । अस्त्यत्र विशेषः, नित्योऽत्र तिङादेशः । उत्पन्ने ऽपि सुपि प्राप्नोत्यनुत्पन्ने ऽपि प्राप्नोति । नित्यत्वात् तिङादेशे कृते सुबुत्पत्तिर्न भविष्यति । इहापि तर्हि नित्यत्वात्तिङादेशः स्यात् । कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति । अस्त्यत्र विशेषः । शतृशानचौ तिङपवादौ तौ चात्र निमित्तवन्तौ । न चापवादविषये उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते । न तावदत्र कदा चित् तिङ् भवति । अपवादौ शतृशानचौ प्रतीक्षते । तदेतत् क्व सिद्धं भवति । यत्र सामान्यादुत्पत्तिः । यत्र हि विशेषादत इञिति इतरेतराश्रयमेव तत्र भवति । वीक्षमाणस्यापत्यं वैक्षमाणिरिति । इह च शतृशानचौ प्राप्नुतः । पचतितरां जल्पतितरां पचतिरूपञ्जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति । तदेतत्कथं कृत्वा सिद्धं भवति । शतृशानचौ यदि लटो वा । यदि लटः शतृशानचौ वा भवतः । व्यवस्थितविभाषा च । तेनेह च भविष्यतः । कौर्वतः पाचतः कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिः कुर्वत्तरः पचत्तरः कुर्वाणतरः पचमानतरः कुर्वद्रूपः पचद्रूपः कुर्वाणरूपः पचमानरूपः कुर्वत्कल्पः पचत्कल्पः कुर्वाणकल्पः पचमानकल्पः पचन् पठन्निति च लटः शतृशानचौ । इह च न भविष्यतः । पचतितरां जल्पतितरां पचतिरूपं जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति च लटः शतृशानचौ । तत्तर्हि वावचनं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् । नन्वोर्विभाषेति । यदि तदनुवर्तते वर्तमाने लडिति लडपि विभाषा प्राप्नोति । सम्बन्धमनुवर्तिष्यते । नन्वोर्विभाषा । पुरि लुङ्चास्मे विभाषा । वर्तमाने लट् । पुरि लुङ् चास्मे विभाषा । लटः शतृशानचौ विभाषा । पुरि लुङ् चास्म इति निवृत्तम् । न

---

चोत्पन्नेष्वादेशविधानमिति नास्तीतरेतराश्रयदोष इत्यर्थः । उत्तरपद इतरेतराश्रयं परिहरति तिङादेशादिति । वीक्ष्यमाणस्येति । अत्राकृते शानच्यकारान्तत्वाभावादिञोऽप्रसङ्ग इत्यर्थः । पचतितरामिति । तिङश्चेत्येतत्तु लकारान्तरार्थं स्यादपचत्तरामिति । पचतीति । अत्रापि लस्य कृत्वात् सुप्युत्पन्ने प्रत्यये विधीयमान आदेशः स्यादित्यर्थः । तिङां तु लिङादयोऽवकाशाः । तदेतदिति । व्यवस्थितविभाषाविज्ञानाच्च यथेष्टं प्रयोग-

तर्हीदानीमप्रथमासमानाधिकरण इति वक्तव्यम् । वक्तव्यं च । किं प्रयोजनम् । नित्यार्थम् । अप्रथमासमानाधिकरणे नित्यौ शतृशानचौ यथा स्याताम् । क्व तर्हीदानीं विभाषा । प्रथमासमानाधिकरणे पचन् पचतीति पचमानः पचते इति ॥

लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥ लक्षणहेत्वोः क्रियाया गुणउपसंख्यानम् * । लक्षणहेत्वोः क्रियाया गुणउपसंख्यानं कर्तव्यम् । तिष्ठन् मूत्रयति गच्छन् भक्षयतीति । कर्तुश्च लक्षणयोः पर्यायेणाचयोगे * । कर्तुश्च लक्षणयोः पर्यायेणाचयोग उपसंख्यानं कर्तव्यम् । योधीयान आस्ते स देवदत्त इति । आसीनोधीते स देवदत्त इति । अचयोग इति किमर्थम् । य आस्ते चाधीते च स चैत्रः । तत्त्वाख्याने च * । तत्त्वाख्याने चोपसंख्यानं कर्तव्यम् । शयाना वर्धते दूर्वा आसीनं वर्धते बिसमिति । सदादयश्च बहुलम् * । सदादयश्च बहुलमिति वक्तव्यम् । सन् ब्राह्मणः । अस्ति ब्राह्मणः । विद्यते ब्राह्मणः । विद्यमानो ब्राह्मणइति । इङ्जुहोत्योर्वावचनम् * । इङ्जुहोत्योर्वेति वक्तव्यम् । अधीते अधीयानः जुहोति जुह्वत् । माङ्याक्रोशे * । माङ्याक्रोश इति वक्तव्यम् । मा पचन् । मा पचमानः । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । लक्षणहेत्वोः क्रियाया इत्येव सिद्धम् । इह तावत्तिष्ठन् मूत्रयतीति । तिष्ठतिक्रिया मूत्रयतिक्रियाया लक्षणम् । गच्छन् भक्षयतीति गच्छतिक्रिया भक्षयतिक्रियाया लक्षणम् । योधीयान आस्ते स देवदत्त इति । अध्ययनक्रिया आसनक्रियाया

---

सिद्धिः । न तर्हीति । व्यवस्थितविभाषयैव सिद्धत्वान्नित्ययोरादेशयोरिति भाव । नित्यार्थमिति । लटः शतृशानचावित्येको योगः क्रियते तत्र विभाषेति वर्तते । ततोऽप्रथमासमानाधिकरण इति द्वितीयो योगो नित्यार्थो व्यवस्थितविभाषाश्रयेण तु विस्पष्टा प्रतिपत्तिर्न स्यादिति तदर्थं द्वितीयो योगः ॥ १२४ ॥

लक्षण ॥ गुण इति । गुणशब्देनात्र साधनमुच्यते । तिष्ठन् मूत्रयतीत्यादौ यदा स्थानादिना मूत्रादिक्रिया लक्ष्यते तदा सूत्रेणैवादेशसिद्धिः । यदा तु कारकं लक्ष्यते तदर्थमिदं वचनम् । बहुषु मूत्रयत्सु को देवदत्त इत्युक्ते यासनष्ठन् मूत्रयतीति प्रतिवचनेन देवदत्तो लक्ष्यते । अथ वा अशौचादिगुणो गृह्यते । कर्तुश्चेति । यदा पूर्ववाक्ये गुणः साधनं गृह्यते तदा तेनैव सिद्धे पर्यायार्थः । यदा त्वाशौचादेर्गुणस्य तत्र ग्रहणं तदा विध्यर्थ । तत्त्वाख्यान इति । स्वभावाख्याने विनापि लक्ष्यलक्षणभावेनेत्यर्थः । नह्यासनं वृद्धेर्लक्षणं किं तर्हि स्वभावमात्रकथनमासीनं बिसमिति । सदादयश्चेति । चाब्राह्मणस्यायं प्रपञ्चः । सच्छब्दो विद्यमानवाचीति सत्सदृशाः सदादिशब्देनोपात्ता नान्य इत्याह इङ्जुहोत्योश्चेति । माङ्याक्रोश इति । लुङि प्राप्ते ऽस्मादेवादेशविधानाल्लट्ठनुमीयते । तिष्ठतिक्रियेति । स्थितिक्रियालक्षिता तु मूत्रणक्रिया । यस्तिष्ठन् मू

लक्षणम् । य आसीनोधीते स देवदत्त इति । आसिक्रियाऽध्ययनक्रियाया लक्षणम् । इदं तर्हि प्रयोजनम् । अचयोगे इति वक्ष्यामीति । इह मा भूत् । य आस्ते चाधीते च स चैत्रइति । नैतदस्ति प्रयोजनम् । नैतत् क्रियालक्षणम् । किं तर्हि । कर्तृलक्षणमेतत् । शयाना वर्धते दूर्वेति । शेतिक्रिया वृद्धिक्रियाया लक्षणं भवति । आसीनं वर्धते विसमिति आसिक्रिया वृद्धिक्रियाया लक्षणमिति। सदादयश्च बहुलम् । इङ्जुहोत्योर्वा । माङ्याक्रोश इत्येतद्वक्तव्यमेव। लक्षणहेत्वोः॥

तौ सत् ॥ १२७ ॥ तौग्रहणं किमर्थम् । शतृशानचौ प्रतिनिर्दिश्येते। नैतदस्ति प्रयोजनम् । प्रकृतौ शतृशानचावनुवर्तिष्येते । क्व प्रकृतौ । लटः शतृशानचावप्रथमासमानाधिकरणे इति । अत उत्तरं पठति । तौ सदिति वचनमसंसर्गार्थम् * । तौ ग्रहणं क्रियते असंसर्गार्थम् । असंसक्तयोरेतैर्विशेषैः शतृशानचोः सत्संज्ञा यथा स्यादिति । ननु चैते विशेषा निवर्तन्ते । यद्यप्येते विशेषा निवर्तन्ते । अयं तु खलु वर्तमानः कालोऽवश्यमुत्तरार्थोनुवर्त्यः । तस्मिन्ननुवर्तमाने वर्तमानकालविहितयोरेव शतृशानचोः सत्संज्ञा स्यात् । भूतभविष्यत्कालविहितयोर्न स्यात् । किं पुनर्भूतभविष्यत्कालविहितयोः सत्संज्ञावचने प्रयोजनम् । प्रयोजनं पूरणगुणसुहितार्थसदिति । ब्राह्मणस्य पक्ष्यन् । ब्राह्मणस्य पक्ष्यमाणः । अथ क्रियमाणे पि तौग्रहणे कथमेवासंसक्तयोरेतैर्विशेषैः सत्संज्ञा लभ्या । लभ्येत्याह । कथम् । ताविति शब्दतः । सदिति योगविभागे क्रियमाणे

---

श्रयति स देवदत्त इति सर्वनामपरामर्शे देवदत्तस्य लक्षणं तद्गतस्य वा ऽशौचादेरिति भावः।नैतदिति समुच्चीयमानं क्रियाद्वयं परस्परस्यालक्षणं कर्तृविशेषस्य लक्षणमित्यर्थः। शेतिक्रियेति । तत्त्वाख्यानमपि लक्षणं भवति । यथा चैतन्यलक्षणः पुरुष इति भावः १२६

तौ सत् ॥ तौग्रहणमिति । शतृशानचोरनुवर्तनादेव संज्ञा भविष्यतीति प्रश्नः। शतृशानचाविति । असति तौग्रहणे प्रत्ययविधिरयं स्याद् न तु संज्ञाविधिरिति भावः। तौ सदिति । तच्छब्देन शतृशानचो रूपमात्रं परामृश्यत इति लट्स्थानिकत्वादिधर्मासंबद्धयोरपि संज्ञा भवतीत्यर्थ । ननु चेति । अस्वरितत्वादनपेक्षणाच्चेति भावः । भूतेति । वर्तमानसामीप्ये वर्तमानवद्वेति वचनाद् भूतेपि शतृशानचौ भवतः । किं पुनरिति । अतिदेशाद् भूते शतृशानचौ भविष्यतः । लटः सद्वेति वचनाद्भविष्यत्यपीति प्रश्नः। पूरणेति । वर्तमानवदित्यतिदेशाद्विधानमेवभूते शतृशानचोः स्याद् न तु संज्ञा । प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते न तु संज्ञा । तथा लटः सद्वेति सत्संज्ञकप्रतिरूपकविधानं स्यात् । यथा पिष्टपिण्डाः सिंहाः क्रियन्तामिति तदाकाराः क्रियन्ते। विहितयोस्तु तयोः सत्संज्ञानिबन्धनकार्यप्रसङ्गः । अथेति । संनिहितस्यैव वस्तुनः सर्वनाम्ना परामर्शादिति प्रश्नः । यद्यप्यनुवृत्त्या प्रकृतयोः संज्ञासिद्धौ तौग्रहणं क्रियते तथापि न प्रयोजनानुवर्तिप्रमाणमपि तु प्रमाणानुवर्ति प्रयोजनमिति क्रियमाणमपि तिग्रहणं प्रयोजनसंपादनाय नालमिति भाव । ताविति शब्दत इति । शब्देनैवाभिम-

तौग्रहणं योगाङ्गमुपजायते। सति च योगाङ्गे योगविभागः करिष्यते। तौ। तावेतौ शतृशानचौ धातुमात्रात्परस्य प्रत्ययस्य भवतः। ततः सत्। सत्संज्ञौ भवतः शतृशानचाविति। इहापि तर्हि प्राप्नुतः कारको हारक इति। अवधारणं लृटि विधानम्। लृटः सद्वेत्येतन्नियमार्थं भविष्यति। लृट एव धातुमात्रात्परस्य नान्यस्येति। कैमर्थक्यान्नियमो भवति। विधेयं नास्तीति कृत्वा। इह चास्ति विधेयम्। किम्। नित्यौ शतृशानचौ प्राप्तौ तौ विभाषा विधेयौ। तत्रापूर्वो विधिरस्तु नियमोऽस्त्विति। अपूर्व एव विधिः स्यान्न नियमः योगविभागतश्च विहितं सत्। एवं तर्हि योगविभागः करिष्यते। लृटः सत्। लृटः सत्संज्ञकौ भवतः। किमर्थमिदम्। नियमार्थम्। लृट एव धातुमात्रात्परस्य नान्यस्येति। ततो वा। वा च लृटः शतृशानचौ सत्संज्ञौ भवतः। तत्रायमप्यर्थः। सद्विधिर्नित्यमप्रथमासमानाधिकरण इति वक्ष्यति तन्न वक्तव्यं भवति। अथ यावेतावुत्तरौ शत्रानौ किमेतौ लादेशौ आहोस्विदलादेशौ। कश्चात्र विशेषः। उत्तरयोर्लादेशे वावचनम् *। उत्तरयोर्लादेशे वावचनं कर्तव्यम्। पचमानः यजमानः। पचते यजत इत्यपि यथा स्यात्। साधनाभिधानं च *। प्राप्नोति। लः कर्मणि च भावे चाकर्मकेभ्य इति भावकर्मणोरपि प्राप्नुतः। स्वरः *। स्वरश्च साध्यः। कतीह पचमानाः। अदुपदेशाल्लसार्वधातुकमनुदात्तं भवतीत्येष स्वरः प्राप्नोति। उपग्रहप्रतिषेधश्च *। उपग्रहस्य च प्रतिषेधो वक्तव्यः। कतीह निघ्नानाः। तङानावात्मनेपदमित्यात्मनेपदसंज्ञा प्राप्नोति। स्तां तर्हि अलादेशौ। अलादेशे षष्ठीप्रतिषेधः *। अलादेशे षष्ठीप्रतिषेधो वक्तव्यः। सोमं

---

तोऽर्थः सति योगविभागे लभ्यत इत्यर्थः। तावेताविति। पूर्वसूत्रे तयोरादेशत्वादिहाप्यादेशयोरेव विधानमिति भावः। कारक इति। तृजादीनां विधानसामर्थ्याच्छतृशानचौ न भविष्यतः। क्विबादीनामपि लोपविधानसामर्थ्यादिति यः प्रत्यय आदेशेन निवर्त्यते तस्य तदादेशापवादौ शतृशानचौ प्राप्नुत इत्यभिप्रायेण ण्वुलुदाहृतः। एवं च नन्दनाद्यप्युदाहार्यम्। युवोरनाकावित्यस्य तु तद्धितोऽवकाशः। तन्न वक्तव्यमिति। कथमिति चेदुच्यते। तावित्यत्र योगे प्रथमासमानाधिकरणादीन् विशेषाननुवर्त्य शतृशानचौ विधीयेते तावेव च लृटः सदित्यनेन नियम्येते। वेत्यनेन तु प्रथमासमानाधिकरणादौ लट इव विकल्पेन विधीयेते। शत्रानाविति। इङ्धार्योः शत्रकृच्छ्रिणि पूङ्यजोः शानन् ताच्छील्यवयोवचनशक्तिषु चानशिति प्रत्ययानां ग्रहणं तत्र लटोऽनुवृत्त्यननुवृत्तिभ्यां पक्षद्वयसंभवः। उत्तरयोरिति। लादेशेषु वासरूपविधिर्नास्तीत्युक्तत्वादिति भावः। साधनाभिधानं चेति। तदानिष्टस्यापि साधनस्याभिधानं प्राप्नोति कर्तुरेवेष्यते। स्वर इति। चित्करणन्तु निघ्नाना इत्यादौ सावकाशम्। उपग्रहस्येति। आत्मनेपदसंज्ञाया इत्यर्थः। अन्यथा परस्मैपदिभ्यश्चानश् न स्यात्॥ १२७॥

पवमानः । नडमाघ्नानः । अधीयन् पारायणम् । लप्रयोगे नेति प्रतिषेधो न प्राप्नोति । मा भूदेवं तृन्निसेत्तं भविष्यतीति । कथम् । तृन्निति नेदं प्रत्ययग्रहणं किं तर्हि प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः । लटः शतृशानचावित्यत आरभ्या-तृनो नकारात् । यदि प्रत्याहारग्रहणं चोरस्य द्विषन् वृषलस्य द्विषन् अत्रापि प्राप्नोति । द्विषः शतुर्वावचनम् * । द्विषः शतुर्वेति वक्तव्यम् । तच्चावश्यं वक्तव्यम् । प्रत्ययग्रहणे सति प्रतिषेधार्थम् । तदेव प्रत्याहारग्रहणे सति विध्यर्थं भविष्यतीति । तौ सत् ॥

तृन् ॥ १३५ ॥ तृन्विधावृत्विक्षु चानुपसर्गस्य * । तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम् । होता पोता । अनुपसर्गस्येति किमर्थम् । प्रशास्ता प्रतिहर्ता । नयतेः षुक्च * । नयतेः षुग्वक्तव्यः । तृंश्च प्रत्ययो वक्तव्यः । नेष्टा । न वा धात्वन्यत्वात् * । न वा वक्तव्यः । किं कारणम् । धात्वन्यत्वात् । धात्वन्तरं नेषतिः । कथं ज्ञायते । नेषतुनिष्टादिति दर्शनात् * । नेषतुनेष्टादिति हि प्रयोगो दृश्यते । इन्द्रो वस्तेन नेषतु । गावो नेष्टात् । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च * । त्विषेर्देवतायां तृन्वक्तव्यः । अकारश्चोपधाया अनिट्त्वं च वक्तव्यम् । त्वष्टा । किं पुनरिदं त्विषेरेवानिट्त्वम् । नेत्याह । यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैष शेषोऽनिट्त्वं चेति । क्षदेश्च युक्ते * । क्षदेश्च युक्ते तृन्वक्तव्यः । क्षत्ता । छन्दसि तृच * । छन्दसि तृच तृंश्च वक्तव्यः । क्षत्तृभ्यः संगृहीतृभ्यः । क्षत्तृभ्यः संगृहीतृभ्यः ॥

ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥ किक्त्वे स्थ ईकारप्रतिषेधः * । स्नोः किक्त्वे स्थ ईकारस्य प्रतिषेधो वक्तव्यः । स्थास्नुरिति । घुमास्थेतीत्वं प्राप्नोति । एवं तर्ह्यकित्करिष्यते । अकिति गुणप्रतिषेधः * । यद्यकित् क्रियते गुणप्रतिषेधो वक्तव्यः । जिष्णुरिति । भुव इट्प्रतिषेधश्च * । भुव इट्प्रतिषेधश्च वक्तव्यः । किं चान्यत् । गुणप्रतिषेधश्च । भूष्णुरिति । अस्तु तर्हि कित् । ननु चोक्तम् । स्नोः किक्त्वे ईकारप्रतिषेध इति । नैष दोषः । स्थादंशिभ्यां स्नुश्छन्दसि * । स्थादंशिभ्यां स्नुश्छन्दसि वक्तव्यः । स्थास्नु जङ्गमं दङ्क्ष्णवः पशव इति । स इदानीं स्थः स्नुराविशेषेण विधास्यते । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु

---

तृन् ॥ तृन्विधाविति । अताच्छील्यार्थमिदम् । प्रशास्तेति । तृजेव भवति । तृं स्तृचौ शास्ति चदादिभ्यः संज्ञायां चानिटाविति नेन । स्वरे च विशेषः । तृनि तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरो भवति । तृचि कृत्स्वरः । नवेति नयतेस्तु षुकि गुणो न स्यात् । नेषतेस्तु ऋत्विजि तृनि वक्ष्यमाणादनिङ्वचनात्सर्वोपसंख्याने शेषादिडभावः । नेत्याहेति । त्विषेः स्वत एवानिट्त्वादिति भावः ॥ १३५ ॥

चोक्तं स्नोः कित्वे स्थ ईकारप्रतिषेध इति । एवं तर्हि गित्करिष्यते । स्नोर्गित्वान्न स्थ ईकारः । स्नोर्गित्वात् स्थ इकारो न भविष्यति । किं कारणम् । क्ङितोरीत्वशासनात् । क्ङितोरीत्वं शिष्येत । इह तर्हि जिष्णुरिति गुणः प्राप्नोति । गुणाभावस्त्रिषु स्मार्यः । गुणाभावस्त्रिषु स्मर्तव्यः । गिति किति ङिति चेति । तद्गकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते क्ङिति चेति । इह तर्हि भूष्णुरिति श्र्युकः कितीतीट्प्रतिषेधो न प्राप्नोति । श्र्युकोनिट्त्वं गकोरितोः । श्र्युकोनिट्त्वं गकारककारयोरिति वक्तव्यम् । तद्गकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते श्र्युकः कितीति । यद्येवं चर्त्वस्यासिद्धत्वाद्धशि चेत्युत्वं प्राप्नोति । सौत्रो निर्देशः । अथ वाऽसंहितया निर्देशः करिष्यते । श्र्युकः कितीति । स्नोर्गित्वान्न स्थ इकारः क्ङितोरीत्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोनिट्त्वं गकोरितोः ॥

शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥ घिनणयं वक्तव्यः । हि घिनुणि सति शमिनौ शमिनः तमिनौ तमिन इति उगिदचां सर्वनामस्थान इति नुम्प्रसज्येत । नैष दोषः । झल्ग्रहणं तत्र चोदयिष्यति । इह तर्हि शमिनितरा शमिनीतरा तमिनितरा तमिनीतरा । उगितो घादिषु नद्या अन्यतरस्यां ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत । तस्माद् घिनुणयं वक्तव्यः । इष्यत एव ह्रस्वत्वम् । घिनुणकर्मकाणाम् * । घिनुणकर्मकाणामिति वक्तव्यम् । इह मा भूत् संपृणक्ति शकमिति । उक्तं वा * । किमुक्तम् । अनभिधानादिति ॥

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ १४६ ॥ किमर्थं निन्दादिभ्यो वुञ्विधीयते । न ण्वुलैव सिद्धम् । नह्यस्ति विशेषः । निन्दादिभ्यो ण्वुलो वा । वुञो वा । तदेव रूपं स एव स्वरः । वुञमनेकाचः * । वुञमनेकाचः प्रयोजयन्ति । असूयकः । अथ येत्रैकाचः पठ्य-

---

ग्लाजि ॥ क्स्नुरिति श्रवणात् कित्वं निश्चित्याह क्स्नोः कित्व इति । एवं तर्हीति । गकारस्य चर्त्वेन निर्देशो व्याख्यास्यत इत्यर्थः । ककार इति । परभूत इत्यर्थः । एतच्च लक्ष्यमूलाद्व्याख्यानाल्लभ्यते । सौत्र इति । तेन असिद्धत्वाभावादुत्वाभावे विसर्जनीयो भवतीत्यर्थः । अथवेति । संहितायामुत्वविधानात् । इह तु तदभावादवसानविषयत्वाद्विसर्जनीयो भवति ॥ १३९ ॥

शमित्य ॥ घिनणयमिति । उकारे हि सति कार्यार्थत्वसंभवात्तस्योच्चारणार्थत्वं न स्यादिति भावः । इष्यत इति । विकल्पेनैव ह्रस्वत्वमिष्यते न तु नित्यमित्युकार उगित्कार्यार्थं इति स्थितम् ॥ १४१ ॥

निन्द ॥ वुञमनेकाच इति जातौ बहुवचनम् । असूयशब्दस्यैकस्यैव प्रयोजकत्वात् ।

न्ते। तेषां ग्रहणं किमर्थम्। न तेषां ण्वुलैव सिद्धम्। न सिध्यति। अयं तच्छीलादिष्वर्थेषु तृन् विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत। वासरूपेण न्यायेन ण्वुलपि भविष्यति। अत उत्तरं पठति। निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम् *। निन्दादिभ्यो वुञ्वचनं क्रियते ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञापयत्याचार्यः तच्छीलादिषु वासरूपन्यायेनान्येभ्यो ण्वुल् न भवतीति। तृजादिप्रतिषेधार्थं वा एके *। अथ वा एके मन्यते एतज् ज्ञापयत्याचार्यः ताच्छीलिकेषु सर्व एव तृजादयो वासरूपेण न भवन्तीति॥

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः॥ १५०॥ पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात् *। पदिग्रहणमनर्थकम्। किं कारणम्। अनुदात्तेतश्च हलादेरिति सिद्धत्वात्। अनुदात्तेतश्च हलादेरित्येवात्र युच् सिद्धः। न सिध्यति। अयं पदेरुकञ् विधीयते। लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् इति। स विशेषविहितः सामान्यविहितं युचं बाधेत। वासरूपन्यायेन युजपि भविष्यति। असरूपनिवृत्त्यर्थं तु *। असरूपनिवृत्त्यर्थं तर्हि पदिग्रहणं क्रियते। एतज् ज्ञापयत्याचार्यः ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्तीति। यद्येतज् ज्ञाप्यते। सूददीपदीक्षश्चेति दीपिग्रहणमनर्थकम्। अयं दीपे रो विधीयते। नमिकम्पिस्म्यजसकमहिंसदीपो र इति स विशेषविहितः सामान्यविहितं युचं बाधिष्यते। एवं तर्हि सिद्धे सति यद् दीपिग्रहणं करोति तज् ज्ञापयत्याचार्यः भवति युचो रेण समावेश इति। किमेतस्य ज्ञापने प्रयोजनम्। कम्रा कन्या कमना कन्येत्येतत्सिद्धं भवति॥

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्॥१५८॥ किमर्थमालुच् विधीयते न लुरेवोच्येत। का रूपसिद्धिः स्पृहयालुः दयालुः। शपि कृते अतो दीर्घो यञीतिदीर्घो भविष्यति। एवं तर्हि सिद्धे सति यदालुचं शास्ति तज् ज्ञापयत्याचार्योऽन्येभ्योप्ययं भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। आलुचि शीङ्ग्रहणं चोदयिष्यति तन्न कर्तव्यं भवति। आलुचि शीङ्ग्रहणम् *। आलुचि शीङ्ग्रहणं कर्तव्यम्। शयालुः॥

---

तृजादिप्रतिषेधार्थं वेति। प्रत्ययसामान्यापेक्षं च ज्ञापकमाश्रीयते न तु ण्वुलभावार्थमेव॥ १४९॥

जुचङ्क्र॥ पदि ग्रहणमिति। न च सकर्मकार्थं पदिग्रहणमनभिधानाद् अनेन सकर्मकादविधानात्॥ १५०॥

स्पृहि॥ शपि कृत इति। तुरुस्तुशम्यम इत्यतस्तत्र सार्वधातुकग्रहणमनुवर्तते न तु तिङ्ग्रहणमिति भावः। एवं तर्हीति। ननु लुरि सति लकार-

आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥ किमर्थं किकिनोः कित्त्वं क्रियते । न असंयोगाल्लिट् किदित्येव सिद्धम् । किकिनोः कित्वमृकारगुणप्रतिषेधार्थम् *। किकिनोः कित्करणं क्रियते । ऋकारस्य गुणप्रतिषेधार्थम् । अयमृकारान्तानां लिटि गुणः प्रतिषेधविषयेआरभ्यते ऋच्छत्यृृतामिति । स यथेह भवतिआतस्तरतुरातस्तरुरिति । एवमिहापि प्रसज्येत । मित्रावरुणौ ततुरिः दूरे अध्वा जगुरिरिति स पुनः कित्त्वेन बाध्यते । उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् *। उत्सर्गश्छन्दसि किकिनौ वक्तव्यौ । किं प्रयोजनम् । सदादिभ्यो दर्शनात् । सदादिभ्यो हि किकिनौ दृश्येते । सदिरमिनमिमनिविचीनां सेदिः रेमिः मेनिः नेमिश्चक्रमिवाभवत् । विविचिं रत्नधातमम् । भाषायां धाञ्कृसृजीननमिभ्यः *। भाषायां धाञ्कृसृजनिनमिभ्यः किकिनौ वक्तव्यौ । धाञ् दधिः । कृ । चक्रिः । सृ । सस्रिः । जनि । जज्ञिः । नमि । नेमिः । सासहिवावहिचाचलिपापतीनां निपातनम् * । सासहिवावहिचाचलिपापतीनां निपातनं कर्तव्यम् । वृषा सहमानं सासहिः । वावहिः चाचलिः पापतिः । अपर आह । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ । तान्येवोदाहरणानि ॥

भियः क्रुक्लुकनौ ॥ १७४ ॥ भियः क्रुकन्नपि वक्तव्यः । भीरुकः ॥

अन्येभ्योपि दृश्यते ॥ १७८ ॥ किमर्थमिदमुच्यते । न क्विप्चान्येभ्योपि

---

स्येत्संज्ञा प्राप्नोति श्रद्धालुश्च न सिध्यति श्रद्दधुरिति प्राप्नोतीत्याहुः । नैष दोषः । यादित्वादित्संज्ञा न भविष्यति । यकारश्च लुप्तनिर्दिष्टः । प्रयोजनाभावाद्वा । नह्यत्र लित्स्वरप्रत्ययस्वरयोर्विशेषोस्ति । उभयत्रैकादेश उदात्तेनेत्युदात्तत्वस्य भावात् । श्रद्धालुशब्दस्याप्यनेकार्थत्वाद्धातूनामत्र विषये दधात्यर्थे वर्तमानस्य धेटो भविष्यति । ननु शिदाश्रयोशितीत्यात्वप्रतिषेधः प्राप्नोति । एवं तर्हि श्रद्धा आश्रद्धेत्याकारप्रश्लेषादात्वं भविष्यति । अथवा दधातेरेव संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं न प्रवर्तिष्यते ।

आदृग ॥ दकारो मुखसुखार्थो ऽसंदेहार्थो वा । तकारे तु सति तादपि परस्तपर इत्यृकारस्य तपरत्वाद् ऋकारग्रहणं न स्यात् । ऋकारगुणनिषेधार्थाच्च किकिनोः कित्वाद् ऋकारनिर्देशावसायः । सासहीति । पापतीति निपातनाद्यङि नीगभावः । विधौ तु भाष्यकारवचनप्रामाण्यात् । तेनाप्युक्तं तान्येवोदाहरणानीति । अथ लिड्वद्भावे किकिनोः परस्मैपदसंज्ञा कस्मान्न भवति । तथा चात्मनेपदिभ्यो दृङ्हङादिभ्यो न प्राप्नुतः । नैष दोषः । लादेशानां परस्मैपदसंज्ञा न तु लकारस्य । भावकर्मकर्तृषु तर्हि सिद्धवत् किकिनौ प्राप्नुतः । एषोप्यदोषः । उत्पन्नयोः कार्यातिदेशादुत्पत्तिश्च कर्तरि कृदित्यनेनास्यैकवाक्यत्वात्कर्तरि ययोर्भवति । वर्तमानाधिकाराच्च वर्तमान इति भूतकालतापि विरोधाभावातिदिश्यते । स्वरूपाबाधेन च कार्याण्यतिदिश्यन्ते इति कवसुकानचावपि किकिनोर्न भवतः ॥ १९८ ॥

दृश्यत इत्येव सिद्धम् । क्विब्विधिरनुपपदार्थः * । अनुपपदार्थोयमारम्भः । पचेः पक् । भिदेः भित् । छिदेः छित् । अथ योत्र सोपपदस्तस्य ग्रहणं किमर्थम् । न तेनैव सिद्धम् । न सिध्यति । इह केचिदाक्वेरिति सूत्रं पठन्ति ; केचित् प्राक् क्वेरिति । तत्र ये आक्वेरिति पठन्ति । तैः क्विबप्याक्षिप्तो भवति । तत्र तच्छीलादिष्वर्थेषु क्विब् यथा स्यात् । नैतदस्ति प्रयोजनम् । य एवासावविशेषविहितः स तच्छीलादिषु भविष्यति । अन्यत्र च न सिध्यति । अयं तच्छीलादिष्वर्थेषु तृन्विधीयते स विशेषविहितः सामान्यविहितं क्विपं बाधेत । वासरूपेण क्विबपि भविष्यति । न सिध्यति । इदानीमेव ह्युक्तं तच्छीलादिष्वर्थेषु वासरूपेण तृजादयो न भवन्तीति । क्विप्चापि तृजादिः । वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च * । वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घत्वं च वक्तव्यम् । क्विप्च । वचि । वाक् । प्रच्छि । शब्द । प्राट् । आयतस्तु । आयतस्तूः । कटप्रु । कटप्रूः । जु । जूः । श्रि । श्रीः । अपर आह । वचिप्रच्छ्योरसम्प्रसारणं चेति वक्तव्यम् । तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । दीर्घवचनसामर्थ्यात्सम्प्रसारणं न भविष्यति । इदमिह सम्प्रधार्यम् । दीर्घत्वं क्रियतां सम्प्रसारणमिति । किमत्र कर्तव्यम् । परत्वात्सम्प्रसारणम् । अन्तरङ्गं दीर्घत्वम् । का अन्तरङ्गता । प्रत्ययोत्पत्तिसन्नियोगेन दीर्घत्वमुच्यते । उत्पन्ने प्रत्यये सम्प्रसारणम् । तत्रान्तरङ्गत्वाद्दीर्घत्वे कृते सम्प्रसारणम् । सम्प्रसारणपूर्वत्वे कृते कार्यकृतत्वात्पुनर्दीर्घत्वं न स्यात् । तस्मात् सुष्ठूच्यते दीर्घवचनसामर्थ्यात् सम्प्रसारणं न भवतीति । द्युतिगमिजुहोतीनां द्वे च * । द्युतिगमिजुहोतीनां द्वे चेति वक्तव्यम् । दिद्युत् । गमि । जगत् । जुहोतेर्दीर्घश्च । जुहूः । दृणातेर्ह्रस्वश्च द्वे च क्विप्चेति वक्तव्यम् । दद्रृत् । जुहूर्जुहोतेर्ह्वयतेर्वा । दद्रृत् । दृणातेर्दीर्यतेर्वा । जूः । ज्वरतेर्जीर्यते वा । ध्यायतेः सम्प्रसारणं च * । ध्यायतेः सम्प्रसारणं च क्विप्च वक्तव्यः । धीर्ध्यायतेर्दधातेर्वा । अन्येभ्यो ॥

---

अन्येभ्योपि । क्विब्विधिरिति । क्विप् चेत्यत्र सुप्युपसर्गेपीति च वर्ततइति भावः । अथेति । पूर्वसूत्रे ग्रावस्तुशब्द इत्यर्थः । आक्वेरिति । अभिविधावाकारः । दीर्घवचनसामर्थ्यादिति । दीर्घश्रुत्याऽच्परिभाषोपस्थानाद्वाचिप्रच्छ्योरचो दीर्घत्वेन भाव्यं तत्र कृते संप्रसारणे पूर्वैकादेशे च दीर्घविधानमनर्थकं स्यादिति भावः । न स्यादिति । संम्प्रोवने लिङ्ग । पूर्वमेव प्रवृत्तत्वात् पुनर्दीर्घो न प्रवर्तत इत्यर्थः । दिद्युदिति । द्युतिस्वाप्योरित्यभ्यासस्य सम्प्रसारणम् । जगदिति । गमः क्वावित्ति मलोपः । जुहूरिति । दीर्घे समुच्चीयमाने दीर्घश्रुत्याऽच्परिभाषोपस्थानादचा च तदन्तविध्याश्रयणाद् जुहोतेर्वाजन्तत्वसम्भवाद्भवति ॥ १७८ ॥

**विप्रसंभ्यो ड्वसंज्ञायाम्** ॥ १८० ॥ डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम् * । डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं कर्तव्यम् । किं प्रयोजनम् । धातुविधितुक्प्रतिषेधार्थम् । धातुविधेस्तुकश्च प्रतिषेधो यथा स्यात् । मितद्रुः मितद्रू मितद्रवः । अचिश्नुधातुभ्रुवामित्युवङादेशो मा भूत् । इह च मितद्रुवा । मितद्रवे । नोङ्धात्वोरिति प्रतिषेधो मा भूत् । तुग्विधि । मितद्रुः । ह्रस्वस्य पिति कृति तुगिति तुग्मा भूदिति ॥

**मतिबुद्धिपूजार्थेभ्यश्च** ॥ १८८ ॥ शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि । रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ । कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥ न म्रियन्ते अमृताः ॥

इति महाभाष्ये तृतीयस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् । ॥

पादश्च समाप्तः

**उणादयो बहुलम्** ॥१॥ बहुलवचनं किमर्थम् । बाहुलकं प्रकृतेस्तनुदृष्टेः । तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते । प्रायसमुच्चयनादपि तेषाम् । प्रायेण खल्वपि ते समुच्चिता न सर्वे समुच्चिताः । कार्यसशेषविधेश्च तदुक्तम् । कार्याणि खल्वपि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि । किं पुनः कारणं तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यः। किं च कारणं प्रायेण समुच्चिता न सर्वे समुच्चिताः किं च कारणं कार्याणि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि । नैगमरूढिभवं हि सु-

---

विप्रसम् ॥ किं प्रयोजनमिति । क्विपा सिद्धिं मन्यमानस्य प्रश्नः ॥ १८० ॥

मतिबुद्धि ॥ क्तस्य मत्याद्यर्थेभ्यः परस्य भूतविषयतापि वर्तमानविषयतया तक्रकौण्डिन्यन्यायेन बाध्यते । ज्ञातमिति तु तेपि भवन्ति । तेनेत्यधिकारात् तृतीयान्तादुपज्ञातेऽर्थेऽण्प्रत्ययविधानात् । वर्तमाने हि क्तस्य च वर्तमान इति षष्ठ्या भाव्यम् ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् ॥

उणादयो बहुलम् ॥ बहुलवचनमिति । उणादय इत्येव सूत्रमुणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः । बाहुलकमिति । प्रकृतेरिति जात्यपेक्षवचनम् । तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः प्रकृतीनां तानवं दृष्ट्वा बाहुलकं बहुलशब्दप्रवृत्तिनिमित्तं बह्वर्थादानमुक्तम् । तेनापठिताभ्योपि प्रकृतिभ्य उणादयो भवन्ति । यथा ऋषेरुलच्शकेरपि भवति शङ्कुलेति तथा तेषामुणादीनां प्रायेण समुच्चयनं कृतं न तु साकल्येनेति । बहुलवचनादविहिता अपि भवन्ति । यथार्तेः फिडफिड्डौ भवतः ऋफिड ऋफिड्ड इति । सशेषाणि च कार्याणि उणादिषु विहितानि न तु निःशेषाणि । बहुलवचनात्त्वविहितान्यपि भवन्ति तेन षण्ड इत्यत्र सत्वाभावः सकारस्य वा षत्वं भवति । किं पुनरिति । यावत्यः प्रकृतयः यावन्तश्च प्रत्ययाः यावन्ति च का-

साधु * । नैगमाश्च रूढिभवाश्चौणादिकाः सुसाधवः कथं स्युः । नाम च धातुजमाह निरुक्ते । नाम खल्वपि धातुजमेवाहुः नैरुक्ताः । व्याकरणे शकटस्य च तोकम् । वैयाकरणानां च शाकटायन आह धातुजं नामेति । अथ यस्य विशेषपदार्थो न समुत्थितः कथं तत्र भवितव्यम् । यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् * । प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः । प्रत्ययं च दृष्ट्वा प्रकृतिरूहितव्या । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

**भविष्यति गम्यादयः ॥३॥** भविष्यतीत्यनद्यतन उपसंख्यानम् * । भविष्यतीत्यनद्यतन उपसंख्यानं कर्तव्यम् । श्वोग्रामं गमी । किं पुनः कारणं न सिध्यति । लृटायं निर्देशः क्रियते । लृट् चानद्यतने लुटा बाध्यते । तेन लृट एव विषये एते प्रत्ययाः स्युः लुटो विषये न स्युः । इतरेतराश्रयं च भवति । का इतरेतराश्रयता । भविष्यत्कालेन अयं निर्देशः क्रियते निर्देशोत्तरकाला च भविष्यत्कालता । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । उक्तं वा * । किमुक्तम् । एकं तावदुक्तं न चाऽपवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानमिति । अपरमप्युक्तमव्ययनिर्देशात्सिद्धमिति । अव्ययवता शब्देन निर्देशः कर्तव्यः । अवर्तमानेभूत इति । स तथा निर्देशः कर्तव्यः । न कर्तव्यः । अव्ययमेष भविष्यतिशब्दः । नैष भवतेर्लृट् । कथमव्ययसंज्ञा । विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा निपातोऽव्ययमित्यव्ययसंज्ञा । अथापि

---

र्थाणि तावन्त्येव भवन्त्वित्वाति प्रश्नः । नैगमेति । निगमश्छन्दस्तत्र भवाइत्यखागृगथनादिभ्य इत्यण् । रूढिः प्रसिद्धिस्तत्र भवास्संज्ञाशब्दा इत्यर्थः । ते सुष्ठु साधवो यथा स्युरित्येवमर्थमपरिपूर्णत्वं प्रकृत्यादीनामुच्यते । अपरिपूर्णानां हि पूर्णत्वं बहुलग्रहणेन क्रियतइति नैगमरूढिभवानां व्याकरणेस्मिन् व्युत्पादनादसान्दिग्धं साधुत्वमवगम्यइत्यर्थः । अन्यैरप्याचार्यैः शब्दानां प्रकृत्यादिविभागेन व्युत्पादनमभ्युपगतमित्याह नामेति । तोकमित्यपत्यमित्यर्थः । यन्नेति । पदमर्थः प्रयोजनं यस्य व्युत्पाद्यत्वेन स पदार्थः प्रकृत्यादिविशेषश्चासौ पदार्थस्तस्माद्यन्न समुत्थितं विशिष्टप्रकृतिप्रत्ययोत्पादनेन व्युत्पादितमित्यर्थः । प्रकृतिमिति । प्रसिद्धामर्त्यादिकमित्यर्थः । प्रत्यय इति । फिडादिकः । प्रत्ययं चेति । प्रत्ययत्वेन प्रसिद्धमित्यर्थः । तेन दृषेरुलजिति प्रत्ययं दृष्ट्वा शकि प्रकृतिरूह्यते । तेन सिद्धं शङ्कुलेति । न सर्वत्र ऊहः कर्तव्यः । किं तर्हि साधुत्वेनाभिमतासु संज्ञास्विति प्रदर्शयति संज्ञास्विति ॥ १ ॥

भविष्यति ॥ अनद्यतन इति । भविष्यच्छब्दो भविष्यन्मात्रे वर्तते न तु तद्विशेषेऽनद्यतने तस्य लुड्विषयत्वात् । ततश्च गम्यादयो भविष्यच्छब्दार्थेन्वाख्यायमाना अनद्यतने न सिध्यन्तीति वार्तिकारम्भः । इतरेतराश्रयं चेति । एतद्भूते इत्यत्र व्याख्यातं तत

भवतेर्लृट् एवमप्यव्ययमेव । कथम् । न व्येतीत्यव्ययमिति । क्व पुनर्न व्येति । एतौ कालविशेषौ भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तते । यदि तर्हि नव्येतीत्यव्ययमिति । न वा तद्विधानस्यान्यत्राभावात् । न वा भविष्यदधिकारेणार्थः। किं कारणम् । तद्विधानस्यान्यत्राभावात् । ये पि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते एतेऽप्येतौ कालविशेषौ न वियन्ति भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तन्ते । अत उत्तरं पठति ! भविष्यदधिकारस्य प्रयोजनं यावत्पचति पुरापचतीत्यनपशब्दत्वाय ॥

**यावत्पुरानिपातयोर्लट्** ॥ ४ ॥ यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम् * । यावत् पुरादिषु लड्विधिर्भवति लुटः पूर्वविप्रतिषेधेन । यावत्पुरानिपातयोर्लट् भवतीत्यस्यावकाशः । यावद्भुङ्क्ते । पुराभुङ्क्ते । लुटोऽत्रकाशः श्वः कर्ता श्वोऽध्येता । इहोभयं प्राप्नोति । यावत् श्वो भुङ्क्ते । पुरा श्वो भुङ्क्ते । लड् भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । अनद्यतने लुडित्यत्र यावत्पुरानिपानयोर्लडित्येतदनुवर्तिष्यते ॥

**लिप्स्यमानसिद्धौ च** ॥७॥ किमर्थमिदमुच्यते । न लिप्स्यमानसिद्धिरपि लिप्सैव । तत्र किंवृत्ते लिप्सायामित्येव सिद्धम् । अकिंवृत्तार्थोऽयमारम्भः । यो भवतामोदनं ददाति स स्वर्गं लोकं गच्छति । यो भवतामोदनं दास्यति स स्वर्गं लोकं गमिष्यति ॥

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** ॥ १० ॥ किमर्थं क्रियायामुपपदे क्रियार्थायां ण्वुल्विधीयते न अविशेषेण विहितः ण्वुल् स क्रियायां चोपपदे क्रियार्थायामन्यत्र च भविष्यति । ण्वुलि सकर्मकग्रहणं चोदितम् अकर्मकार्थोऽयमारम्भः । आसको व्रजति । शायको व्रजतीति । प्रत्याख्यातं तत् । न वा धातु-

---

एवावधारणीयम् । न वेति । विशेषे यत्सामान्यमस्ति तदाश्रयेण गम्यादयः प्रयुज्यन्ते इत्यर्थः । विशेषविवक्षायां चापवादविप्रतिषेधाल्लुडेव भवति श्वो गन्ता ग्राममिति ३ ॥ वासरूपवचनाल्लुडपि भवति । तेन गमिष्यति भविष्यतीत्यादयः प्रयोगा उपपद्यन्ते । यावत्पचतीति । सति भविष्यदधिकारे भविष्यत्येव यावत्पुराशब्दयोगे लटः साधुत्वं भवति । भविष्यत्कालेन वर्तमानकालस्य बाधनादसति भविष्यदधिकारे भूतेपि साधुत्वं लटः स्यात् । शब्दोपात्तकाले विशेषविधानाभावे वर्तमानकालस्य बाधो न स्यात् ४ ॥

लिप्स्यमान ॥ अकिंवृत्तार्थ इति । पूर्वत्र तु किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहितायां लिप्सायामकिंवृत्ते लड्निवृत्त्यर्थम् ॥७॥

तुमुन् ॥ अकेनोरिति । सति भविष्यत्काले ण्वुल्विधौ तदनुवादेन षष्ठीनिषेधो वि-

मात्रादर्शनाद् ण्वुल इति। एवं तर्हि तृजादिषु वर्तमानकालोपादानं चोदितम्। अवर्तमानकालार्थोयमारम्भः। तदपि प्रत्याख्यातम्। न वा कालमात्रे दर्शनादन्येषामिति। इदं तर्हि प्रयोजनम्। अकेनोर्भविष्यदाधमर्ण्ययोरित्यत्र षष्ठ्याः प्रतिषेध उक्तः स यथा स्यात्। एतदपि नास्ति प्रयोजनम्। य एवासावविशेषेण विहितः स यदा भविष्यति तदास्य प्रतिषेधो भविष्यति। एवं तर्हि भविष्यदधिकारविहितस्य प्रतिषेधो यथा स्यात्। इह मा भूत्। अङ्ग यजतां लप्स्यन्ते ऽस्य याजकाः य एनं याजयिष्यतीति। नैष भविष्यत्कालः। कस्तर्हि। भूतकालः। कथं तर्हि भविष्यत्कालता गम्यते। धातुसम्बन्धे प्रत्यया इति। यस्तार्हि न धातुसंबन्धः। इमे ऽस्य याजका इमेस्य लावका इति। एषोपि भूतकालः। कथं तर्हि भविष्यत्कालता गम्यते संबन्धात् स च तावत्तैरयाजितो भवति। तस्य च तावत्तैर्यवा अलूना भवन्ति उच्यते च। इदं तर्हि प्रयोजनम्। अयं क्रियायामुपपदे क्रियार्थायां तुमुन् विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत। एतदापि नास्ति प्रयोजनम्। भावे तुमुन्विधीयते कर्त्तरि ण्वुल् तत्र कः प्रसङ्गो यद्भावे विहितस्तुमुन् कर्तरि विहितं ण्वुलं बाधेत। लृट् तर्हि बाधेत। वासरूपेण ण्वुलपि भविष्यति। उत्तरं पठति। ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम् ※। ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं क्रियते। ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञापयत्याचार्यः। क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। ण्वुलपि तृजादिः। तुमण्ण्वुलौ ॥

**भाववचनाश्च ॥११॥** किमर्थमिदमुच्यते न अविशेषेण भावे ये प्रत्यया विहितास्ते क्रियायामुपपदे क्रियार्थायाम्। अन्यत्र च भविष्यन्ति। अत उत्तरं पठति भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् ※. भाववचनानां च यथाविहितानां प्रतिपदविध्यर्थोऽयमारम्भः। इदानीमेव ह्युक्तं क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। भाववचनाश्चापि तृजादयः। अस्तिप्रयोजनमेतत्। किं तर्हि-

---

धातुं शक्यते नान्यथेति भावः। लप्स्यन्तेस्येति। याजकशब्दो भविष्यति वर्तते यस्मादेते तं याजयिष्यन्ति न तु ते याजितवन्तः तत्र भविष्यदधिकारविधानाभावादस्येति षष्ठी न प्रतिषिध्यते। अस्य याजका इति। एतद्व्याचष्टे य एनमिति। कस्तर्हि भूतकाल इति। शब्दशक्तिस्वाभाव्याद्याजकशब्दस्य भूतकालविषयत्वमिति भावः। धातुसंबन्ध इति। याजकत्वस्यैव भविष्यत्वं प्रतीयत इत्यर्थः। संबन्धादिति। भावियाजकत्वादिकमारोप्य तथाभिधानादित्यर्थः। तृजादिप्रतिषेधार्थमिति। तेन कर्ता व्रजति विक्षिपो व्रजतीत्यादि न प्रयुज्यतइत्यर्थः ५।१०॥

भावव॥ प्रतिपदविध्यर्थमिति। ज्ञापकेन निराकृतानां पुनः प्रातिपदं साक्षाद्विधा-

ति । यथाविहिता इति तु वक्तव्यम् । किं प्रयोजनम् । इह याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण क्रियायामुपपदे क्रियार्थायां यथा स्युः व्यतिकरो मा भूदिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इह भावे प्रत्यया भवन्तीतीयता सिद्धम् । सोयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनं वाचका यथा स्युरिति । यदि च याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषेण क्रियायामुपपदे क्रियार्थायामपि भवन्ति ततोमी वाचकाः कृताः स्युः । अथ हि धातुमात्राद् वा स्युः प्रत्ययमात्रं वा स्यात् ततो नामी वाचकाः कृताः स्युः ।

अण् कर्मणि च ॥१२॥ किमर्थमिदमुच्यते न अविशेषेण कर्मण्यणित्यण्विहितः स क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति । अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् * । अणः पुनर्वचनं क्रियते अपवादविषयेऽनिवृत्तिर्यथा स्यात् । गोदायो व्रजति कम्बलदायो व्रजतीति । किमुच्यते अपवादविषये अनिवृत्त्यर्थमिति न पुनरुत्सर्गविषये प्रतिपदविध्यर्थं स्यात् । इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति । अण् चापि तृजादिः एवं तर्ह्युभयमनेन क्रियते । अपवादविषये चानिवृत्तिः । उत्सर्गविषये च प्रतिपदविधिः । कथं पुनरेकेन यत्नेनोभयं लभ्यम् । लभ्यमित्याह । कथम् । कर्मग्रहणसामर्थ्यात् । कथं पुनरन्तरेण कर्मग्रहणं कर्मण्यण् लभ्यः । वचनग्रहणमपि प्रकृतमनुवर्तते । अस्तिप्रयोजनमेतत् । किं तर्हीति । अपर्यायेणेति तु वक्तव्यम् । कदा चिद्धि कर्मणि स्यात्कदा चित् क्रियायामुपपदे क्रियार्थायामिति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । चेन संनियोगः करिष्यते अण् कर्मणि च । किं च अन्यत्, क्रियायामुपपदे क्रियार्थायामिति । एवमपि प्रत्येकमुपपदसंज्ञा न प्राप्नोति । चेनैव संनियोगः करिष्यते प्रत्येकं च वाक्यपरिसमाप्तिर्दृष्टेति प्रत्येकमुपपदसंज्ञा भविष्यति ।

---

नार्थो योग इत्यर्थः । यथा विहिता इति । येन प्रकारेण विहिता यथा विहिता इत्यसमस्तं पदद्वयम् । अथ वा यथा विहितं विधानं येषां ते यथाविहिता इति बहुव्रीहिः । अव्ययीभावे तु यथाविहितमिति । वचनग्रहणमिति । वचनानां ग्रहणेन लोकप्रसिद्धं वाचकत्वमवगम्यत इत्यसामञ्जस्यं न भवति ॥ ११ ॥

अण् कर्म ॥ कथं पुनरिति । अपूर्वविधानात्प्रतिप्रसवस्य लाघवादुत्सर्गविषय एव ण्वुलं बाधित्वाण् स्यात् । काण्डलावो व्रजतीति । यथा चापवादविषये न स्यादिति प्रश्न । वचनग्रहणमपीति । ततश्च वचनग्रहणात्कर्मण्येवोपपदेऽणि सिद्धे पुन कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेप्यण् सिद्धो भवतीत्यर्थः । कदा चिदिति । वचनं तु भविष्यति कालेपवादबाधनार्थं स्यादिति भावः । एवमपीति । ततश्च

लृट् शेषे च ॥१३॥ शेषग्रहणं किमर्थम्। लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम् *। लृटि शेषवचनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात्। अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् *। अविशेषेण हि विधाने सति लृटोऽभावः स्यात्। करिष्यामीति व्रजति। किं कारणम्। प्रतिषिद्धत्वात्। इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। लृट् चापि तृजादिः। अस्ति प्रयोजनमेतत्। किं तर्हीति। साधीयस्तु खलु शेषग्रहणेन क्रियार्थोपपदाद् लृण्निर्भज्यते। किं कारणम्। अक्रियार्थोपपदत्वात्। शेष इत्युच्यते। शेषश्च कः। यदन्यत् क्रियायाः क्रियार्थायाः। एवं तर्हि लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम्। लृटि शेषवचनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात् लृट् शेषे च करिष्यति हरिष्यतीति। क्व च। क्रियायामुपपदे क्रियार्थायामिति। स तर्हि चकारः कर्तव्यः। न कर्तव्यः। कथम्। इह लृङ् भवतीतीयता सिद्धम्। सोयमेवं सिद्धे सति यत् शेषग्रहणं करोति तस्यैतत्प्रयोजनम्। योगाङ्गं यथा विज्ञायेत। सति च योगाङ्गे योगविभागः करिष्यते। लृट् भवति क्रियायामुपपदे क्रियार्थायामिति। ततः शेषे। शेषे च लृड् भवति इति। लृट् शेषे च ॥

लृटः सद्वा ॥ १४ ॥ सद्विधिर्निसमप्रथमासमानाधिकरणे *। सद्विधिरप्रथमासमानाधिकरणे नित्यमिति वक्तव्यम्। पक्ष्यन्तं पश्य पक्ष्यमाणं पश्य। क्व तर्हीदानीं विभाषा। प्रथमासमानाधिकरणे पक्ष्यन् पक्ष्यति। पक्ष्यमाणः पक्ष्यते॥

अनद्यतने लुट् ॥ १५ ॥ योगविभागः कर्तव्यः। अनद्यतने। लृट् सत्संज्ञौ भवतः। श्वोऽग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन। ततः लुट्।

---

काण्डलावो व्रजतीति केवलस्य कर्मण उपपदसंज्ञाया अभावात्समासो न प्राप्नोतीति भावः। प्रत्येकं चेति। कर्मणि क्रियायामिति पृथक्सप्तमीनिर्देशात्प्रत्येकमुपपदसंज्ञा भवति निमित्तसद्भावादित्यर्थः॥ १२॥

लृट् शेषे च॥ शेषग्रहणमिति। क्रियायां क्रियार्थायामिति निवर्तिष्यत इति भावः लटीति। अयं भावः। लृडित्येतावत्युच्यमाने करिष्यतीत्यादावेव स्यात् करिष्यामीति व्रजतीत्यादौ ण्वुला बाधितत्वान्न स्यात्। शेषग्रहणात्तु क्रियार्थायामित्यस्य संनिधिरनुमीयते इति तत्रापि लृट् सिध्यति शेषे च विषये। साधीयस्त्विति। विपर्ययस्साधनं प्रत्युत शेषग्रहणमिति भावः। एवं तर्हीति। चशब्दसहिताच्छेषग्रहणात् क्रियायामप्युपपदे लृट् सिध्यतीति वार्तिककारस्याशय इत्यर्थः। इदानीं योगविभागाश्रयणेन चकारं प्रत्याख्यातुमाह स तर्हीति॥ १३॥

लृटः सद्वा॥ सद्विधिरिति। अप्रथमासमानाधिकरणग्रहणमुपलक्षणं सूत्रोपात्तानामर्थानामितिसंबोधनं लक्षणं हेतुश्च क्रियाया गृह्यते॥ १४॥

लुट् च भवत्यनद्यतने । श्वः कर्ता । श्वोऽध्येता । केन विहितस्यानद्यतने लृटः सत्संज्ञावुच्येते । एतदेव ज्ञापयति भवत्यनद्यतने लृडिति । यदयमनद्यतने लृटः सत्संज्ञौ शास्ति एव च कृत्वा सोऽप्यदोषो भवति । यदुक्तं भविष्यतीत्यनद्यतन उपसंख्यानमिति । परिदेवनेश्वस्तनीभविष्यन्त्यर्थे *। परिदेवने श्वस्तनीभविष्यन्त्या अर्थे इति वक्तव्यम् । इयं तु कदा गन्ता येवं पादौ निदधाति । अयं तु कदाध्येता य एवमनभियुक्त इति । कालप्रकर्षात्तूपमानम् * । कालप्रकर्षात्तूपमानं भविष्यति । गन्तेवेयं गन्ता नेयं गमिष्यति । अध्येतेवायमध्येतानायमध्येष्यते । न वै तिङन्तेनोपमानमस्ति । एवं तर्ह्यनद्यतन इवानद्यतन इति । अनद्यतने ॥

पदरुजविशस्पृशो घञ् ॥ १६ ॥ स्पृश उपतापे * । स्पृश उपतापे इति वक्तव्यम् । इह मा भूत् । कम्बलस्पर्श इति । पदरु ॥

सृ स्थिरे ॥ १७ ॥ व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतिसारो व्याधिः । विसारो मत्स्यः । बले । शालसारः । खदिरसारः । सृस्थिरे ॥

भावे ॥ १८ ॥ भावे सर्वलिङ्गो निर्देशः * । भावे सर्वलिङ्गो निर्देशः कर्तव्यः । भूतौ भवने भावे इति । किं प्रयोजनम् । सर्वलिङ्गे भावे एते प्रत्यया यथा स्युरिति । किं पुनः कारणं न सिध्यति । पुल्लिङ्गेनायं निर्देशः क्रियते एकवचनान्तेन च । तेन पुल्लिङ्ग एव भावे एकवचने चैते प्रत्ययाः स्युः स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोश्च न स्युः । नात्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव नाम निर्देशः क्रियते तच्चातन्त्रं स्यात् । तत्कारी च भवांस्तद्द्वेषी च । नान्तरीयकत्वादत्र पुल्लिङ्गेन निर्देशः क्रियते एकवचनेन च । अवश्यं कयाचिद्विभ-

---

अनद्य॥एवं चेति । भविष्यच्छब्दस्याद्यतनेऽपि वर्तनात्तन्त्रेण एकशेषेण वा द्वयोर्भविष्यच्छब्दयोर्निर्देशादिति भावः ।भविष्यन्त्यर्थे इति।भविष्यन्तीशब्देन पूर्वाचार्यसंज्ञया लृडुच्यते । अनद्यतन इति । प्रयोगदर्शनवशाच्च गौणेऽप्यनद्यतने प्रत्ययो भवति ॥ १५ ॥

पदरुज ॥ स्पृश उपताप इति । उपतापो रोगः । स्पर्शो नाम व्याधिविशेषः । अन्यत्र पचाद्यज् भवति । स्वरे विशेषः ॥ १६ ॥

सृस्थिरे॥ स्थिरः कालान्तरस्य प्रापकार्थ उच्यते।व्याधीति। अस्थिरार्थं वचनम्॥१७॥

भावे ॥ सर्वलिङ्ग इति । लिङ्गस्योपलक्षणार्थत्वात्सर्वसंख्य इत्यपि बोद्धव्यम् । पुल्लिङ्गेनेति । ततश्च शब्देन योऽर्थः प्रतिपाद्यते यल्लिङ्गसंख्यायुक्तस्तस्यैवाभिधायकेन भाव्यमिति । स्त्रियां भाव इति सामानाधिकरण्येन सम्बन्धस्यासम्भवात् क्रियामकर्तरि च कारके क्तिन्प्रत्ययः स्यात् । भावे तु पुंसि । एवं नपुंसके भावे क्त इत्यत्राकर्तरि च कारके इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि क्तः स्यात् । भावे तु पुंसि । द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यर्थः । नात्रेति । सत्त्वभूतार्थो विना लिङ्गं संख्यां न च निर्देष्टुं शक्यत इति तयोः शब्देनोपादानं शब्दसंस्कारमात्रमेव तु तदुपादाने प्रयोजनमित्यर्थः । नान्तरीयकत्वादिति । अन्तरशब्दो गहादिषु पठ्यते स

क्तया केन चिल्लिङ्गेन निर्देशः कर्तव्यः । तद्यथा कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति । नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति । नान्तरीयकत्वात्स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुंल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । न ह्यत्र निर्देशस्तन्त्रम् । कया चिद्विभक्तया केन चिच्च लिङ्गेन निर्देशः कर्तव्यः । अथ वा कृभ्वस्तयः क्रियासामान्यवाचिनः क्रियाविशेषवाचिनः पचादयः । यच्चात्र पचतेर्भवति न तद् भवतेः पचतिर्भवति । यच्चात्र भवतेः पचतिर्भवति न तत् पचतेर्भवतिर्भवति किं च पचतेर्भवतिर्भवति । सामान्यम् । किं च भवतेः पचतिर्भवति । विशेषः । तद्यथा । उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह उपाध्यायं भवानभिवादयतामिति । स गत्वा मातुलमभिवादयते । तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह मातुलं भवानभिवादयतामिति । स गत्वा उपाध्यायमभिवादयते । एवमिहापि पचतेर्भवतौ यत्तन्निर्दिश्यते । भावे ॥

**अकर्तरि च कारके संज्ञायाम् ॥ १९ ॥** कारकग्रहणं किमर्थम् ।

---

च विनार्थे वर्तते । अन्तरे भवं अन्तरीयं तत्र नञ्समासे कृते पृषोदरादित्वाद्भाष्यकारवचनप्रामाण्याद्वा नलोपाभावः । ततः स्वार्थे कन्प्रत्ययः । तुषपलालानीति । तुषसहितानि पलालानीत्युत्तरपदलोपी समासः । द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावप्रसङ्गः । एवं शकलकण्टकानीति बोद्धव्यम् । कण्टकशब्दश्चोभयलिङ्गः । एवमिहापीति । प्रयोगमूलत्वाद्व्याकरणस्मृतेः प्रयोगे च सर्वलिङ्गसंख्ये भावे प्रत्ययानां दर्शनादिह च लिङ्गसंख्ययोरविवक्षेत्यर्थः।अथ वेति । पाकादिषु क्रियाविशेषेषु भिन्नलिङ्गसंख्यानुगतेष्वपि भावशब्दवाच्यं सामान्यं शाबलेयादिष्विव गोत्वं विद्यते तच्चैकं पुंस्त्वानुगतं चेति तदाश्रित्य प्रत्यया विधास्यन्तइत्यर्थः । यच्चात्रेति । भावः सामान्यमेव पचादयो विशेषा एवेत्यर्थः । भूतिर्भवनमित्यपि पाकादिवत्कर्त्रादिभेदाद्भावविशेष एव भावसामान्यानुगत इति द्रष्टव्यः । तद्यथेति । यथैकस्मिन्वस्तुनि मातुलत्वमुपाध्यायत्वं च भिन्नसम्बन्ध्याश्रयं परस्परमबाधेन व्यवस्थितं तथा पाकादिषु विशेषरूपता भावशब्दस्य वाच्यश्च सामान्यम् । तदुक्तं हरिणा । आचार्यो मातुलश्चेति यथैको व्यपदिश्यते । सम्बन्धिभेदादर्थात्मा स विधिः पक्तिभावयोरिति ॥ भवतौ यदिति । भवतौ धातौ वाच्यत्वेनावस्थितं यत्सामान्यं पचादिधातुवाच्यविशेषसमवेतं तत्प्रत्ययार्थत्वेन निर्दिश्यतइत्यर्थः । तत्र पाक इत्यादौ प्रकृतिभागः साध्यरूपमर्थमाह । प्रत्ययभागस्तु सत्त्वरूपताम् । तदुक्तं हरिणा । आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता । प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धन इति ॥ १७ ॥

अकर्तरि ॥ कारकग्रहणं किमर्थमिति । अकर्तरीति पर्युदासपक्षे कर्तृसदृशस्य का-

कारकग्रहणमनादेशे स्वार्थविज्ञानात् * । कारकग्रहणं क्रियते । अनादेशे स्वार्थविज्ञानात् । अनादेशे अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति । तद्यथा, गुप्तिज्किद्भ्यः सन् यावादिभ्यः कनिति । एवमिहापि प्रत्ययाः स्वार्थे स्युः । स्वार्थे मा भूवन् कारके यथा स्युरित्येवमर्थमिदमुच्यते । नैतदस्ति प्रयोजनम् । विहितः प्रत्ययः स्वार्थे भावे घञिति । तेनातिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायते । अकर्तरि संज्ञायामेवेति । अस्ति चेदानीं कश्चित्संज्ञाभूतो भावो यदर्थो विधिः स्यात् । अस्तीत्याह । आवाहो विवाह इति । कैमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् । अकर्तरि च कारके संज्ञायां घञ्विधेयः । तत्रापूर्वो विधिरस्तु नियमोऽस्त्विति । अपूर्व एव विधिर्भविष्यति न नियमः । तदेवं तर्हि प्रयोजनं स्वार्थे मा भूवन्निति । ननु चोक्तं विहितः प्रत्ययः स्वार्थे भावे घञितीति । अन्यः स भावो बाह्यः प्रकृत्यर्थात् । अनेनेदानीमभ्यन्तरे भावे स्यात् । कः पुनरनयोर्भावयोर्विशेषः । उक्तो भावभेदो भाष्ये । एतदपि नास्ति प्रयोजनम् । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा । अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति । नासौ लोष्टमानीय कृती भवति । एवमिहापि अकर्तरीति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते । किं चान्यदकर्तृ कर्तृसदृशम् । कारकम् । उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम् । परिमाणाख्यायां सर्वेभ्यः । कारके यथा स्यात् । इह मा भूत् । एका तिलोच्छ्रितिः द्वे श्रुती इति । घञनुक्रमणमजब्विषये अवचनेऽहि स्त्रीप्रत्ययानामप्यपवादविज्ञानमिति वक्ष्यति । तन्न वक्तव्यं भवति । एतदपि नास्ति प्रयोजनम् । अत्राप्यकर्तरीत्येवानुवर्तिष्यते । संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात् * ।

---

रकस्य ग्रहणं विज्ञास्यते । प्रसज्यप्रतिषेधेपि वाक्यभेदेन संज्ञायां घञ् भवति कर्तरि न भवतीति विधिप्रतिषेधयोर्विधानाद् भावे च पूर्वसूत्रेण विहितत्वात् संज्ञायां घञ् धात्वर्थसंबन्धिनि कारके एव सामर्थ्याद्विज्ञास्यत इति प्रश्नः । स्वार्थ इति । साध्यमानरूपस्वार्थ इत्यर्थः । विहित इति । भावभेदमबुध्यमान आह आवाह इति । कन्याया आनयनमुच्यते । विवाहस्तु नयनम् । तत्रापूर्व इति । अन्यथा भावे संज्ञायामिति एकमेव योगं कुर्यात् । योगविभागात्तु विध्यर्थत्वमस्येत्यर्थः । अन्य इति । सत्त्वभावमापन्न इत्यर्थः । अनेनेति । साध्यमानरूपो धातुवाच्य आभ्यन्तरः । उक्त इति । सार्वधातुके यगित्यत्र भावभेदः प्रतिपादितः । उत्तरार्थमिति । तेन परिमाणाख्यायां सर्वेभ्य इत्यनेन घञ् कारके भवति न तु भाव इति । एका तिलोच्छ्रितिः द्वे श्रुती इत्यत्र भावे घञोऽप्रसङ्गादेतदर्थं घञनुक्रमणमित्यादि न वक्तव्यं भवति ॥ ३ ॥

संज्ञाग्रहणं चानर्थकम्। किं कारणम्। सर्वत्र घञो दर्शनात्। असंज्ञायामपि घञ् दृश्यते। को भवता लाभो लब्धः। को भवता दायो दत्त इति। यदि संज्ञाग्रहणं न क्रियते। अतिप्रसङ्गो भवति। कुतः कट इत्यत्र कारः कट इति प्राप्नोति। अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात् प्रत्ययस्य सिद्धम् ॥ अतिप्रसङ्ग इति चेत्। तन्न। किं कारणम्। अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्। अभिधानलक्षणाः कृत्तद्धितसमासाः। अनभिधानाद् न भविष्यन्ति। अकर्तरि च ॥

**परिमाणाख्यायां सर्वेभ्यः** ॥ २० ॥ सर्वग्रहणं किमर्थम्। सर्वेभ्यो धातुभ्यो घञ् यथा स्यात्। अजपोरपि विषये एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ। सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात् ॥ सर्वग्रहणमनर्थकम्। किं कारणम्। परिमाणाख्यायामिति सिद्धत्वात्। परिमाणाख्यायामित्येव घञ् सिद्धः। अजपोरपि विषये नार्थः सर्वग्रहणेन। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्। एकः पाको द्वौ पाकौ त्रयः पाका इति। पूर्वेणाप्येतत् सिद्धम्। न सिध्यति। संज्ञायामिति पूर्वो योगः। नचैषा संज्ञा। प्रत्याख्यायते संज्ञाग्रहणम्। अथापि क्रियते। एवमपि न दोषः। अजपावपि संज्ञायामेव। यथाजातीयक उत्सर्गः तथाजातीयकेनापवादेनापि भवितव्यम्। उत्तरार्थं तर्हि। इङश्च। सर्वेभ्योऽपि यथा स्यात्। ननु चायमिङ् एक एव वण्ठरण्डाकल्पः। सर्वेषु साधनेषु यथा स्यात्। उपेत्याधीयते तस्मादित्युपाध्यायः। अस्मिन्नधीयत इत्यध्यायः। अध्यायन्यायोद्यावसंहाराधारावायाश्चेत्येतन्निपातनं न कर्तव्यं भवति। एतदपि नास्ति प्रयोजनम्। क्रियते न्यास एव। उत्तरार्थमेव तर्हि वक्तव्यम्। कर्मव्यतिहारे णच् स्त्रियामिति सर्वेभ्यो यथा स्यात्। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम्। पृथक्तु ग्रहणं बाधकबाधनार्थम्। व्यावचोरी व्यावचर्च्यर्थम्। तत्र व्यतीक्षादिषु दोषः। सिद्धं तु प्रकृते स्त्रीग्रहणे ण्वुल्ग्रहणं णिज्ग्रहणं चेति। उत्तरार्थमेव तर्हि। अभिविधौ भावइनुण् सर्वेभ्यो यथा स्यात्। सांराविणम्। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्। अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम्। पृथक् तु ग्रहणं बाधकबाधनार्थं

---

. परिमाणा ॥ अजपोरपीति। अन्यथा पुरस्तादपवादा इति न्यायेनाचमेव घञ् बाधेत नापमिति भावः। द्वौ शूर्पनिष्पावाविति। यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् सिध्यति तथापि सर्वापवादार्थं सर्वग्रहणोपादानादनेनैव भवितुमर्हतीत्युपन्यासः। सर्वग्रहणमिति। बाध्यमात्रापेक्षायां समुदायापेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः। एकः पाक इति। कर्मण्यपि घञ् भवतीति भावः। सर्वेष्विति। सर्वेभ्य इति तादर्थ्ये चतुर्थी तेनायमर्थो गृह्यतइति भावः। तेनाधिकरणे घ बाधित्वा घञ्

न तु ल्युट इति । इदं तर्हि प्रयोजनम् । प्रकृत्याश्रयो योपवादस्तस्य बाधनं यथा स्याद् अर्थाश्रयो योपवादस्तस्य बाधनं मा भूदिति । एका तिलोच्छ्रितिः । द्वे श्रुतीइति ॥ घञनुक्रमणमजब्विषये । अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानमिति चोदयिष्यति तन्न वक्तव्यं भवति । घञनुक्रमणमजब्विषये * । घञनुक्रमणमजब्विषयइति वक्तव्यम् । अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम्* । अनुच्यमाने ह्येतस्मिन् स्त्रीप्रत्ययानामप्यपवादोयं विज्ञायते । एका तिलोच्छ्रितिः द्वेश्रुती इति । दारजारौ कर्तरि णिलुक् च * । दारजारौ कर्तरि वक्तव्यौ । णिलुक् च वक्तव्यः । दारयन्तीति दाराः । जरयन्तीति जाराः । करणे वा * । करणे वा वक्तव्यौ । दीर्यन्ते तैर्दाराः जीर्यन्ति तैर्जाराः । परिमाणा ॥

इङश्च ॥ २१ ॥ इङश्चेत्सपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्* । इङश्चेत्सत्रापादनं स्त्रियामुपसंख्यानं कर्तव्यं तदन्ताच्च वा ङीष् वक्तव्यः । उपेत्साधीयते ऽस्या उपाध्यायी उपाध्याया । शॄवायुवर्णनिवृत्तेषु * । शॄ इत्येतस्माद्वायुवर्णनिवृत्तेषु घञ् वक्तव्यः । शारो वायुः । शारो वर्णः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । इङश्च ॥

समि मुष्टौ ॥ ३६ ॥ समि मुष्टाविसनर्थकं वचनं परिमाणाख्यायामिति । सिद्धत्वात् * । सामि मुष्टाविति वचनमनर्थकम् । किं कारणम् । परिमाणाख्यायामिति सिद्धत्वात् । परिमाणाख्यायामित्येवात्र घञ् सिद्धः । अपरिमाणार्थं तु । अपरिमाणार्थोऽयमारम्भः । मल्लस्य संग्राहः । मुष्टिकस्य संग्राह इति । उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमनानिपातनयोरर्थयोः * । उद्ग्राभो निग्राभ इति इमौ शब्दौ छन्दसि वक्तव्यौ स्रुगुद्यमनानिपातनयोरर्थयोः । उदग्राभं च निग्राभं च ब्रह्मदेवा अवीवृधन् ॥

---

भवति । प्रकृत्याश्रय इति । सर्वेभ्य इति पञ्चमीनिर्देशादयमर्थो लभ्यतइति भावः । अर्थाश्रय इति । स्त्रियामित्यर्थं निर्दिश्य क्तिनो विधानादर्थाश्रयत्वम् । एकेति । ननु कारकानुवृत्त्यात्र भावे घञ् न भविष्यति । नैतदस्ति । उभयाधिकारात् । दारजाराविति । णिलोपे सति तस्य स्थानिवत्त्वाद् घञाश्रया वृद्धिर्न स्यादिति णिलुग् विधीयते । तस्य हि अपरनिमित्तकत्वात् क्विलुगुपधात्वेति प्रतिषेधात् वा स्थानिवत्त्वाभावाज्ज जारशब्दः सिध्यति । करणे वेति । अण्यन्तयोरेव हणातिजीर्यत्योः करणे घे प्राप्ते घञेवोच्यतइत्यर्थः ॥ २० ॥

इङश्च ॥ प्रकृत्याश्रयस्यैवाचो घञा बाधकेन भाव्यम् । न त्वर्थाश्रयस्यापि क्तिन इति मत्वाह इङश्चेति । शॄवाय्विति । ॠदोरबिति प्राप्ते वचनम् । शार इति । कर्मणि घञ् । अकृतनीशार इति । अकृताच्छादन इत्यर्थः ॥ २१ ॥

समि मुष्टौ ॥ परिमाणवाचिमुष्टिशब्दाश्रयेण पूर्वः पक्षः । अङ्गुलिसंनिवेशवाच्याश्रयणेन तु परिहारः ॥ ३६ ॥

**कर्मव्यतिहारे णच् स्त्रियाम्** ॥ ४३ ॥ स्त्रीग्रहणं किमर्थम् । कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम्* । कर्मव्यतिहारे स्त्रीग्रहणं क्रियते व्यतिपाकार्थम् । इह मा भूत् । व्यतिपाको वर्तते । अथ किमर्थं पृथग्ग्रहणम् । पृथग्ग्रहणं बाधकबाधनार्थम् * । पृथग्ग्रहणं क्रियते बाधकबाधनार्थं, ये तस्य बाधकास्तद्बाधनार्थम् । किं प्रयोजनम् । व्यावचोरी व्यावचर्च्यर्थम् । व्यावचोरी वर्तते । व्यावचर्ची वर्तते । तत्र व्यतीक्षादिषु दोषः * । तत्र व्यतीक्षादिषु दोषो भवति । व्यतीक्षा वर्तते । व्यतीहा वर्तते । सिद्धं तु प्रकृते स्त्रीग्रहणं णज्ग्रहणं णिज्ग्रहणं च* । सिद्धमेतत् । कथम् । प्रकृतएव स्त्रीग्रहणेऽयं योगः कर्तव्यः । स्त्रियां क्तिन् । ततः कर्मव्यतिहारे णच् । ततो णिचः ॥

**अभिविधौ भाव इनुण्** ॥ ४४ ॥ भावग्रहणं किमर्थम् । अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् * । अभिविधौ भावग्रहणं क्रियते नपुंसके क्तादिनिवृत्त्यर्थम् । नपुंसके लिङ्गे भावे क्तादयो मा भूवन्निति । अथ किमर्थं पृथग्ग्रहणं क्रियते । पृथग्ग्रहणं बाधकबाधनार्थम् । पृथग्ग्रहणं क्रियते बाधकबाधनार्थम् । ये तस्य बाधकास्तद्बाधनार्थम् । न तु ल्युटः । ल्युटो बाधनं नेष्यते संकुटनमित्येव भवति ॥

**एरच्** ॥ ५६ ॥ अज्विधौ भयस्योपसंख्यानम् * । अज्विधौ भयस्योपसंख्यानं कर्तव्यम् । भयम् । असल्पमिदमुच्यते भयस्येति । भयादीनामिति वक्तव्यम् । इहापि यथा स्यात् । भयं, वर्षम् । किं प्रयोजनम् । नपुंसके क्तादिनिवृत्त्यर्थम् । नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति । कल्प्यादिभ्यः प्रतिषेधः * । कल्प्यादिभ्यः प्रतिषेधो वक्तव्यः । कल्पः अर्थः मन्त्र इति । जवसवौ छन्दसि* ।

---

कर्म ॥ पृथग्ग्रहणमिति । प्रकरणोत्कर्षात् क्तिनो बाधकानामप्यनेन बाधनमिति भावः । व्यतीक्षादिष्विति । अप्रत्ययाद् गुरोश्च हल इति अकारस्यापि बाधप्रसङ्गादित्यर्थः । सिद्धं त्विति । यद्येवं व्यावक्रुष्टिरिति क्तिन् न प्राप्नोति । व्यात्यक्षी च न सिध्यति । नैष दोषः । कृत्यल्युटो बहुलमिति बहुलवचनाद्यथेष्टलाभप्रयोजनात् ॥४३॥

अभिविधौ ॥ भावे कारक इति द्वयेऽपि प्रकृते शब्दशक्तिस्वाभाव्याद्भाव एवेनुण् भविष्यतीति मत्वाह भावग्रहणमिति । नपुंसक इति । मध्येपवादाः पूर्वान्विधीन् बाधन्त इति इनुण् घञमेव बाधेत न तु क्तादीन् । भावग्रहणात्त्वाधिकविधानार्थात्तानपि बाधतइति भावः । अथेति । नपुंसके भाव इत्यस्यानन्तरमिदं वक्तव्यमिति भावः । पृथग्ग्रहणमिति । वासरूपोऽस्त्रियामिति वचनात्पक्षे क्तादयः स्युरिति प्रकरणोत्कर्षेण वासरूपविधिर्बाध्यतइत्यर्थः ॥ ४४ ॥

एरच् ॥ वर्षमिति । वर्षणमित्यपि भवति । वृषभो वर्षणादिति भाष्यकारवचनात् । कल्प इति । ण्यन्तेभ्योचि प्रतिषिद्धे घञेव भवति । एरजण्यन्तानामिति तु वचनम-

जवसवौ छन्दसि वक्तव्यौ। ऊर्वोरस्तु मे जवः। अयं मे पञ्चौदनः सवः। एरच्॥

ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥ किमर्थं निष्पूर्वाच्चिनोतेरब् विधीयते। नाचैव सिद्धम्। न ह्यस्ति विशेषः। निष्पूर्वाच्चिनोतेरचो वा, अचो वा, तदेव रूपं स एवास्य स्वरः। न सिध्यति। हस्तादाने चेरस्तेये इति घञ् प्राप्नोति तद्बाधनार्थम्। अत उत्तरं पठति। अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् *। अब्विधौ निश्चिग्रहणमनर्थकम्। किं कारणम्। स्तेयस्य घञ्विधौ प्रतिषेधात्। स्तेयस्य घञ्विधौ प्रतिषेध उच्यते। निष्पूर्वश्चिनोतिः स्तेये वर्तते। अस्तेयार्थ तर्हीदं वक्तव्यं निष्पूर्वाच्चिनोतेरस्तेये अब् यथा स्यात्। अस्तेयार्थमिति चेन्नानिष्टत्वात् *। अस्तेयार्थमिति चेत् तन्न। किं कारणम्। अनिष्टत्वात्। नहि निष्पूर्वाच्चिनोतेरस्तेये अबिष्यते। किं तर्हि। घञेवेष्यते। एवं तर्हि सिद्धे सति यन्निष्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यः यत्तदन्तः थाथघञ्क्ताजवित्रकाण मिति तन्निष्पूर्वाच्चिनोतेर्न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। निश्चयः। एष स्वरः सिद्धो भवति। वशिरण्योश्चोपसंख्यानम् *। वशिरण्योश्चोपसंख्यानं कर्तव्यम्। सवशं सैन्धवम्। धनञ्जयं रणे रणे। घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् *। घञर्थे को विधेयः। किं प्रयोजनम्। स्थास्नापाव्यधिहनियुध्यर्थम्। स्था। प्रतिष्ठन्तेस्मिन्धान्यानीति प्रस्थः। प्रस्थे हि मवतः शृङ्गे। स्था स्ना। प्रस्नान्ति अस्मिन्निति प्रस्नः। स्ना। पा। प्रपिबन्त्यस्यामिति प्रपा। पा। व्यधि। आविध्यन्ति तेनाविधः। व्यधि। हनि। विघ्नन्ति तस्मिन्मनांसि विघ्नः। हनि। युधि। आयुध्यन्ते तेनायुधम्॥

स्तम्बे क च ॥ ८३ ॥ कस्मादयं को विधीयते। हन्तेरित्याह। तद्धन्तिग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्। हनश्च वध इति। तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम्। नैतानि निपातनानि। हन्तेरेते आदेशाः। यद्यादेशाः। घनस्वरो न सिध्यति। घन इति। सन्तु तर्हि निपातनानि। ननु चोक्तं तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुमिति। संबन्धमनुवर्तिष्यते। अथ वा पुनः सन्तु आदेशाः। ननु चोक्तं स्वरो न सिध्यतीति। नैष दोषः। अकारान्ता आदेशाः। अथ यदा इषीकया

---

नार्थम्। जवसवाविति। अपि प्राप्तेऽज्बाधिः स्वरे विशेषः॥ ५६॥

ग्रहवृ॥ एष स्वर इति। मध्योदात्तत्वं कृत्स्वरेण भवति। वशिरण्योरिति। घञि वचनम्। वशनं वशः। रणन्त्यस्मिन्निति रणः। घञर्थ इति। भावः कर्तृवर्जितं च कारकं घञर्थः॥ ५८॥

स्तम्बे क च॥ घनस्वर इति। अन्तोदात्तत्वं न सिध्यति अप्स्वरेणाद्युदात्तत्वप्र-

स्तम्बो हन्यते कथं तत्र भवितव्यम् । के चित्तावदाहुः । स्तम्बघ्नेति भवितव्यम् । अपर आहुः । स्तम्बहेतिरिति भवितव्यम् । ऊतियूतिजूतिसातिहेतिकीर्तयश्चेतिनिपातनादिति । अपर आहुः । स्तम्बहननीति भवितव्यमिति । वक्ष्यत्येतत् । अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति ॥

यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥ यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः * । यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधो वक्तव्यः । प्रश्न इति । एवं तर्हि अङित्करिष्यते । आङिति गुणप्रतिषेधः * । यद्यङित् गुणस्य प्रतिषेधो वक्तव्यः । विश्नइति । सूत्रं च भिद्यते । तथान्यासमेवास्तु । ननु चोक्तं यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेध इति । नैष दोषः । निपातनादेतत् सिद्धम् । किं निपातनम् । प्रश्ने चासन्नकालइति ॥

स्त्रियां क्तिन् ॥ ९४ ॥ स्त्रियां क्तिन्नाबादिभ्यश्च * । स्त्रियां क्तिन्नित्राबादिभ्यश्चेति वक्तव्यम् । आप्तिः । राद्धिः । दीप्तिः । निष्ठायां वा सेटो ऽकारवचनात्सिद्धम् * । अथ वा निष्ठायां सेटः अकारो भवतीति वक्तव्यम् । यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते । स्रंसा ध्वसेति न सिध्यति । स्रस्तिः ध्वस्तिरिति प्राप्नोति । किं पुनरिदं परिगणनं त्रय एवाबादयः । आहो स्विदुदाहरणमात्रम् । किं चातः । यदि परिगणनं भेदो भवति । अथोदाहरणमात्रं नास्ति भेदः । स्रस्तिः ध्वस्तिरित्येव भवितव्यम् ॥

स्थागापापचो भावे ॥ ९५ ॥ स्थादिभ्यः सर्वापवादप्रसङ्गः * । स्थादिभ्यः सर्वापवादः । क्तिन्प्राप्नोति स यथैवाङं बाधते एवं ण्वुलिञावपि बाधेत । कां त्वं स्थायिकां कां त्वं स्थायिम् । सिद्धं तु अङ्विधाने स्थादिप्रतिषेधात् * । सिद्धमेतत् । कथम् । अङ्विधाने एव स्थादीनां प्रतिषेधो वक्तव्यः । प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति । सिध्यति सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं स्थादिभ्यः सर्वापवादप्रसङ्गइति । नैष दोषः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्येवमयं स्त्रियां क्तिन्नङं बाधिष्यते । ण्वुलिञौ

---

सङ्ग्रादित्यर्थः । अकारान्ता इति । तत्रातो लोपे कृते उदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवतीति भावः । स्तम्बघ्नेति । कप्रत्यये रूपं तस्य सर्वापवादत्वादिति भाव । स्तम्बहेतिरिति । निपातनस्य सर्वापवादत्वादिति भावः ॥ ८३ ॥

स्त्रियां क्तिन् ॥ स्रस्तिरिति : स्रंसेति नैव भवतीति भावः ॥ ९४ ॥

स्थागापा ॥ स्थादिभ्य इति । बाध्यमात्रापेक्षायां बाध्यसमुदायापेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः । ण्वुलिञाविति । विभाषाख्यानपरिप्रश्नयोरित्यनेन विहितौ । पुरस्तादिति । अनन्तरबाधेन लब्धावकाशो विधिः परत्वादुत्तरेण बाध्यत

न बाधिष्यते । श्रुयजिषिस्तुभ्यः करणे * । श्रुयजिषिस्तुभ्यः करणे क्तिन् वक्तव्यः । श्रूयते ऽनयेति श्रुतिः । इष्यते ऽनयेति इष्टिः । स्तूयते ऽनयेति स्तुतिः । ग्लाम्लाज्याहाभ्यो निः * । ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः । ग्लानिः । म्लानिः ज्यानिः । हानिः ।

व्रजयजोर्भावे क्यप् ॥ ९८ ॥ क्यब्विधिरधिकरणे च * । क्यब्विधिरधिकरणे चेति वक्तव्यम् । समजन्ति तस्यां समज्या ॥

कृञः श च ॥१००॥ कृञः श चेति वावचनम् । कृञः श चेति वावचनं कर्तव्यम् । किं प्रयोजनम् । क्तिन्नपि यथा स्यात् । कृतिः ॥

इच्छा ॥ १०१ ॥ किं निपात्यते । इषेः शे यगभावः । अत्यल्पमिदमुच्यते इच्छेति । इच्छापरिसर्यामृगयाऽटाट्यानामुपसंख्यानं कर्तव्यम् । जागर्तेरकारो वा जागर्या । जागरः ॥

षिद्भिदादिभ्योऽङ् ॥ १०४ ॥ भिदा विदारण इति वक्तव्यम् । भित्तिरन्या । छिदा द्वैधीकरण इति वक्तव्यम् । छित्तिरन्या । आरा शस्त्र्य मिति वक्तव्यम् । आर्तिरन्या । धारा प्रपात इति वक्तव्यम् । धृतिरन्या । गुहागिर्योषध्योरिति वक्तव्यम् । गूढिरन्या । षिद्भिदा ॥

ण्यासश्रन्थो युच् ॥ १०७ ॥ किमर्थश्चकारः । स्वरार्थः । चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । उदात्त इति वर्तते भूवीरा उदात्त इति । यद्युदात्त इति वर्तते । व्रजयजोर्भावे क्यप् । किमर्थः पकारः । तुगर्थः । ह्रस्वस्य पिति कृतीति । उदात्त इत्येव हि वर्तते । एवमपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति न पुनरादेरिति । उदात्त इत्यनुवर्तनसामर्थ्यात् । यस्य अप्राप्तः स्वरस्तस्य भवति । कस्य चाप्राप्तः । अन्त्यस्य । सामान्यग्रहणाविघातार्थस्तर्हि । क्व सामान्यग्रहणाविघातार्थेनार्थः । युवोरनाकाविति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत् सिद्धं तु युवोरनुनासिकवचना

---

इत्यर्थः । श्रुयजीति । ल्युड्बाधनार्थं वचनम् ॥ ६५ ॥

व्रजयजो ॥ क्यब्विधिरिति । उत्तरसूत्रे इति भावः ॥ ९८ ॥

कृञः श च ॥ चकारेणानन्तरस्य क्यप एव समुच्चयो न तु व्यहितस्य क्तिन इति मत्वाह वावचनमिति । तेन क्रिया कृत्या कृतिरिति रूपत्रयसिद्धिः ॥ १०० ॥

षिद्भिदादि ॥ आर्तिरिति । आङोतेश्च उपसर्गादृति धाताविति वृद्धिरेकादेशः । गुहागिर्योषध्योरिति । गिरिशब्दोत्र गिर्यवयवे वर्तते ॥ १०४ ॥

ण्यासश्रन्थो ॥ युवोरिति । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्न तु ल्युडादीनामिति भावः । अनुनासिकवचनादिति । तत्र ल्युडादीनामपि अनुनासिकत्वाद-

दिति । युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम् । युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानं कर्तव्यम् । घट्टना वन्दना । वेदना । इषेरनिच्छार्थस्य * । इषेरनिच्छार्थस्येति वक्तव्यम् । अन्विष्यते अन्वेषणा । परेर्वा * । परेर्वेति वक्तव्यम् । अन्यां परीष्टिं चर । अन्यां पर्येषणां चर ॥

रोगाख्यायां ण्वुल् बहुलम् ॥ १०८ ॥ धात्वर्थनिर्देशे ण्वुल् * । धात्वर्थनिर्देशे ण्वुल् वक्तव्यः । का नामासिका अन्येष्वीहमानेषु । का नाम शायिका अन्येष्वधीयानेषु । इक्श्तिपौ धातुनिर्देशे * । इक्श्तिपाविष्टौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ । पचेर्ब्रूहि पचतेर्ब्रूहि । वर्णात्कारः * । वर्णात्कारप्रत्ययो वक्तव्यः। अकारः । रादिफः * । रादिफो वक्तव्यः । रेफः । मत्वर्थाच्छः * । मत्वर्थाच्छो वक्तव्यः । मत्वर्थीयः । इणजादिभ्यः * । इणजादिभ्यो वक्तव्यः । आजिः । आतिः । आदिः । इञ् पवादिभ्यः * । इञ् वपादिभ्यो वक्तव्यः । वापिः । सासिः । वादिः । इक् कृष्यादिभ्यः * । इक् कृष्यादिभ्यो वक्तव्यः । कृषिः । किरिः । गिरिः । संपदादिभ्यः क्विप् * । संपदादिभ्यः क्विब् वक्तव्यः । संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । रोगाख्या ॥

कृत्यल्युटो बहुलम् ॥ ११३ ॥ कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम् । पादाभ्यां ह्रियते पादहारकः । गलेचोप्यते गलेचोपकः । श्वोग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । कृत्यल्युटो बहुलम् ॥

गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥ गोचरादीनामग्र-

---

स्यैव ग्रहणं भविष्यतीत्यर्थः ॥ १०७ ॥

रोगाख्या ॥ धात्वर्थनिर्देश इति । क्रियानिर्देश इत्यर्थः । इक्श्तिपाविति । बहुलवचनाच्च क्वचिन्न भवति श्तिपः शित्करणादकर्तृवाचिन्यपि तस्मिन् शबादयो भवन्ति । यद्यपि क्व चिद्भवति यथा विभाषा लीयतेरिति । अत्र हि लीलीङोर्यका श्तिपि निर्देशः कृतः । श्यनि तु लीङ एव ग्रहणं स्याद् न तु लिनातेः । वर्णादिति । वर्णवाचिनोवर्णानुकरणादित्यर्थः । बहुलग्रहणात् क्व चिन्न भवति अस्य च्वाविति यथा । तथा क्व चिद्वर्णसमुदायानुकरणादपि । एवकार इति । कारप्रत्ययस्य ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति । ननु करणं कारः अस्य कारः अकार इत्येवं सिध्यति । नैतदस्ति । एवं हि विज्ञायमाने ऽकारकरणमित्यादि न सिध्येत् । कारप्रत्ययस्य कृदतिङित्यधिकाराद्धात्वविहितत्वे ऽपि कृत्संज्ञा । ततस्तदन्तस्य प्रातिपदिकत्वाद्विभक्त्युत्पत्तिः । एवं मत्वर्थीय इति । अकारलोपस्त्वत्राभत्वेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा । संपदादिभ्य इति । क्तिन्नपि बहुलवचनाद्भवति संपत्तिरिति ॥ १०८ ॥

कृत्य ॥ कृत इति । कृत्यग्रहमपनीय कृद्ग्रहणं व्यापकत्वात्कर्तव्यं तस्मिंश्च कृते ल्युड्ग्रहणं न कर्तव्यं तस्यापि कृतत्वात् । श्वोग्नीनिति । अनद्यतनेपि लृड् भवति ११३॥

हणं प्रायवचनाद् यथा कषो निकष इति * । गोचरादीनां ग्रहणं शक्यमकर्तुम् । घञ् कस्मान्न भवति । प्रायवचनाद् । यथा कषः निकष इति । प्रायवचनाद् घञ् न भवति ॥

हलश्च ॥ १२१ ॥ घञ्विधाववहाराधारावायानामुपसंख्यानम् * । घञ्विधौ अवहाराधारावायानामुपसंख्यानं कर्तव्यम् । अवह्रियन्ते अस्मिन्नवहारः । आध्रियन्ते ऽस्मिन्नाधारः । एत्येतस्मिन् वयन्त्यावायः ॥

उदङ्कोऽनुदके ॥ १२३ ॥ किमर्थमिदमुच्यते । न हलश्चेत्येव सिद्धम् । अनुदक इति वक्ष्यामीति । इह मा भूत् । उदकोदञ्चनः । उदङ्कोनुदकग्रहणानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति * । उदकोनुदकग्रहणं चानर्थकम् । घञ् कस्मान्न भवति । प्रायवचनाद् घञ् न भवति । यथा गोदोहनः प्रसाधन इति ।

खनो घ च ॥ १२५ ॥ खनो डडरेकेकवकाः । डो वक्तव्यः । आखः । डरो वक्तव्यः । आखरः । इको वक्तव्यः । आखनिकः । इकवको वक्तव्यः । आखनिकवकः ॥

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥ अजब्भ्यां स्त्रीखलनाः * । अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन । अजपोरवकाशः । चयः । लवः । स्त्रीप्रत्ययानामवकाशः । कृतिः । हृतिः । इहोभयं प्राप्नोति । चितिः स्तुतिः । खलोवकाशः । ईषद्भेदः । सुभेदः । अजपोः स एव । इहोभयं प्राप्नोति ईषच्चयः । सुचयः । ईषल्लवः सुलवः । अनस्यावकाशः । इध्मप्रव्रश्चनः । अजपोः स एव । इहोभयं प्राप्नोति । पलाशचयनः । अविलवनः । स्त्रीखलना भवन्ति विप्रतिषेधेन । स्त्रियाः खलनौ विप्रतिषेधेन । * । स्त्रियाः खलनौ भवतो विप्रतिषेन । स्त्रीप्रत्ययानामवकाशः । कृतिः । हृतिः । खलोवकाशः । ईषद्भेदः । सुभेदः । इहोभयं प्राप्नोति । ईषद्भेदा । सुभेदा । अनस्यावकाशः । इध्मप्रव्रश्चनः । स्त्रीप्रत्ययानां स एव । इहोभयं प्राप्नोति । सक्तुधानी । तिलपीडनी । खलनौ भवतो विप्रतिषेधेन ॥

कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥ खल् कर्तृकर्मणोश्च्व्यर्थयोः * । खल् कर्तृकर्मणोः च्व्यर्थयोरिति वक्तव्यम् । अनाढ्येन भवता ईषदाढ्येन शक्यं भावि-

---

गोचरसंचर ॥ प्रायवचनादिति । हलश्चेत्यत्र प्रायग्रहणानुवर्तनाद् घञः क्वचिदभावाद् घ एव भवतीत्यर्थः ॥ ११६ ॥

हलश्च ॥ अध्यायसूत्रे आधारावायशब्दौ वार्तिके दर्शनादभियुक्तैः प्रक्षिप्तौ । १२१॥

उदङ्को ॥ प्रायवचनादिति । घञ्वद् घोपि न भवतीति ल्युडेव भवति ॥१२३॥

तुम्। ईषदाढ्यम्भवं भवता। दुराढ्यम्भवम्। स्वाढ्यम्भवम्। कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम् *। कर्तृकर्मग्रहणं चोपपदसंज्ञार्थं द्रष्टव्यम्। तद् द्वेष्यं विजानीयाद् अभिधेययोरिति। तदाचार्यः सुहृद् भूत्वान्वाचष्टे कर्तृकर्मग्रहणं चोपपदसंज्ञार्थमिति॥

**अन्येभ्योऽपि दृश्यते** ॥१३०॥ भाषायां शासियुधिदृशिधृषिभ्यो युच् *। भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः। दुःशासनः। दुर्योधनः। दुर्दर्शनः दुर्धर्षणः। मृषेश्चेति वक्तव्यम्। दुर्मर्षणः॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयास्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥

**वर्तमानसामीप्ये वर्तमानवद्वा** ॥ १३१ ॥ वत्करणं किमर्थम्। वर्तमानसामीप्ये वर्तमाने वेतीयत्युच्यमाने वर्तमाने ये प्रत्यया विहितास्ते वा वर्तमानसामीप्ये धातुमात्रात्स्युः। वत्करणे पुनः क्रियमाणे न दोषो भवति। यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन वर्तमानसामीप्ये भवन्ति। ततोमी वर्तमानवत्कृताः स्युः। अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात्। नामी वर्तमानवत्कृताः स्युः। इह वर्तमानसामीप्ये वर्तमानवद्वेति उक्त्वा लडेवोदाह्रियते। यदि पुनर्वा लड् भवतीत्येवोच्येत। अत उत्तरं पठति। वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् *। वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते शत्राद्यर्थम्। शत्राद्यर्थोऽयमारम्भः। एषो-

---

कर्तृ ॥ त्वर्थयोरिति तेनाभूततद्भावादन्यत्र खल् न भवति। आढ्येन सुभूयत इति। अत्र गतित्वात् सुशब्दस्य धातोः प्राक् प्रयोगः। स्वाढ्यम्भवं भवतेत्यादौ खलः खित्करणसामर्थ्याद्धातोरनन्तरं कर्तृकर्मणी प्रयुज्येते। तदाचार्य इति। एतच्च खित्करणादनव्ययस्य मुमर्थाल्लभ्यते। चकारस्य सन्नियोगार्थत्वादीषद्दुस्सवोऽप्युपपदान्याश्रीयन्ते ॥ १२७ ॥

अन्येभ्यो ॥ भाषायामिति। छन्दसीत्यधिकाराद् भाषायां न प्राप्नोतीति वचनम् १३०॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥

वर्तमान ॥ समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति। अन्ये समीपस्य भावः सामीप्यं वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते। ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसंबन्धो न वर्तमानस्येति समासाप्रसङ्गः। नैष दोषः। पारम्पर्येण संबन्धसद्भावात्। अथास्मिन् पक्षे गुणेन नेति षष्ठीसमासप्रतिषेधः कस्मान्न भवति। अत्र केचिदाहुः। शौक्ल्यादीनां रूपादिविशेषाणां समासप्रतिषेध इति। अन्ये त्वाहुः। अयमेव निर्देशो ज्ञापयति अनित्यः समासप्रतिषेध इति। अपरे ब्रुवते। गुणशब्दस्य संबन्धिशब्दत्वाद् गुणाक्षिप्तस्य गुणिन एव समासप्रतिषेधः न च वर्तमानः सामीप्यस्य गुणी। भूतभविष्यतोस्तद्गुणत्वात्। वत्करणमिति। वर्तमान इत्येतावतैव वर्तमानसहचरितानां प्रत्ययानां सिद्धत्वादिति प्रश्नः। धातुमात्रादिति। वर्तमानग्रहणेन साहचर्यात्प्रत्ययानां रूपमात्रमेव लक्ष्येत ततश्च संकरोऽपि स्यात्। यस्माद्धातोर्वर्तमाने यः प्रत्ययो विहितः स विशेषणानुपादानाद्धातु-

स्मि पचन्। एषोस्मि पचमान इति। नैतदस्ति प्रयोजनम्। लडादेशौ शतृशानचौ। तत्र वा लड् भवतीत्येव सिद्धम्। यौ तर्ह्यलडादेशौ एषोस्मि पवमानः एषोस्मि यजमान इति यौ चापि लडादेशौ तावपि प्रयोजयतः। वर्तमानविहितस्य लटः शतृशानचावुच्येते अविशेषविहितश्चायं योगः शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादयः। एषोस्मि अलङ्करिष्णुः। एषोस्मि प्रजनिष्णुः॥

**आशंसायां भूतवच्च ॥१३२॥** आशंसा नाम भविष्यत्काला। आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः *। आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः। न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् *। न वा वक्तव्यः। किं कारणम्। अपवादस्य निमित्ताभावात्। नात्रापवादस्य निमित्तमस्ति। कथम्। अनद्यतने हि तयोर्विधानम्। अनद्यतने हि तौ विधीयेते लङ्लिटौ। न चात्रानद्यतनः कालो विवक्षितः। कस्तर्हि। भूतकालसामान्यम्। आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः *। आशंसासंभावनमित्यविशिष्टावेतावर्थौ। आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः। आशंसायां ये विधीयन्ते ते संभावने ऽपि प्राप्नुवन्ति ये च संभावने विधीयन्ते ते आशंसायामपि प्राप्नुवन्ति। किं तर्ह्युच्यते अप्राप्तिरिति। न साधीयः प्राप्तिर्भवति। इष्टा व्यवस्था न प्रकल्पेत। न सर्वे सर्वत्रेष्यन्ते। न वा संभावनावयवत्वादाशंसा-

---

न्तरादपि स्यादित्यर्थः। लडेवेति। वृत्तिष्विति भावः। शत्राद्यर्थमिति। लटः शतृशानचावित्यनेन वर्तमानाधिकाराद्वर्तमानकालविहितस्यैव लटः शतृशानचौ भवतः न तु कालान्तरविहितस्येति भावः। लडादेशावीति। लृण्मात्रादेशौ। वर्तमानग्रहणस्य तत्रानपेक्षणादिति भावः। यौ तर्हीति। पूङ्यजोः शानन्। ताच्छील्यवयोवचनशक्तिषु चानश्इङ्धार्यादिभ्यः शतृप्रत्यय इत्यर्थः। वर्तमानविहितस्येति। लट्स्मइत्यादिविहितलण्निवृत्त्यर्थमवश्यं तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः। अविशेषविहित इति। वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः॥ १३१॥

आशंसायाम्॥ आशंसेति। आशंसा अभिमतार्थवाञ्छा सा वर्तमानापि विषयस्य भविष्यत्त्वाद्भविष्यत्कालेत्युच्यते। इह चाशंसातिदेशस्य विषयभावेनोपात्ता। आशंसायां विषयआशंस्यमानाक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्तीत्यर्थः संपद्यते। नवेति। अत्र सूत्रे भूतमात्रमुच्यते न तु तद्विशेषोनद्यतनस्तत्र सामान्यातिदेशे विशेषानतिदेश इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः। आशंसासंभावनयोरिति। यद्यविशेषः कथं द्वन्द्वनिर्देश इति चेत् शब्दस्वरूपाभिधायित्वाददोषः। आशंसासंभावनयोरर्थभेदाभावादविशेष इत्यर्थः। आशंसा अनागतवस्तुवाञ्छा संभावनमपि भाविवस्तूत्प्रेक्षणमिति भावः। नवेति। अवयवशब्दः पृथग्भाववाची संभावनात् पृथगेवार्थ-

याः * । न वा एष दोषः । किं कारणम् । संभावनावयवत्वादाशंसायाः । संभावनावयवात्मिका आशंसा। आशंसा नाम प्रधारितार्थः । अभिनीतश्चानभिनीतश्च। संभावनं नाम प्रधारितोर्थः । अभिनीत एव । अर्थासंदेहो वालमर्थत्वात्संभावनस्य * । अथ वा अर्थासंदेह एव पुनरस्य । किं कारणम् । अलमर्थत्वात्संभावनस्य । संभावने आलमर्थ्यं गम्यते । आशंसायां पुनरनालमर्थ्यम् । आचार्यप्रवृत्तिर्ज्ञापयति संभावने ऽपि नालमर्थ्यं गम्यतइति । यदयं संभावने ऽलमिति चेदित्याह । तस्मात्सुष्ठूच्यते । न वा संभावनावयवत्वादाशंसाया इति ॥

क्षिप्रवचने लृट् ॥ १३३ ॥ क्षिप्रवचने लृट आशंसावचने लिङ्विप्रतिषेधेन* । क्षिप्रवचने लृट आशंसावचने लिङ् भवति विप्रतिषेधेन । क्षिप्रवचने लृड् भवतीत्यस्य अवकाशः। उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाशः। उपाध्यायश्चेदागतः आशंसे युक्तोधीयीय। इहोभयं प्राप्नोति उपाध्यायश्चेदागतः आशंसे क्षिप्रमधीयीय । लिङ् भवति विप्रतिषेधेन । अनिष्पन्ने निष्पन्नशब्दः शिष्यो ऽनिष्पन्नत्वात् * । अनिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः । किं कारणम् । अनिष्पन्नत्वात् । देवश्चेद् वृष्टो निष्पन्नाः शालयः। तत्र भवितव्यं संपत्स्यन्ते शालय इति। सिद्धं तु भविष्यत्प्रतिषेधात् *। सिद्धमेतत्। कथम् । भविष्यत्प्रतिषेधात् । यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । कश्चिदाह देवश्चेद् वृष्टः संपत्स्यन्ते शालय इति । सउच्यते । मैवं वोचः संपन्नाः शालय इत्येवं ब्रूहि । हेतुभूतकालसंप्रेक्षितत्वाद्वा* । हेतुभूतकालसंप्रेक्षितत्वाद्वा पुनः सिद्धमेतत् । हेतुभूतकालं वर्षं वर्षकाला च क्रिया। यदि तर्हि निष्पन्नोर्थः । किं निष्पन्नकार्याणि न क्रियन्ते । कानि । भोजनादीनि । अन्यदिदा-

---

सेत्यर्थः। प्रधारितोर्थ इति । इदं मे भूयादिति मनसा विषयीकृतोर्थः । आशंसाविषयत्वादाशंसाशब्देनात्र उक्तः। अभिनीत इति । कारणयोग्यतावशाच्छक्यप्राप्तिरित्यर्थः । ततोन्योनभिनीत इत्यर्थः । अन्ये त्वप्रधारित इति पठन्ति अनिर्धारितोवश्यंभावितया अनिश्चित इत्यर्थः। संभावनं चासति विधुरप्रत्ययोपनिपाते भवितव्यमनेनार्थेनेति ज्ञानमित्यनयोर्भेदः । यदयमिति । यदि संभावने नियमेनालमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषणं नोपाददीतेत्यर्थः ॥ १३२ ॥

क्षिप्रवच ॥ अनिष्पन्न इति । अनाशंसार्थमिदम् । वृष्टश्चेदित्यादि वस्तुस्वरूपकथनम् । सिद्धं त्विति। अप्शालिबीजसंयोग एव निष्पत्तिः शालीनां तत्रैव निष्पत्तेर्वर्तनादिति भावः । हेतुभूतकालसंप्रेक्षितत्वाद्वेति । कारणसंबन्धी कालः कार्यस्य व्यवस्थाप्यते । कारणान्तरापेक्षाभावप्रतिपादनायेत्यर्थः । हेतुभूतस्य वर्षादेर्यः कालः स एव कार्ये संप्रेक्षितः कारणस्यैव कार्यरूपतया विवक्षितत्वात् । कार्यकारणयोरभेदाध्यवसायादित्यर्थः। भाष्यकारस्त्वेतदेव च वस्त्वन्यथा व्याचष्टे हेतुभूतकालं वर्षमिति।

नीमुच्यते किं निष्पन्नकार्याणि न क्रियन्तइति । यत्तु तन्निष्पन्नोर्थो न निष्पन्न इति । स निष्पन्नोर्थः । अवश्यं खल्वापि कोष्ठगतेष्वपि शालिषु अवहननादीनि प्रतीक्ष्याणि । एवमिहापि निष्पन्नोर्थः । अवश्यं तु जननादीनि प्रतीक्ष्याणि । अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात् * । अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः । कूपोस्ति कूपो भविष्यति कूपो भविता कूपोभूत् कूप आसीत् कूपो बभूवेति । कथं पुनर्ज्ञायते भवन्त्या एषोर्थ इति । कर्तुर्विद्यमानत्वात् । कर्तात्र विद्यते । कथं पुनर्ज्ञायते कर्तात्र विद्यतइति । कूपोनेन कदा चिद् दृष्टो न चास्य किं चिदप्यपायं पश्यति । स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति कूपोत्रास्तीति । सिद्धं तु यथास्वकालं समुच्चारणात् * । सिद्धमेतत् । कथम् । यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्तइति । कथं पुनर्ज्ञायते यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्तइति । अवात्वात्* । यत्र वा भाष्यन्ते । असिद्धविपर्यासश्च * । असिद्धश्च विपर्यासः । न हीह कश्चित्कूपोस्तीति प्रयोक्तव्ये कूपोऽभूदिति प्रयुङ्क्ते । किं पुनः कारणं न वा भाष्यन्ते असिद्धश्च विपर्यासः । इह हि किं चिदिन्द्रियकर्म किं चिद् बुद्धिकर्म । इन्द्रियकर्म समासादनं बुद्धिकर्म व्यवसायः । एवं हि कश्चित्पाटलिपुत्रं जिगमिषुराह । योयमध्वा गन्तव्यः आपाटलिपुत्रादेतस्मिन् कूपो भविष्यति । अनद्यतने कूपो भवितेति । समासाद्य कूपोस्तीति समासाद्यातिक्रम्य कूपोभूदिति । समासाद्यातिक्रम्योषित्वा कूप आसीदिति । समासाद्यातिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति । तद्यदेन्द्रियकर्म तदैता विभक्तयः । यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यति ॥

———————

हेतुभूतस्य हेतुत्वं प्राप्तस्य मेघादेर्यः काल स एव वर्षस्य । वर्षस्य च यः कालः स एव निष्पत्तिक्रियाया इत्यर्थः । जननादीनीति । जननमभिव्यक्तिः । एतदुक्तं भवति । विद्यमानोप्यर्थोऽनभिव्यक्तोऽर्थक्रियां न करोति । न चैतावता तस्यासत्त्वम् । कारणसामग्र्या कार्योत्पादानुमानात् । स्थूलेन तु रूपेणाभिव्यक्तोऽर्थक्रियां संपादयति । अस्त्यर्थानामिति । सत्तावाचिनामित्यर्थः । भवन्तीशब्दो लटः पूर्वाचार्यसंज्ञा । कर्तुर्विद्यमानत्वादिति । ततश्च सत्ताया वर्तमानत्वं न तु भूतभविष्यद्रूपत्वमित्यर्थः । अवात्वादिति । अविकल्पितत्वादित्यर्थः । एतदेवाह यत्र वा भाष्यन्तइति । एतदुक्तं भवति । यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन् । कूपो भूदिति प्रयोक्तव्ये कूपोभविष्यतीत्यपि प्रयुज्येत । तदेव दर्शयति असिद्धविपर्यासश्चेति । इह किं चिदिति । इन्द्रियव्यापारकालस्य कूपसत्त्वं प्रति भेदकत्वेनाश्रयणात् तस्यापि तत्कालत्वमित्यर्थः । तदुक्तं हरिणा । सत्तामिन्द्रियसंबन्धात्सैव सत्ता विशिष्यते । भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते । यः समासादनाद्भेदः स तत्र न विवक्षित इति ॥ १३३ ॥

**नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः** ॥ १३५ ॥ किमर्थमिमौ द्वौ प्रतिषेधावुच्येते । न अद्यतनवदिसेवोच्येत । नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्राति-षेधः * । नानद्यतनवत् प्रतिषेधे लङ्लुटोः प्रतिषेधो द्रष्टव्यः । अद्यतनवद्वचने हि विधानम् * । अद्यतनवद्वचने हि सति विधानमिदं विज्ञायेत तत्र को दोषः। तत्र लड्विधिप्रसङ्गः * । तत्र लड्विधिः प्रसज्येत । लुङ्लृटोश्चायथाकालम् *। लुङ्लृटोश्चायथाकालं प्रयोगः प्रसज्येत । लुङोऽपि विषये लृट् स्यात् । लृटश्च विषये लुङ् यथा स्यात् । अद्य पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते । यथा प्राप्तमेवाद्यतने भविष्यति । नानद्यतन ॥

**भविष्यति मर्यादावचनेऽवरस्मिन्** ॥ १३६ ॥ किमर्थमिदमुच्यते, न नानद्यतनवदिसेव सिद्धम् । भविष्यतिमर्यादावचने दरास्मन्निस्क्रियाप्रबन्धा-र्थम् * । अक्रियाप्रबन्धार्थोऽयमारम्भः । किमुच्यते अक्रियाप्रबन्धार्थइति न पुनः क्रियाप्रबन्धार्थोऽपि स्यात् । क्रियाप्रबन्धार्थमिति चेद् वचनानर्थक्यम् * । क्रि-याप्रबन्धार्थमिति चेद् वचनमनर्थकं भवति । सिद्धं क्रियाप्रबन्धे पूर्वेणैव । इदं तर्हि प्रयोजनम् । अनहोरात्राणामिति वक्ष्यामि इति । इह मा भूद् योयं त्रिंशद्रात्र आगामी तस्य योऽवरः पञ्चदशरात्र इति । अहोरात्रप्रतिषेधार्थमिति चेन्नानिष्टत्वा-त् * । अहोरात्रप्रतिषेधार्थमिति चेत्तन्न । किं कारणम् । अनिष्टत्वात् । अत्रापि नानद्यतनवदिसेवेष्यते इदं तर्हि प्रयोजनं भविष्यतीति वक्ष्यामीति । इह मा भूत् योयमध्वा गत आपाटलिपुत्रात्तस्य यदवरं साकेतादिति । नानिष्टत्वात् । अत्रापि नानद्यतनवदिसेवेष्यते । इदं तर्हि प्रयोजनं मर्यादावचन इति वक्ष्यामीति । इह मा भूत् । योयमध्वा अपरिमाणो गन्तव्यः तस्य यदवरं साकेतादिति । नानि-ष्टत्वात् । अत्रापि नानद्यतनवदिसेवेष्यते । इदं तर्हि प्रयोजनम् । अवरस्मिन्निति

---

नानद्यतन ॥ तत्र लड्विधिप्रसङ्ग इति । अपूर्वविधाने ऽद्यतने लटो दृष्टत्वाद्भूतभ-विष्यदनद्यतने प्रसङ्गः । लुङ्लृटोश्चेति । ननु वत्करणात्सादृश्यार्थात्संकरो न भवि-ष्यति । नैतदस्ति । अप्राप्तप्रापणार्थत्वादतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्-लृटोर्विधाने दृष्टत्वमात्रेणायथाकालमपि प्रसङ्ग उच्यते । वत्करणं तु तदा विस्पष्टा-र्थमेव स्यात् । प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधा-र्थम् । अन्यथा वत्करणमनर्थकं स्याद् नानद्यतइत्येव ब्रूयात् तेन परोक्षे लिट् हशश्व-वतोर्लङ् च लट् स्मे पुरि लुङ् चास्मे इत्येतत्सूत्रविहिता अपि प्रत्ययाः प्रतिषिध्यन्ते॥

भविष्यतिम ॥ अक्रियाप्रबन्धार्थमिति । एतच्च उपलक्षणं तेन असामीप्यार्थं चेति द्रष्टव्यम् । वचनसामर्थ्याच्च क्रियाप्रबन्धसामीप्ययोरिति निवृत्तम् । अनहोरात्राणा-

वक्ष्यामीति । इह मा भूत् । योयमध्वा आपाटलिपुत्राद् गन्तव्यस्तस्य यत्परं साकेतादिति । नानिष्टत्वात् । अत्रापि नानद्यतनवदिष्यते । तस्मात्सुष्ठूच्यते भविष्यति मर्यादावचनेवरस्मिन्नित्यक्रियाप्रबन्धार्थम् । क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यमिति ॥

**कालविभागे चानहोरात्राणाम्** ॥ १३७ ॥ अनहोरात्राणामिति तद्विभागप्रतिषेधः * । अनहोरात्राणामिति चेत्तद्विभागे प्रतिषेधो वक्तव्यः । योयं त्रिंशद्रात्र आगामी तस्य योवरोर्धमास इति । तैश्च विभागे * । तैश्च विभागे प्रतिषेधो वक्तव्यः । योयं मास आगामी तस्य योवरः पञ्चदशरात्रः । तद् द्वेष्यं विजानीयात् । अहोरात्राणामेवाहोरात्रैर्विभागे प्रतिषेधो भवतीति । तदाचार्यः सुहृद् भूत्वान्वाचष्टे अनहोरात्राणामिति तेषां विभागे तैश्च विभाग इति ॥

**परस्मिन् विभाषा** ॥ १३८ ॥ कस्मिन् परस्मिन् । कालविभागे । कुत एतत् योगविभागकरणसामर्थ्यात् ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ॥ १४९ ॥ साधनातिपत्तावपि वक्तव्यम् । इहापि यथा स्यात् । अभोक्ष्यत भवान् मांसेन यदि मत्समीप आसिष्यतेति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । नान्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति । साधनातिपत्तिश्चेत् क्रियातिपत्तिरपि भवति । तत्र क्रियातिपत्तावित्येव सिद्धम् । लिङ्निमित्ते ॥

**भूते च** ॥ १५० ॥ भूते लृङुताप्यादिषु * । भूते लृङ् उताप्यादिषु द्र-

---

मिति । उत्तरसूत्रस्य प्रयोजनमेतत् स्यादिति भावः । अनिष्टत्वादिति । क्रियाप्रबन्धसामीप्ययोरहोरात्रविभागेप्यनद्यतने प्रतिषेध इत्यर्थः । मर्यादावचन इति । नियमार्थमेतत् स्यान्मर्यादावचन एवेति भावः । अत्रापीति । विधिनियमसंभवे विधेर्ज्यायस्त्वात् ॥

कालविभा ॥ तद्विभाग इति । अनहोरात्राणामिति संबन्धसामान्ये षष्ठी न कर्मणि नापि कर्तरि । तेन यदाहोरात्राणामन्येन कालेन विभागोन्यस्य वा अहोरात्रैरहोरात्राणां वाऽहोरात्रैः सर्वथा प्रतिषेध इत्यर्थः ॥ १३७ ॥

परस्मिन् ॥ योगविभागकरणसामर्थ्यादिति । इह भविष्यति मर्यादावचनेवरस्मिन्ननहोरात्राणामित्येकयोगे कर्तव्ये पृथग्योगकरणं परस्मिन्विभाषेत्यत्र कालविभागग्रहणसंबन्धार्थमेवेत्यर्थः ॥ १३८ ॥

लिङ्निमि ॥ साधनातिपत्ताविति । साधनं मांसादि तस्यातिपत्तौ क्रियानिष्पत्तावपि लृङ् भवतीति भावः । अभोक्ष्यतेति । मांसस्तत्रानिष्पत्तिः । भोजनक्रियायास्तु निष्पत्तिरेव । साधनातिपत्तिश्चेदिति । करणभेदाद्भिन्नैव भोजनक्रिया तेन मांसातिपत्तौ मांसभोजनक्रियातिपत्तिरेवेत्यर्थः ॥ १४९ ॥

भूते च ॥ भूते इति वक्ष्यमाणसूत्रार्थपर्यालोचनलभ्यं चैतत् । उताप्योरित्यारभ्य यल्लिङ्निमित्तं तत्र भूते क्रियातिपत्तौ अनेन लृङ्प्रत्ययः प्राक् ततो विकल्प इत्यर्थः ॥ १४० ॥

घृण्यः । उताध्यैष्यत । अप्यध्यैष्यत ॥

वोताप्योः ॥ १४१ ॥ विभाषा गर्हाप्रभृतौ प्रागुतापिभ्याम् * । विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति वक्तव्यम् । वोताप्योरिति ह्युच्यमाने सन्देहः स्यात् । प्राग्वोतापिभ्यां सह वेति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे । विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति ॥

गर्हायां लडपिजात्वोः ॥ १४२ ॥ गर्हायां लड्विधानमानर्थक्यं क्रियाऽसमाप्तेर्विवक्षितत्वात् * गर्हायां लड्विधानमनर्थकम् । किं कारणम् । क्रियाया असमाप्तेर्विवक्षितत्वात् क्रियाया अत्रासमाप्तिर्विवक्षिता । एष एव च नाम न्याय्यो वर्तमानः कालः यत्र क्रिया अपरिसमाप्ता भवति । तत्र वर्तमाने लडित्येव सिद्धम् । यदि वर्तमाने लडित्येवमत्र लड् भवति शतृशानचावपि तर्हि प्राप्नुतः । इष्येते च शतृशानचावपि मां याजयन्तं पश्य । अपि मां याजयमानं पश्य ॥

अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥ १४५ ॥ किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् * । किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणमनर्थकम् निवृत्तं किंवृत इति तस्मिन्निवृत्ते अविशेषेण किंवृत्ते चाकिंवृत्ते च भविष्यति । इदं तर्हि प्रयोजनम् । उपपदसंज्ञां वक्ष्यामीति । उपपदसंज्ञावचने किं प्रयोजनम् । उपपदमतिङिति समासो यथा स्यात् । अतिङिति प्रतिषेधः प्राप्नोति । यदा तर्हि लृटः सत्संज्ञो तदोपपदसंज्ञा भविष्यति । भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येते अविशेषविहितश्चायम् ॥

जातुयदोर्लिङ् ॥ १४७ ॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम् * । जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानं कर्तव्यम् । यदा भवद्विधः क्षत्रियं याजयेत् । यदि भवद्विधः क्षत्रियं याजयेत् । जातुयदोर्लि ॥

---

वोताप्योः ॥ विभाषेति । गर्हायां लडपि जात्वोरित्यनेन लड्विधानाल्लिङ्निमित्ताभावाद्विभाषा कथमि लिङ् चेत्यतः प्रभृति प्रागुताप्योः समर्थयोरित्यतः सूत्राद् यल्लिङ्निमित्तं तत्र लड्विकल्पः । मर्यादायां ह्यत्राङ् नाभिविधावित्यर्थः । गर्हाप्रभृताविति । गर्हादिविशिष्टे प्रकृत्यर्थं इत्यर्थः ॥ १४१ ॥

गर्हायाम ॥ इष्येते इति । तौ च सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लटो न प्राप्नुत इति दोषवानेव सूत्रारम्भ इत्यर्थः ॥ १४२ ॥

अनव ॥ इदं तर्हीति । अकिंवृत्तशब्देन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते तस्योपपदसंज्ञार्थमाकिंवृत्तग्रहणं तेन किंवृत्ताकिंवृत्तयोरुपपदसंज्ञा सिध्यतीति भावः । अतिङितिप्रतिषेध इति । न विद्यते तिङस्मिन् समासे सोतिङिति बहुव्रीहिसमासाश्रयणादिति भावः । उपपदसंज्ञेति । उपपदसंज्ञाकार्यं समास इत्यर्थः । भविष्यदधिकारविहितस्येति । लृटः सद्वेत्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येवं विहितस्य लृट् शेषे चेत्यस्य लट आनन्तर्याद्वा शतृशानचौ । अविशेषेति । कालमात्रे विधानादयं

शेषे लृडयदौ ॥ १५१ ॥ चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वात् *। चित्रीकरणे यदि प्रतिषेधोनर्थकः । किंकारणम् । अर्थान्यत्वात्, नहि यदावुपपदे चित्रीकरणं गम्यते किं तर्हि संभावनम् ॥

हेतुहेतुमतोर्लिङ् ॥ १५६ ॥ हेतुहेतुमतोर्लिङ् वा * । हेतुहेतुमतोर्लिङ्वेति वक्तव्यम् । दक्षिणेन चेद्यायाद् न शकटं पर्याभवेद् । दक्षिणेन चेद्यास्यति न शकटं पर्या भविष्यति । भविष्यदधिकारे च *। भविष्यदधिकारे इति वक्तव्यम् । इह मा भूत् । वर्षतीति धावति । हन्तीति पलायतइति । अथेदानीं शतृशानचावत्र कस्मान्न भवतः । देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

इच्छार्थेषु लिङ्लोटौ ॥१५७॥ इच्छार्थेषु लिङ्लोटौ कामप्रवेदने चेत् *। कामप्रवेदनं चेद्गम्यते इति वक्तव्यम् । इह मा भूत् । इच्छन् कटं करोतीति ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ १६१ ॥ विध्यधीष्टयोः को विशेषः । विधिर्नाम प्रेषणम् । अधीष्टं नाम सत्कारपूर्विका व्यापारणा । अथ निमन्त्रणामन्त्रणयोः को विशेषः । संनिहितेन निमन्त्रणं भवति । असंनिहितेनामन्त्रणम् । नैषोस्ति विशेषः । असंनिहितेनापि निमन्त्रणं भवति संनिहितेन चामन्त्रणम् । एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम् ।

---

लृट् यद्यपि भविष्यति भवति तथापि भविष्यदधिकारविहितो न भवतीति शतृशानचावस्य न भवतः ॥ १४५ ॥

शेषे लृ ॥ नहि यदावीति । आश्चर्यं यदि स भुञ्जीतेत्यत्र संभावनं तात्पर्येण प्रतीयतइति तन्निमित्त एव लिङ् भविष्यति । संभावनेलमिति चेदित्यनेनेत्यर्थः । संभावने हि यदिशब्दः प्रयुज्यते ॥ १५१ ॥

हेतु ॥ देवत्रात इति । व्यवस्थितविभाषाश्रयणादिति भावः । तेन देवत्रात इति संज्ञायां भवति न तु देवत्राण इति । गलशब्दः प्राण्यङ्गे भवति न तु गर इति । विषे तु गर इति न तु गल इति । जलचरे ग्राह एव ज्योतिषि ग्रह एव । इतिशब्दप्रयोगे च सत्संज्ञो न प्रवर्तते गवाक्षइति । वातायने नित्यमेवावङ् भवति । संशितव्रत इति व्रतविषये श्यतेर्नित्यमित्वं भवति । मिथ इति । परस्परेण देवत्राणादिभिरेकस्मिन् विषये न विकल्प्यन्तइत्यर्थः । एषु च नुदविदोन्दत्रेति वा नत्वमाचि विभाषेति लत्वं विभाषाग्रह इति णप्रत्ययः लक्षणहेत्वोः क्रियाया इति शतृशानचौ नन्वोर्विभाभाषेत्यतो विभाषानुवर्तनाद्विकल्पितौ । अवङ्स्फोटायनस्येति विभाषाऽवङ् शाच्छोरन्यतरस्यामित्येते विधयः ॥ १५६ ॥

विधिनिमन्त्रणा ॥ विध्यधीष्टयोरिति । उभयोरपि नियोगरूपत्वादिति प्रश्नः । प्रेषणमिति । भृत्यादेः कस्यांश्चित् क्रियायां नियोजनमित्यर्थः । अधीष्टं नामेति । गुर्वादेस्तु पूज्यस्य व्यापारणमधीष्टमित्यर्थः । प्रपञ्चार्थं न्यायव्युत्पादनार्थं वार्थभेदमाश्रित्य भेदेनोपादानं विधिनिमन्त्रणादीनां कृतम् । विधिरूपता हि सर्वत्रान्वयिनी विद्यते । संनि-

किं पुनस्तव । । हव्यं कव्यं च । ब्राह्मणेन सिद्धं भुज्यतामित्युक्ते । अधर्मः प्रत्याख्यातुः । आमन्त्रणे कामचारः । कथं पुनरिदं विज्ञायते निमन्त्रणादीनामर्थ इति । आहो स्विन्निमन्त्रणादिषु गम्यमानेष्विति । कश्चात्र विशेषः। निमन्त्रणादीनामर्थे चेदामन्त्र्यै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात् * । निमन्त्रणादीनामर्थे चेदामन्त्र्यै निमन्त्रयै भवन्तमिति प्रत्ययो नोपपद्यते । किं कारणम् । प्रकृत्यभिहितत्वात् । प्रकृत्याभिहितः सोर्थ इति कृत्वा प्रत्ययो न प्राप्नोति । द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् * । द्विवचनबहुवचनयोश्चाप्रसिद्धिः । किं कारणम् । एकार्थत्वात् । एकोयमर्थो निमन्त्रणं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति । अस्तु तर्हि निमन्त्रणादिषु गम्यमानेष्विति । इहापि तर्हि प्राप्नोति देवदत्तो भवन्तमामन्त्रयते देवदत्तो भवन्तं निमन्त्रयते इति । सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात् * । सिद्धमेतत् । कथम् । द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवतीति वक्तव्यम् । के पुनः प्रकृता अर्थाः । भावकर्मकर्तारः । एवमपि भवेत्सिद्धम् । प्राप्नोतु भवानामन्त्रणम् । अनुभवतु भवानामन्त्रणमिति यत्र द्वितीय आकाङ्क्षयते । इदं तु न सिद्ध्यति । निमन्त्रयै आमन्त्रयै इति । अत्रापि द्विती [illegible] आकाङ्क्षयते । कः निमन्त्रिरेवं । निमन्त्रये निमन्त्रणमामन्त्रयै

---

हितेनेति । धात्वर्थेनासनादिना । यथेह भवानासीतेति सन्निहितमासनं तदनु परमार्थं च निमन्त्र्यते । असन्निहितेति । यथेह भवान् भुञ्जीतेति भोजनमसन्निहितं तदर्थमामन्त्र्यते । यन्नियोगत इति । अवश्यकर्तव्यं नित्यं नैमित्तिकं च तन्निमन्त्रणमिति निमन्त्रणविषयत्वात्तदेव निमन्त्रणम् । अधर्म इति । यदान्यो ब्राह्मणो भोक्ता न लभ्यते तदा दौहित्रादिर्भोजयितव्यः तस्य च प्रत्याख्याने अधर्मः । स्मार्तः समाचारः । आमन्त्रण इति । काम्यकर्मणि कामनया प्रवृत्तिर्नान्यथा । कथमिति । किमिह विध्यादयः प्रत्ययस्याभिधेयत्वेन निर्दिष्टाः उत विषयभावेनेति प्रश्नः । निमन्त्रणादीनामिति । आदिशब्दस्य प्रकारार्थत्वाद्विधिरपि गृह्यते । प्रकृत्यभिहितत्वादिति । प्रकृत्या योगो नाभिधीयते तत्रैव प्रत्ययेन भाव्यं न तु प्रकृत्यभिहितेर्थे । उक्तार्थानामप्रयोग इति न्यायात् । विषयपक्षाश्रये तु प्रकृत्यभिहितेष्वपि विध्यादिषु तत्सत्तामात्राश्रयः प्रत्ययः सिध्यति । द्विवचनेति । नाप्राप्तेषु कर्त्रादिषु विध्यादयोर्था निर्दिश्यमानास्तेषां बाधकाः प्रसजन्तीति कर्त्रादिगतायाः संख्यायाः अभिधानं प्राप्नोतीति भावः । सिद्धं त्विति । द्वितीयं विध्यादिकमर्थं यदा धात्वर्थमाकाङ्क्षति तदा लिङ्प्रत्ययः यदा च धात्वर्थं संपाद्यते नियोज्यो नियुज्यते तदा द्वितीयाकाङ्क्षित वम् । इह तु देवदत्तो भवन्तमामन्त्रयत इति नास्ति धात्वर्थस्य द्वितीयाकाङ्क्षितत्वामिति लिङ् न भवति । प्राप्नोत्विति । धात्वर्थस्य प्राप्त्यादेर्भिन्नमामन्त्रणं प्रत्याकाङ्क्षा विद्यत इति भावः । आमन्त्रयै इति । आमन्त्रणस्य

आमन्त्रणमिति । कथं पुनर्निमन्त्रिर्नाम निमन्त्रणमाकाङ्क्षेत् । इष्टश्च भावेन भावयोगः । तद्यथा । इषिरिषिणा युज्यते स्त्रीत्वं च स्त्रीत्वेन । यावता चात्रापि द्वितीय आकाङ्क्ष्यते । अस्तु तर्हि निमन्त्रणादीनामर्थ इति । ननु चोक्तं निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वादिति । नैष दोषः । यो सौ द्वितीय आकाङ्क्ष्यते । स एव मम प्रत्ययार्थो भविष्यति । अयं तर्हि दोषः । द्विवचनबहुवचनाप्रसिद्धिरेकार्थत्वादिति । एषोप्यदोषः । सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम् ॥ सुपां संख्या चैवार्थः कर्मादयश्च । प्रसिद्धो नियमस्तत्र ॥ प्रसिद्धस्तत्र नियमः । नियमः प्रकृतेषु वा ॥ अथ वा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन् न बहुषु । बहुष्वेव बहुवचनं नैकस्मिन् न द्वयोरिति ॥

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ १६३ ॥ किमर्थं प्रैषादिष्वर्थेषु कृत्या विधीयन्ते न अविशेषेण विहिताः कृत्यास्ते प्रैषादिषु भविष्यन्ति अन्यत्र च प्रैषादिषु कृत्यानां वचनं नियमार्थम् । * । प्रैषादिषु कृत्यानां वचनं क्रियते । किं प्रयोजनम् । नियमार्थम् । नियमार्थोयमारम्भः । प्रैषादिष्वेव कृत्या यथा स्युरिति । प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत् तदनिष्टम् * प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति । न हि

---

धात्वर्थत्वात्तस्य चैकत्वाद् भेदपूर्विकाया आकाङ्क्षाया आमन्त्रणं प्रत्यभाव इति भावः । निमन्त्रयै निमन्त्रणमिति । प्रकृतिवाच्यं निमन्त्रणं विशिष्टकर्मकमन्यत् तद्विषयं त्ववश्यकर्तव्यतालक्षणं निमन्त्रणमन्यदिति भिन्नत्वादस्त्येव द्वितीयाकाङ्क्षितत्वम् । तदयमर्थः । त्वत्कर्मकं भोजनादिषु निमन्त्रणं ममानुष्ठेयम् । ततो भोजनादिषु त्वां निमन्त्रयै इति । अत्र चामन्त्रयै आमन्त्रणं निमन्त्रयै निमन्त्रणमिति । प्रकृत्यर्थव्यतिरिक्तामन्त्रणसद्भावप्रदर्शनायामन्त्रणनिमन्त्रणशब्दौ प्रयुक्तौ नन्वयं लौकिकः प्रयोगः लोटैव प्रकृत्यर्थव्यतिरिक्तस्यामन्त्रणादेर्गमितत्वात् । तदयमर्थः । आमन्त्रयै आमन्त्रणमिति आमन्त्रयै इत्यत्र लोटि प्रयुज्यमाने आमन्त्रणं धात्वर्थविषयमाकाङ्क्ष्यमाणमस्ति । इषिरिति । एषितुमिच्छति इति कालसाधने भेदादिच्छयोर्भेदाश्रयो योगः । स्त्रीत्वमिति । कुमारीत्यादौ स्त्रीत्वं द्रव्यस्य विशेषणं यदा तु तदेव प्राधान्येनाश्रियते तदा तस्य स्त्रीत्वादिना योगः स्त्रीत्वं स्त्रीतेति । स एव ममेति । निमन्त्रयै भवन्तमित्यवश्यकर्तव्यं भवतो भोजनादिषु मया निमन्त्रणमिति निमन्त्रणस्यावश्यकर्तव्यतालक्षणं निमन्त्रणमिति प्रकृतिप्रत्ययार्थयोर्भेद इत्यर्थः । सुपामिति । विध्यादिभिर्विरोधाभावाल्लः कर्मणि चेत्यत्र बहुवचननिर्देशात्सर्वलकारसंग्रहार्थाद्वा उभयानुग्रहाच्च कर्त्रादयो न बाध्यन्तइति कर्तृकर्मगतद्वित्वबहुत्वनिबन्धनानि द्विवचनबहुवचनानि भवन्तीत्यर्थः ॥

प्रैषाति॥बुसोपेन्ध्यमिति । अग्निस्तोकं बुसेन ज्वलनीयमिति वस्तुस्वरूपकथनं न तु

प्रैषादिष्वर्थेष्वेव कृत्या इष्यन्ते । किं तर्हि । अविशेषेण । बुसोपेन्ध्यं तृणोपेन्ध्यम् । घनघात्यम् । विध्यर्थं तु स्त्रियाः प्रागिति वचनात् * । विध्यर्थं तु प्रैषादिषु कृत्यानां वचनम् । अयं प्रैषादिष्वर्थेषु लड्विधीयते स विशेषविहितः सामान्यविहितान् कृत्यान् बाधेत । वासरूपेण कृत्या अपि भविष्यन्ति । न स्युः। किं कारणम् । स्त्रियाः प्रागिति वचनात् । प्राक् स्त्रियां वासरूपः ॥

कालसमयवेलासु तुमुन् ॥ १६७ ॥ प्रथमान्तेष्विति वक्तव्यम् । किं प्रयोजनम् । इह मा भूत् । काले भुङ्क्ते । तर्हि वक्तव्यम् । न वक्तव्यम् । प्रैषादिष्विति वर्तते । तच्चावश्यं प्रैषादिग्रहणमनुवर्त्यम् । प्रथमान्तेष्विति ह्युच्यमाने इहापि प्रसज्येत कालः पचति भूतानि कालः संहरति प्रजा इति ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

धातुसंबन्धेन प्रत्ययाः ॥ १ ॥ प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किमर्थम् । अधातुप्रत्ययानामपि धातुसंबन्धे साधुत्वं यथा स्यात् । गोमानासीत् । गोमान् भवितेति । इह पश्यामः भूतकालो भविष्यत्कालेनाभिसंबध्यमानो भविष्यत्कालः संपद्यते । कस्मान्न भविष्यत्कालो भूतकालेनाभिसंबध्यमानो भूतकालः संपद्यते धातुसंबन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम् * । धातुसंबन्ध

---

प्रैषादिप्रतिपत्तिः । घनघात्यमिति । घनेन लोहादिना घात्यमिति कठिनत्वादित्यर्थः १६३॥ इति श्रीमन्महामहोपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्य अध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

धातुसंबन्धे प्रत्ययाः ॥ संबन्धस्य अनेकाधिष्ठानत्वात्सामर्थ्याद् वृत्तावपि संख्याविशेषो द्वित्वमवगम्यते । धात्वोः संबन्धो धातुसंबन्धः । धात्वर्थश्चात्रोपचाराद्धातुशब्देनोच्यते । न हि स्वार्थे गुणीभूतयोर्धात्वोः परस्परेण संबन्ध उपपद्यते धात्वर्थयोस्तु विशेषणविशेष्यभावलक्षणसंबन्धोपपत्तिः । तत्र धातुसंबन्धे कालान्तरावहितानां प्रत्ययानामन्यस्मिन् काले साधुत्वाभ्यनुज्ञानार्थमिदं सूत्रम् । प्रत्यय इति वर्तमान इति । यद्यपि स्वरूपपदार्थकः प्रत्ययशब्दः प्रकृतः तथापीह संज्ञिनिर्देशाभावात्संज्ञिपदार्थको विज्ञास्यतइति भावः । अधातुप्रत्ययानामपीति । अन्यथा प्रकृतानामेव धातुप्रत्ययानां ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वप्रत्ययपरिग्रहार्थात्तद्धितानामपि कालभेदे साधुत्वं भवति । गोमानासीदिति । तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्ते ऽर्थे विहितः । धातुसंबन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वे ऽपि साधुर्भवति । इह पश्याम इति । अग्निष्टोमयाज्यस्य पुत्रो जनितेति कालभेदे साधुत्वाभ्यनुज्ञानाय सूत्रम् । तत्र विशेषानुपादानाद्यथा भूतकालपरित्यागेन जनितृत्वेतत्संबन्धाद् णिनिर्भविष्यति काले भवति तथा जनितेति लुट्प्रत्ययो भविष्यत्कालत्यागेनाग्निष्टोमयाजीत्येतत्संबन्धाद् भूते कस्मान्न भवतीति प्रश्नः । यथाकालविधानादिति । सूत्रप्रत्याख्यानेन

यथाकालविहिता एवैते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते । कथं तर्हि कालान्यत्वं गम्यते । उपपदस्य तु कालान्यत्वम् * । उपपदस्यैतत्कालान्यत्वम् । कुतो नु खल्वेतत् । अग्निष्टोमयाजीत्येतदुपपदं भवति न पुनर्जनितेति । एवं तर्ह्यस्त्यादिभिर्योगे । अस्त्यादिविषयाः प्रत्ययाः साधव इति वक्ष्यामि । के पुनरस्त्यादयः । अस्तिभूजनयः । एवमपि यदास्त्यादीनामेवास्त्यादिभिर्योगस्तदा न ज्ञायते कः कस्य कालमनुवर्तते इति । भाविकृत्यमासीत् । पुत्रो जनिष्यमाण आसीत् । एवं तर्हि वाक्यमेवैतदेवंविषयं प्रयुज्यते । अग्निष्टोमयाजीत्येतत्तस्मिन् भविता । कस्मिन् योऽस्य पुत्रो जनिता । कदा । यदानेनाग्निष्टोमेनेष्टं भवति ॥

**क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ २ ॥** हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् * । हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् । हिः परस्मैपदानां यथा स्यात्स्व आत्मनेपदानामिति । किं प्रयोजनम् । लादेशप्रतिषेधार्थम् । लादेशौ हिस्वौ मा भूतामिति । किं च स्यात् । यदि लादेशौ हिस्वौ स्यातां तिङन्तं पदमिति पदसंज्ञा न स्यात् । मा भूदेवम् । सुबन्तं पदमिति पदसंज्ञा भविष्यति कथं स्वाद्युत्पत्तिः । लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् * । लकारः कृत् तस्य कृत्त्वात् कृत्प्रातिपदि-

---

उत्तरम् । अग्निष्टोमयाजीति भूत एव णिनिर्विधीयते । जनितेत्येतत्संबन्धात्तु भाविव्यपदेशप्रतिपत्तिर्यथास्य सूत्रस्य शाटकं वयेतीत्यर्थः । इतरोऽगृहीताभिप्राय आह कथं तर्हीति । पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टेति तत्र यदि भूते णिनिर्विधीयते तदा यागस्य भविष्यत्त्वावगमो न प्राप्नोतीति प्रश्नः । उपपदस्येति । भाविव्यपदेशाविज्ञानाद्विशेषणस्य कालान्यत्वं वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रतीयतइत्यर्थः । विशेष्याया आख्यातादिपदवाच्यायाः क्रियायाः प्राधान्यात् स्वकाल एवावस्थानं विशेषणभूतायास्तु क्रियाया उपलक्षणभावेनोपादानाद्भाविभूतव्यपदेशविषयताप्रतिपादनात्कालान्यत्वावगम इत्यर्थः । इतरो यथोक्तमभिप्रायमबुध्वा समीपे श्रूयमाणमुपपदमित्यवगम्य चोदयति कुत इति । ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययमपि वाक्यार्थः कस्मान्न भवतीति प्रश्नः । आचार्यदेशीय आह एवं तर्हीति । धात्वधिकाराद्धातुग्रहणे सिद्धे धातुसंबन्ध इति पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं तेनास्ति भूजनिसंबन्ध एव प्रत्ययानां कालान्तरे साधुत्वमन्वाख्यायतइति सूत्रारम्भे सति विपर्ययो न भवतीत्यर्थः । अस्त्यादिविषया इति । अस्त्यादिविशेषणाय प्रयुक्ता इत्यर्थः । आचार्यः पूर्वोक्तेनाभिप्रायेण सूत्रप्रत्याख्यानेनैव वाक्यार्थं स्थापयति एवं तर्हीति । अवश्यं च स्वकाल एव प्रत्ययविधिरेष्टव्यः । भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद् युगपत्प्रयोगो न स्यात् ॥ १ ॥

क्रियासम ॥ हिस्वयोरिति । सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाधः प्राप्नोतीति स्थानिनिर्देशार्थं परस्मैपदात्मनेपदग्रहणं कर्तव्यमित्यर्थः । लकारः कृदिति । तत्र स्थानिवद्भावाद् हिस्वयोरपि कृत्त्वात्तदन्तस्य प्रातिपदिकत्वात्

कमिति प्रातिपदिकसंज्ञा यदाश्रया प्रातिपदिकाश्रया स्वाद्युत्पत्तिरपि भविष्यति। यदि स्वाद्युत्पत्तिः सुपां श्रवणं प्राप्नोति। अव्ययादिति सुब्लुक् भविष्यति। कथमव्ययत्वम्। विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा निपातोऽव्ययमिति अव्ययसंज्ञा। इह तर्हि स भवान् लुनीहि लुनीहीत्येवायं लुनाति तिङ्ङतिङ इति निपातो न प्राप्नोति। समसंख्यार्थं च *। समसंख्यार्थं च हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्। हिः परस्मैपदानां यथा स्यात्। स्व आत्मनेपदानाम्। व्यतिकरो मा भूदिति। न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य *। न वा हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्। किं कारणम्। तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य। यदयं वा च तध्वमोरित्याह तज्ज्ञापयत्याचार्यः पदादेशौ हिस्वाविति। तत्र पदादेशे पित्त्वाटोः प्रतिषेधः *। तत्र पदादेशे पित्त्वस्याटश्च प्रतिषेधो वक्तव्यः। पित्त्वस्य तावत्स भवान् लुनीहि लुनीहीत्येवायं लुनाति। आटः खल्वपि। सोहं लुनीहि लुनीहीत्येवं लुनामि। पित्त्वस्य तावन्न वक्तव्यः। पित्त्वप्रतिषेधे योगविभागः करिष्यते। इह सोहंभवति। ततः अपिच्च। अपिच्च भवति यावान् हिर्नामेति। आटश्चापि प्रतिषेधो न वक्तव्यः। आटि कृते साट्कस्यादेशो भविष्यति। इदमिह संप्रधार्यम्। आट् क्रियतामादेश इति। किमत्र कर्तव्यम्। परत्वादाडागमः। नित्य आदेशः। कृतेप्याटि प्राप्नोत्यकृतेपि प्राप्नोति। आडपि नित्यः। कृतेप्यादेशे प्राप्नोत्यकृतेपि। अनित्य आट्। अन्यस्य कृतेप्यादेशे प्राप्नोत्यन्यस्याकृतेतेपि प्राप्नोति शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। आदेशोप्यनित्यः। अन्यस्य कृते आटि प्राप्नोति अन्यस्याकृते प्राप्नोति। शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादाडागमः। आटि कृते साट्कस्यादेशो भविष्यति। इदं तर्हि भुङ्क्ष्व भुङ्क्ष्वइ-

---

स्वाद्युत्पत्तिर्भवतीत्यर्थः। विभक्तीति। विभक्तिसंज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोर व्ययत्वमित्यर्थः। व्यतिकरो मा भूदिति। यदि लकारस्यैव स्थाने हिस्वौ विधीयेयातां तदा लः परस्मैपदमिति द्वयोरपि परस्मैपदसंज्ञा स्यात् ततश्च द्वावपि परस्मैपदिभ्य एव स्यातामित्ययं व्यतिकरः स्यादित्यर्थः। न वेति। यदि लस्यैव हिस्वौ स्यातां तदा तध्वमोर्लोट्स्थानिकयोरभावाद्वा च तध्वमोरिति स्थानित्वेनोपादानमनुपपन्नं स्यादिति तध्वमोः स्थानित्वेनोपादानाल्लोट्शब्देन लोडादेशानां परस्मैपदात्मनेपदानां स्थानित्वमवसीयत इत्यर्थः। पदादेशस्येति। पद शब्देन पदसंज्ञानिमित्तानि तिङ उच्यन्ते। अथ वा सर्वे सर्वपदादेशा इति न्यायात्तिङन्तस्य हिस्वान्तादेशप्रवृत्तिः। पित्त्वस्येति। तिपिमिपां स्थाने विधीयमानो हिः स्थानिवद्भावात्पित्स्यात् ततश्च ङित्वाभावाल्लुनीहीत्येवं न स्यात्। अनुदात्तत्वं च हेः प्रसज्येत लुनीहिलुनीहि स भवानित्यादौ परस्य लुनीहिशब्दस्य तस्य परमाम्रेडितमनुदात्तत्वं भवति। यावानिति। योगविभा-

स्येवं भुनजै इति । अस्तोरल्लोप इसकारलोपो न प्राप्नोति । समसंख्यार्थत्वं चाप्यपरिहृतमेव । सिद्धं तु लोड्मध्यमपुरुषस्यैकवचनस्य क्रियासमभिहारे द्विर्वचनात् * । सिद्धमेतत् । कथम् । लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इति वक्तव्यम् । केन विहितस्य क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते । एतदेव ज्ञापयत्याचार्यो भवति क्रियासमभिहारे लोडिति । यदयं क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति । कुतो नु खल्वेतत् । ज्ञापकादत्र लोड् भविष्यति । न पुनर्य एवासावविशेषविहितः स यदा क्रियासमभिहारे भवति तदा तस्य द्विर्वचनं भवतीति । लोण्मध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यात् इमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्यते । सूत्रं च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थं समसंख्यार्थं चेति । नैष दोषः । योगविभागात्सिद्धम् * । योगविभागः करिष्यते । क्रियासमभिहारे लोड् भवति ततो लोटो हिस्वौ भवतः लोडित्येवानुवर्तते लोटौ यौ हिस्वाविति । कथं वा च तध्वमोरिति । वा च तध्वंभाविनो लोट इत्येवमेतद् विज्ञायते ॥

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥** किमर्थमिदमुच्यते । अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । हिस्वान्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो भविष्यति । इदं तर्हि प्रयोजनं यथाविधीति वक्ष्यामीति । एतदपि नास्ति प्रयोजनं समुच्चये सामान्यवचनस्येति वक्ष्यति । बत्रान्तरेण व-

---

गकरणसामर्थ्यादानन्तर्यामपेक्ष्यत इत्यर्थः । भुङ्क्ष्वभुङ्क्ष्वेति । परत्वादाटि कृते उत्तमस्य पित्त्वे स्वादेशः स्थानिवद्भावात्पित्स्यादिति ङित्वाभावाल्लोपाप्रसङ्गः । समसंख्यार्थत्वमिति । सर्वेषां तिङां द्वावपि पर्यायेण स्यातामित्यर्थः । एतदेवेति । वृद्धकुमारी वर इत्यनेन न्यायेन क्रियासमभिहारविषयो लोडनुमीयत इत्यर्थः । कुतो न्विति । ज्ञापकं विघटयति । विध्यादिविषयस्य लोटो विद्यमानत्वात् क्रियासमभिहारविषयस्य तस्यैवादेशयोर्द्विवचनार्थं ग्रहणं स्यादित्यर्थः । सर्वेषामिति । प्रसङ्ग इति शेषः । लोटौ याविति । लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यत्वेनेन हिस्वौ भवत इत्यर्थः । तेन तदीयकार्यातिदेशात्परस्मैपदात्मनेपदसंज्ञे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हिरात्मनेपदिभ्यस्तु स्वो भवति । हिशब्दस्य कर्ता वाच्यः स्वशब्दस्य भावकर्मकर्तारः । तिङ्त्वं च भवतीति तिङ्ङतिङ इत्यादिकार्यं भवति । पुरुषैकवचनसंज्ञे तु सामर्थ्यान्न भवतः । यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्याद् वचनान्तरेण तयोः सिद्धत्वात् । तध्वंभाविन इति । मुख्यार्थासंभवे गौणी कल्पनाश्रीयते ततश्च तध्वंभावित्वाल्लोडेव तध्वंशब्दाभ्यामुच्यत इति भावः ॥ २ ॥

यथावि ॥ हिस्वान्तमिति । संख्याकालपुरुषाणामनभिव्यक्तत्वात् । एतदपीति । समुच्चय एव धात्वन्तरस्यानुप्रयोग इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो

चनं यथाविध्यनुप्रयोगो भविष्यति ॥

**समुच्चये सामान्यवचनस्य** ॥ ५ ॥ किमर्थमिदमुच्यते। अनुप्रयोगो यथा स्यात्। नैतदस्ति प्रयोजनम्। हिस्वान्तमनभिव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यति। इदं तर्हि प्रयोजनं सामान्यवचनस्येति वक्ष्यामीति। एतदपि नास्ति प्रयोजनम्। सामान्यवचनस्यानुप्रयोगोस्तु विशेषवचनस्येति। सामान्यवचनस्यैवानुप्रयोगो भविष्यति। लघुत्वात् ॥

**उपसंवादाशङ्कयोश्च** ॥ ८ ॥ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् *। उपसंवादाशङ्कयोर्वचनमनर्थकम्। किं कारणम्। लिङर्थत्वात्। लिङर्थे लेडिखेव सिद्धम्। कः पुनर्लिङर्थः। के चित्तावदाहुः। हेतुहेतुमतोर्लिङिति। अपर आहुः। वक्तव्य एवैतस्मिन् विशेषे लिङ्। प्रयुज्यते हि लोके यदि मे भवानिदं कुर्याद् अहमपि तइदं दद्यामीति ॥

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः** ॥ ९ ॥ तुमर्थे इत्युच्यते कस्तुमर्थो नाम। कर्ता तुमर्थः। यद्येवं नार्थस्तुमर्थग्रहणेन। येनैव खल्वपि हेतुना कर्तरि तुमुन् भवति तेनैव हेतुना सयादयोपि भविष्यन्ति। एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यः अस्त्यन्यः कर्तुस्तुमुनोर्थे इति। कः पुनरसौ भावः। कुतो नु खल्वेतद् भावे तुमुन् भविष्यति न पुनः कर्मादिषु स्यादिति। ज्ञापकात्तावदयं कर्तुरपकृष्यते न चान्यस्मिन्नर्थे आदिश्यते अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे भविष्यति। तद्यथा। गुप्तिज्किद्भ्यः सन् यावादिभ्यः कन् इति। सोसौ स्वार्थे

---

भविष्यति। ननु समुच्चये सामान्यवचनस्यैवेति नियमः स्यात् ततश्च धात्वन्तरस्यापि लोट्प्रकृतिसमानार्थस्य क्रियासमभिहारे ऽनुप्रयोगः स्यात्। नैतदस्ति। नह्येकस्या प्राकृतेश्चरितः प्रयोगो द्वितीयस्याश्च तृतीयस्याश्च भवतीति न्यायाल्लोट्प्रकृतिरेवानुप्रयोक्ष्यते। पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा यतस्तदर्थो योगः स्यात् ॥ ४ ॥

समुच्चये ॥ लघुत्वादिति। एतच्च लाघवं क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते न सर्वत्र अन्यथा तरुद्रुमादीनामेव प्रयोगः स्याद् न वनस्पत्यादिशब्दानाम् ५॥

उपसंवा ॥ उपसंवादेति। नित्यार्थमिदमिति चेच्छन्दसि नित्योत्र लेड् दृश्यतइत्यत्र प्रमाणाभावः। व्यवस्थितविभाषया वा नित्यं लेड् भविष्यति। हेतुहेतुमतोरिति। उपसंवादः कर्तव्ये पणबन्धः। यदि मे भवानिदं कुर्यात् अहमपि ते इदं दद्यामिति तत्र करणं हेतुर्दानं हेतुमत् आशङ्कापि कारणात्कार्योत्प्रेक्षेति हेतुहेतुमद्भावः। अपर इति। करणमवधिर्दानमवधिमदित्यवध्यवधिमद्भाव उपसंवादे प्रतीयते न तु हेतुहेतुमद्भावः। आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति भावः। लिङ्प्रयोगसिद्धये अवश्यवक्तव्यो लिङ् न तु सूत्रप्रत्याख्यानायैव ॥ ८ ॥

तुमर्थे सेसे ॥ कृतोन्विति। क्रियया कर्मादीनामाक्षेपात्तेष्वेव तुमुन् स्यादिति

भवन् भावे भविष्यति । किमेतस्य ज्ञापने प्रयोजनम् । अव्ययकृतो भावे भवन्तीति एतन्न वक्तव्यं भवति ॥

उदीचां माङो व्यतीहारे ॥ १९ ॥ किमर्थं मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं क्रियते । न उदीचां मेङ इत्येवोच्येत । तत्रायमप्यर्थः । उदीचां मेङ इति व्यतीहारग्रहणं न कर्तव्यं भवति । किं कारणम् । तद्विषयो हि सः व्यतीहारविषय एव मयतिः । एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति तज्ज्ञापयत्याचार्यः नानुबन्धकृतमनेजन्तत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारान्तत्वादित्युक्तं तन्न वक्तव्यं भवति । किमर्थं पुनरिदमुच्यते न समानकर्तृकयोः पूर्वकालइत्येव सिद्धम् । अपूर्वकालार्थोऽयमारम्भः । पूर्वं ह्यसौ याचते पश्चादपमयते । उदीचां माङो व्यतीहारे ॥

समानकर्तृकयोः पूर्वकाले ॥ २१ ॥ इह कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद् व्रजतीति । स्वशब्देनोक्तत्वान्न भवति । न तर्हीदानीमिदं भवति । पूर्वं भुक्त्वा ततो व्रजतीति । नैतत् क्रियापौर्वकाल्यम् । किं तर्हि । कर्तृपौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्त्वान्येभ्यो भोक्तृभ्यः ततः पश्चाद् व्रजति अन्येभ्यो व्रजितृभ्यः । इह कस्मान्न भवति । आस्यते भोक्तुमिति । कुतः कस्मान्न भवति । किमासेः आहो स्विद् भुजेः । भुजेः कस्मान्न भवति, अपूर्वकालत्वात् । आसेस्तर्हि कस्मान्न भवति । यस्मादत्र लङ् भवति । एतदत्र प्रष्टव्यं लडत्र कथं भवतीति । लट् चात्र वासरूपेण भविष्यति । समानकर्तृकयोरिति बहुष्वप्राप्तिः * । समान-

---

भावः। न वक्तव्यमिति । तुमर्थग्रहणानुवृत्त्या क्त्वादीनां भावे सिद्धत्वात्साध्यमानरूपश्च भावः क्त्वादीनामर्थः । स एव च धात्वर्थः। घञादीनान्तु धात्वर्थव्यतिरिक्तः सिद्धरूपो वाच्यः ॥ ६ ॥

उदीचाम् ॥ नानुबन्धकृतमिति । एतच्च ज्ञापनमनुबन्धानामेकान्तत्वे उपयुज्यते । अनेकान्तत्वे स्वत एव एजन्तत्वाज् ज्ञापनप्रयोजनाभावः । पृथक्त्वनिर्देशोऽनाकारान्तत्वादित्येतद् दाप् प्रतिषेधग्रहणेनैव संबध्यते । दाधाघ्वदाबित्यत्र दैपोपि पृथक् प्रतिषेधो वक्तव्यः अनाकारान्तत्वाद्घुरूपत्वाभावादित्यर्थः । अपमयत इति । वस्त्रादिकं परिवर्तयतीत्यर्थः ॥ १९ ॥

समान ॥ समानशब्द एकवाची शक्तिशक्तिमतोश्चाभेदविवक्षया क्रिययोरेककर्तृकत्वम् । स्वशब्देनेति । पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषयइति भावः । पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न भवति । अग्रादीनां साधनपौर्वकाल्यविषयाणां तत्र ग्रहणात् । नैतदिति । द्विविधात्र भुजेः पूर्वकालता व्रजिक्रियापेक्षा तस्यां क्त्वाप्रत्ययो भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च तां पूर्वशब्द उपादत्ते । ततश्चाग्रादिसूत्रेणात्र क्त्वाणमुलौ भवत इति भावः । कर्तृपौर्वकाल्यं च क्रियाद्वारकमेव बोद्धव्यम् । क्रियाविषयत्वात् कालव्यवहारस्य । आस्यत इति । आसेः पूर्वका-

कर्तृकयोरिति बहुषु क्त्वा न प्राप्नोति । स्नात्वा भुक्त्वा पीत्वा व्रजतीति । किं पुनः कारणं न सिध्यति । द्विवचननिर्देशात् । द्विवचनेनायं निर्देशः क्रियते । तेन द्वयोरेव पौर्वकाल्ये स्याद् बहूनां न स्यात् । सिद्धं तु क्रियाप्रधानत्वात् * । सिद्धमेतत् । कथम् । क्रियाप्रधानत्वात् । क्रियाप्रधानोयं निर्देशः । नात्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव निर्देशः क्रियते तच्चातन्त्रं स्यात् । तत्कारी च भवान् तद्द्वेषी च । नान्तरीयकत्वादत्र द्विवचनेन निर्देशः क्रियते । अवश्यं कया चिद्विभक्त्या केन चिद्वचनेन निर्देशः कर्तव्यः । तद्यथा । कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात्स यावदादेयं तावदादाय सकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वाद् द्विवचनेन निर्देशः क्रियते । न ह्यत्र निर्देशस्तन्त्रम्। एवमपि लोकविज्ञानान्न सिध्यति । तद्यथा । लोके ब्राह्मणानां पूर्व आनीयतामित्युक्ते सर्वपूर्व आनीयते एवमिह पि सर्वपूर्वायाः क्रियायाः प्राप्नोति । अनन्यवचनात्तु सिद्धम् । समानकर्तृकयोरनन्यस्येति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं समानकर्तृकयोरिति बहुष्वप्राप्तिरिति । परिहृतमेतत् । सिद्धं तु क्रियाप्रधानत्वादिति । ननु चोक्तं एवमपि लोकविज्ञानान्न सिध्यतीति । नैष दोषः । सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यम् । स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति । एवं च कृत्वा प्रयोगोप्यनियतो भवति । स्नात्वा भुक्त्वा पीत्वा व्रजति । पीत्वा भुक्त्वा स्नात्वा व्रजति । व्यादाय स्वपितीत्युपसंख्यानमपूर्वकालत्वात् * । व्यादाय स्वपितीत्युपसंख्यानं कर्तव्यम् । किं पुनः कारणं न सिध्यति । अपूर्वकालत्वात् पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति । न वा स्वप्नस्यापरकालत्वात् * । न वा वक्तव्यम् । किं कारणम् । स्वप्नस्याप-

---

लत्वाद्भावस्य च प्रतिपाद्यत्वात् । आसित्वा भोक्तुमिति प्राप्नोतीति भावः । लब्ध्वेति । वासरूपोऽस्त्रियामित्यत्र स्त्रिया. प्रागिति पक्षो नाश्रितः किन्तर्हि स्त्र्यधिकारे वासरूपविधिर्नेति । यदा त्वासेः क्त्वा भवति तदा भुजेः तुमुन्न भवति अनभिधानात् न ह्यासित्वा भोक्तुमित्याद्यभिधानमस्ति । तस्माल्लुडादय एव भुजेर्भवन्ति आसित्वा भुङ्क्ते इति । क्रियाप्रधानत्वादिति । समानकर्तृकक्रियान्तरापेक्षपौर्वकाल्यक्रियाप्रतिपादनपरत्वान्निर्देशस्य नान्तरीयकत्वादुपात्तं द्वित्वमत्राविवक्षितमित्यर्थः । लोकविज्ञानादिति । अमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते पङ्क्तौ यः सर्वेषामादिः स एवानीयते तथेहापि स्नात्वा भुक्त्वा पीत्वा व्रजतीति स्नानस्यैव पूर्वत्वात् स्नातेरेव प्रत्ययेन भाव्यं न तु भुजिपिबतिभ्यामित्यर्थः । सर्वेषामिति । आख्यातवाच्यायाः क्रियाया विशेष्यत्वात्प्राधान्यात्तां प्रति सर्वासां विशेषणत्वात्परस्परेणासम्बन्धः । यथोक्तम् । गुणा-

रकालत्वात् । अपरकालः स्वप्नः । अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति ॥

**विभाषाग्रेप्रथमपूर्वेषु** ॥ २४ ॥ किमयं प्राप्ते विभाषा आहोस्विदप्राप्ते । कथं च प्राप्ते कथं चाप्राप्ते । आभीक्ष्ण्यइति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते । किं चातः । यदि प्राप्ते आभीक्ष्ण्ये ऽनिष्टा विभाषा प्राप्नोति । अन्यत्र चेष्टा न सिध्यति । अथाप्राप्ते अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः * । अग्रादिषु अप्राप्तविधिः समासस्य प्रतिषेधो वक्तव्यः स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तं वा । उक्तमेतत् । अमैवाव्ययेनेत्यत्र एवकारकरणस्य प्रयोजनम् ।

---

नाश्च परार्थत्वादसंबन्धः समत्वादिति । अपरकाल इति । यद्यपि स्वप्नक्षणानां व्यादानात् पूर्वकालता तथापि व्यादानान्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमस्तीत्यर्थः ॥ २१ ॥

विभाषाग्रे ॥ इहाग्रादयः साधनपौर्वकाल्यविषया गृह्यन्ते न तु क्रियापौर्वकाल्यविषयास्तेषां हि क्रियापौर्वकाल्यविषयत्वे तैरेव पौर्वकाल्यस्योक्तत्वात् क्त्वाणमुलोर्गतार्थत्वादुत्पत्त्या न भाव्यम् । न चैतत्सूत्रारम्भादुक्तेपि पौर्वकाल्ये तयोरुत्पत्तिरिति शक्यते वक्तुम् । अस्य साधनपौर्वकाल्यविषयाग्राद्युपपदत्वे चरितार्थत्वाद्भाष्यकारेण च समानादिसूत्रे पूर्वशब्देन क्रियापौर्वकाल्ये उक्ते क्त्वाप्रत्ययस्यानुत्पत्तेः प्रतिपादितत्वात् । यदि चात्र अग्रादयः क्रियापौर्वकाल्यविषया गृह्येरन् तदा अप्राप्तविभाषैव निःसंदेहा स्यादिति किमियं प्राप्ते विभाषेति संशयो नैवोपपद्येत । यस्मादाभीक्ष्ण्ये णमुलचेति क्त्वाणमुलौ क्रियापौर्वकाल्ये एव विधीयेते । तच्चेदग्रादिभिरुच्यते तदाभीक्ष्ण्यग्रहणानुवृत्तावप्यप्राप्तविभाषैव स्यात् । आभीक्ष्ण्यञ्च द्विर्वचनमन्तरेण क्त्वाणमुल्भ्यां न द्योत्यत इति तद्द्योतनायापि तयोर्विधानं नोपपद्यते । तस्मात्साधनपौर्वकाल्यविषया इहाग्रादय इति स्थितम् । यद्यपि देशविशेषवचनोऽग्रशब्दोस्ति प्रभोरग्रे भुङ्क्ते इति तथापि पूर्वप्रथमसाहचर्यात्कालविशेषवृत्तिरेव गृह्यते । अनिष्टा विभाषेति । आभीक्ष्ण्ये नित्यौ क्त्वाणमुलौ इष्येते अग्रे भुक्त्वा भुक्त्वा व्रजतीति । लडादयस्तु नैवेष्यन्ते अग्रे भुङ्क्ते भुङ्क्ते ततो व्रजतीति भावः । अन्यत्र चेति । आभीक्ष्ण्यग्रहणानुवृत्तौ सत्यामनाभीक्ष्ण्ये क्त्वाणमुलौ न स्यातामित्यर्थः । अप्राप्तविधेरिति । विभाषायामग्रादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वान्निमित्तस्य चोपपदसंज्ञाविधानादुपपदसमासः प्रतिषेध्यः । प्राप्तविभाषायां त्वग्रादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वं नतु प्रत्ययोत्पत्तौ प्रत्यययोराभीक्ष्ण्ये णमुल्चेत्यनेनाविशेषेण विहितत्वादिति भावः । न वक्तव्य इति । अप्राप्तविभाषात्वमनेन द्रढयति पूर्वविप्रतिषेधाच्चाग्रादिष्वाभीक्ष्ण्ये च नित्याभ्यां क्त्वाणमुल्भ्यां भाव्यमित्युभयत्र विभाषा चेयं न भवति । ननु च णमुल्यप्राप्ते क्त्वाप्रत्यये तु समानादिसूत्रेण प्राप्ते सत्यारम्भादुभयत्र विभाषेयं युक्ता, नैतदस्ति । समानादिसूत्रे विहितं क्त्वां प्रति विभाषाग्रहणमनर्थकमेव वासरूप इत्यनेनैव पक्षे लडादीनां सिद्धत्वात् । कः पुनरस्य क्त्वः समानादिसूत्रविहिताद्विशेष इति चेद् णमुल्सहितत्वमेव विशेषः । णमुल्सहितक्त्वाविधौ विभाषाश्रुतिरिहोपादीयमाना ज्ञापकार्था संपद्यते । क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्न भवतीति । तेनाभीक्ष्ण्ये पौर्वकाल्ये लडादयो न भव-

अमैवाव्ययेन यत्तुल्यविधानमुपपदे यत्र समासो यथा स्याद् अमा चान्येन च यत्तुल्यविधानमुपपदं तत्र मा भूदिति । विभाषाग्रे ॥

स्वादुमि णमुल् ॥ २६ ॥ किमर्थं स्वादुमि मकरान्तनिपातनं क्रियते न खमुञ्प्रकृतः सोऽनुवर्तिष्यते । स्वादुमि मान्तनिपातनमनीकाराभावार्थम् * । स्वादुमि मान्तनिपातनं क्रियते ईकाराभावार्थम् । ईकारो मा भूदिति । स्वाद्वीं कृत्वा यवागूं भुङ्क्ते । स्वादुं कारं यवागूं भुङ्क्तइति । च्व्यन्तस्य च मकारान्तार्थम् * । च्व्यन्तस्य च मकारान्तत्वं यथा स्यात् । अस्वादु स्वादु कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते । आ च तुमुनः समानाधिकरणे * । आच तुमुनः प्रत्ययाः समानाधिकरणे भवन्तीति वक्तव्यम् । केन । अनुप्रयोगेण । किं प्रयोजनम् । स्वादुङ्कारं यवागूर्भुज्यते देवदत्तेनेति देवदत्ते तृतीया यथा स्यात् । किं च कारणं न स्यात् । णमुलाभिहितः कर्तेति । ननु च भुजिप्रत्ययेन अनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चानभिधाने च कुतश्चिदभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भवति तृतीया । यवाग्वां द्वितीया प्राप्नोति । किं कारणम् । णमुलानभिहितं कर्मेति । यदि पुनरयं कर्मणि विज्ञायेत । नैवं शक्यम् । इह हि स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त इति यवाग्वां द्वितीया न स्यात् । किं कारणम् । णमुलाभिहितं कर्मेति । ननु च भुजिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया । यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया । देवदत्ते तृतीया प्राप्नोति । किं कारणम् । णमुलानभिहितः कर्तेति । अथानेन क्त्वायामर्थः । पक्त्वौदनो भुज्यते देवदत्तेनेति । वाढ-

---

न्तीति । तत्र यदि केवलो णमुल् विधीयेत विभाषाश्रुतिरभिमतमर्थं ज्ञापयितुं न क्षमेतेति क्त्वोप्यनुवादः कर्तव्यः ॥ २४ ॥

स्वादुमि ॥ ईकाराभावार्थमिति । मान्तत्वे भाविप्रत्ययविषये निपात्यमाने विहितनिमित्तत्वाद्वोतोगुणवचनादिति ङीष् न भवतीत्यर्थः । च्व्यन्तस्य चेति । खमुञपि सर्वत्र मुम् न सिध्यति । अनव्ययस्येत्यधिकारादिति भावः । यद्येवं मान्तत्वमेव निपात्यतां प्रत्ययस्तु खमुञेव विधेयः । नैतदस्ति । अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीष् स्यादेव । णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्यं चोत्तरार्थो णमुल् विधेय इति लाघवाभावादिहैव विहितः । आच तुमुन इति । पूर्वोक्तवाक्यार्थापेक्षया समुच्चयप्रतिपादनार्थशब्दः । न केवलं स्वादुमि मान्तनिपातनमपि तु इदमपि वक्तव्यमित्यर्थः । शकधृषादिसूत्रविहितस्तुमुन् गृह्यते अभिविधौ चायमाकारः । णमुलेति । असत्यस्मिन् वचने कर्तरि कृदिति णमुला कर्तरि भाव्यमिति भावः । अनभिहिताश्रय इति । अनभिहित इति पर्युदास आश्रीयते न तु प्रसज्यप्रतिषेध इति भावः । यदि पुनरिति । अव्ययकृतः कर्मणीति वचनं यदि

मर्थः। देवदत्ते तृतीया यथा स्यात्। किं च कारणं न स्यात्। क्त्वयाभिहितः कर्तेति। ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। ओदने द्वितीया प्राप्नोति। किं कारणम्। क्त्वयानभिहितं कर्मेति। यदि पुनरयं कर्मणि विज्ञायेत। नैवं शक्यम्। इह हि पक्त्वा ओदनं भुङ्क्ते देवदत्त इति ओदने द्वितीया न स्यात्। किं च कारणं न स्यात्। क्त्वयाऽभिहितं कर्मेति। ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वा अनभिहिताश्रया विभक्तिर्भविष्यति द्वितीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया। देवदत्ते तृतीया प्राप्नोति। किं कारणम्। क्त्वयानभिहितः कर्तेति। अथानेन तुमुन्यर्थः। भोक्तुमोदनः पच्यते देवदत्तेनेति। बाढमर्थः। देवदत्ते तृतीया यथा स्यात्। किं च कारणं न स्यात्। तुमुनाभिहितः कर्तेति। ननु च पचिप्रत्ययेनानभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया। ओदने द्वितीया प्राप्नोति। किं कारणम्। तुमुनानभिहितं कर्मेति कृत्वा। यदि पुनरयं कर्मणि विज्ञायते। नैवं शक्यम्। इह हि भोक्तुमोदनं पचेति देवदत्त इति ओदने द्वितीया न स्यात्। किं च कारणं न स्यात्। तुमुनाभिहितं कर्मेति। ननु च पचिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भवति द्वितीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया। देवदत्ते तृतीया प्राप्नोति। किं कारणम्। तुमुनानभिहितः कर्तेति। अथ अनेनेहार्थः। पक्त्वौदनं ग्रामो गम्यते देवदत्तेनेति। बाढमर्थः। देवदत्ते तृतीया यथा स्यात्। किंच कारणं न स्यात्। क्त्वयाभिहितः कर्तेति। ननु च गमिप्रत्ययेनानभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदुक्तमोदने द्वितीया प्राप्नोतीति स इह दोषो न जायते। तत्तर्हि वक्तव्यमा च तुमुनः समानाधिकरणइति। न वक्तव्यम्। अव्ययकृतो भावे भवन्तीति भावे भविष्यन्ति। किं वक्तव्यमेतत्।

---

क्रियतइति भावः। अथानेनेति। आच तुमुन इत्यनेन वचनेनेत्यर्थः। अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति। पक्त्वौदनमिति। भिन्नधात्वर्थविषय कर्मभेदेपि वचनस्यास्य दर्शयितुं प्रयोजनमुपन्यासः। अव्ययकृत इति। यद्येवं पक्त्वौदनं भुङ्क्ते देवदत्तः पक्त्वौदनो भुज्यते देवदत्तेनेति क्त्वाप्रत्ययेन कर्तृकर्मणोरनभिधानात्पाकापेक्षया तृतीयाद्वितीये कस्मान्न भवतः। उच्यते। आख्यातादिपदवाच्या क्रिया विशे-

नाहि। कथनमनुच्यमानं गंस्यते । तुमर्थ इति वर्तते । तुमर्थश्च कः । भावः ॥

वर्षप्रमाणऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥ ऊलोपश्चास्यान्यतरस्यांग्रहणं शक्यमकर्तुम् । कथं गोष्पदप्रं वृष्टो देव इति । प्रातिः पूरणकर्मा । तस्मादेषः कः । यदि कः, विभक्तीनां श्रवणं प्राप्नोति । श्रूयन्तएवात्र विभक्तयः । तद्यथा । एकेन गोष्पदप्रेणेति ॥

करणे हनः ॥ ३७ ॥ हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात्* । हनः करणे वचनमनर्थकम् । किं कारणम् । हिंसार्थेभ्यो णमुल्विधानात् । हिंसार्थेभ्यो णमुल्विधीयते । तेनैव सिद्धम् । अर्थवत्त्वहिंसार्थस्य विधानात् * । अर्थवत्तु हन्तेर्णमुल्वचनम् । कोर्थः । अहिंसार्थस्य विधानात् । अहिंसार्थस्य हन्तेर्णमुल् यथा स्यात् । अस्ति पुनरयं क्वचिद्धन्तिरहिंसार्थः । यदर्थो विधिः स्यात् । अस्तीत्याह । पाण्युपघातं वेदिं हन्ति । नित्यसमासार्थं च * । नित्यसमासार्थश्च हिंसार्थादपि हन्तेरनेन विधिरेषितव्यः । कथं पुनरिच्छतापि हिंसार्थाद्धन्तेरनेन विधिर्लभ्यः । अनेन विधिर्लभ्यः । अनेनास्तु तेन वेति तेन स्याद्विप्रतिषेधेन । हन्तेः पूर्वविप्रतिषेधो वार्त्तिकेनैव ज्ञापितः यदयं नित्यसमासार्थं चेत्याह । तज्ज्ञापयत्याचार्यः हिंसार्थादपि हन्तेरनेन विधिर्भवतीति ॥

---

ष्यत्वात् प्रधानम् । विशेषणभूता त्वप्रधानम् । तत्क्रियासाधन्योरपि शक्त्योस्तद्वाराको गुणप्रधानभावः । तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितत्वात्प्रकाशते।प्रधानानुरोधात् गुणानां तन्मुखप्रेक्षित्वात् पृथक्ताद्विरुद्धस्वकार्यारम्भाभावात् ।

वर्ष॥ तस्मादेष क इति । गोष्पदं प्रातीत्यातोनुपसर्गे क इति कप्रत्ययः। क्रियाविशेषणत्वाच्च कर्मत्वनपुंसकत्वे। गोष्पदप्रकलं गोष्पदप्रन्तरामित्यादिप्रयोगसिध्यर्थमूलोपो न विधेयः। यथां प्रयोगाणां भाष्यकारेणानभ्युपगमात्। अनभ्युपगमस्तु ऊलोपप्रत्याख्यानान्यथानुपपत्त्या विज्ञायते गोष्पदपूरमित्यादेरपि घञा सिद्धत्वाद् णमुल् कस्मान्न प्रत्याख्यायते। स्वरे दोषप्रसङ्गात्। तथा हि यदि करणे घञं विधाय षष्ठीतत्पुरुषः क्रियते। तथा थाथादिसूत्रेणान्तोदात्तत्वं भवति । भावे तु घञि बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । णमुलि तु लित्स्वरेणोकार उदात्तः । गोष्पदपूरतरामित्यादि च सिध्यति । गोष्पदप्रमित्यत्र तु नास्ति स्वरभेदः । कप्रत्यये थाथादिस्वरेणान्तोदात्तत्वाद् णमुलि ऊलोपे कृते पूर्वस्योदात्तभाजोऽभावात् कृत्स्वरेणान्तोदात्तत्वात् ॥ ३२ ॥

करणे ॥ बाहुल्ये न हन्तिर्हिंसार्थो दृश्यतइति मत्वाह हन इति । हन्तेः पूर्वविप्रतिषेध इति । यद्येवं हिंसार्थानामित्यत्र दण्डोपघातं गाः कालयतीति उदाहरणं नोपपद्यते । नैष दोषः । यत्र एक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेष्यभावमनुभवति सोस्य विषयः। कषादिषु यथाविध्यनुप्रयोग इति वचनादन्यत्र भिन्नधात्वर्थसंबन्धे तु हिंसार्थानामित्यनेनैव णमुल् भवति ॥ ३७ ॥

**अधिकरणे बन्धः** ॥ ४१ ॥ इह कस्मान्न भवति ग्रामे बन्ध इति। एवं वक्ष्यामि अधिकरणे बन्धः संज्ञायां ततः कर्त्रोर्जीवपुरुषयोर्नशिवहोरिति। कथमट्टालिकाबन्धं बद्धः। चण्डालिकाबन्धं बद्धः। उपमाने कर्मणि चेत्येवं भविष्यति ॥

**तिर्यच्यपवर्गे** ॥ ६०॥ अयुक्तोयं निर्देशः। तिरश्चीति भवितव्यम्। सौत्रो निर्देशः॥

**नाधार्थप्रत्यये च्व्यर्थे** ॥ ६२ ॥ अर्थग्रहणं किमर्थं नाधाप्रत्ययइतीयत्युच्यमाने इहैव स्यात् द्विधाकृत्य। इह च न स्यात् द्वैधं कृत्य। अर्थग्रहणे पुनः क्रियमाणे न दोषो भवति। नाधाप्रत्यये च सिद्धं भवति। यश्चान्यस्तेन समानार्थः। अथ प्रत्ययग्रहणं किमर्थम्। इह हि मा भूत्। हिरुक्कृत्वा पृथक्कृत्वा ॥

**अन्वच्यानुलोम्ये** ॥ ६४ ॥ अयुक्तोयं निर्देशः ॥ अनूचीति भवितव्यम्। सौत्रोऽयं निर्देशः।

**कर्तरि कृत्** ॥ ६७ ॥ किमर्थमिदमुच्यते। कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् *। कर्तरि कृतो भवन्तीत्युच्यते अनादेशे स्वार्थविज्ञानात्। अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति। तद्यथा। गुप्तिज्किद्भ्यः सन्। यावादिभ्यः कन्निति। एवमिमे प्रत्ययाः कृतः स्वार्थे स्युः। स्वार्थे मा भूवन्। कर्तरि यथा स्युः एवमर्थमिदमुच्यते। नैतदस्ति प्रयोजनं यमिच्छति स्वार्थे आह तं भावे घञ् भवतीति। कर्मणि तर्हि मा भूवन्निति। कर्मण्यपि यमिच्छत्याह तं धः कर्मणि ष्ट्रन्निति। करणाधिकरणयोस्तर्हि मा भूवन्निति। करणाधिकरणयोरपि यमिच्छत्याह

---

अधिक ॥ ग्रामे बन्ध इति। णमुलिं सति ग्रामबन्धं बद्धइति प्राप्नोति ॥ ४१ ॥

तिर्य ॥ सौत्रो निर्देश इति। अनुक्रियमाणरूपविनाशप्रसङ्गस्तु न परिहारो न हि प्रयोजनानुवर्तिप्रमाणम् ॥ ६० ॥

नाधा ॥ द्वैधं कृत्येति। यदा द्वित्र्योश्च धमुञित्यादौ प्रत्ययपक्षस्तदेतदर्थग्रहणस्य प्रयोजनम्। आदेशपक्षे तु स्थानिवद्भावात् धाग्रहणेन ग्रहणात्सिध्यति। तथा च धमुञन्तात् स्वार्थे डदर्शनमिति डप्रत्यय उदाहार्यो द्वैधकृत्येति। नार्थमप्यर्थग्रहणं कर्तव्यमन्यथा निरनुबन्धकपरिभाषया नाञो ग्रहणं न स्यात् ॥ ६२ ॥

कर्त ॥ किमर्थमिति। वक्ष्यमाणोभिप्रायः। अनादेश इति। यत्र वचनेनार्थो नादिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति। यमिच्छतीति। असत्यस्मिन् सूत्रे घञित्येतावत् सूत्रं कर्तव्यम्। धातोर्घञ् भवतीति तत्रानिर्दिष्टत्वाभावे घञ् भविष्यति। ततः पदरुजविशस्पृश इति द्वितीयं सूत्रं कर्तव्यं ततश्च भाव इति न कर्तव्यम्। क्रियमाणं तु नियमार्थं भविष्यति। घञेव भावे नान्य इति। ततो धात्वर्थाक्षिप्ते कर्तरि कृद्भविष्यति नार्थः सूत्रेणेत्यर्थः। कर्मणीति। तस्यापि धात्वर्थेनाक्षेपादिति भावः। कर्मणि ष्ट्रन्निति। ष्ट्रन्नेव कर्मणि नान्य इति नियमो विज्ञास्यते। यद्येवं कर्मणो नियमात्प्रत्ययो न नियत इति कारकान्तरेपि ष्ट्रन् प्राप्नोति। नैष दोषः। एकमिदं वाक्यं धः कर्मणि ष्ट्रन्निति तेन च कर्मणि विधीयमानः कथं कारकान्तरे स्यात् अथ द्वितीयो नियमः क्रियते

तं ल्युट् करणाधिकरणयोर्भवतीति। संप्रदानापादानयोस्तर्हि मा भूवन्निति। संप्रदानापादानयोरपि यमिच्छत्याह तं दाशगोघ्नौ संप्रदाने भीमादयोपादानेइति। य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं कर्तर्येव भविष्यति। तदेव तर्हि प्रयोजनम्। स्वार्थे मा भूवन्निति। ननु चोक्तं स्वार्थे यमिच्छत्याह तं भावे घञ्भवतीति। अन्यः स भावो बाह्यः प्रकृत्यर्थात्। अनेनेदानीमाभ्यन्तरे भावे स्युः। तत्र मा भूवन्निति कर्तृग्रहणम्। कः पुनरेतयोर्भावयोर्विशेषः। उक्तो भावभेदो भाष्ये। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र ल्युनादिप्रतिषेधो नानावाक्यत्वात् *। तत्र ल्युनादीनां प्रतिषेधो वक्तव्यः। ल्युनादयः कर्तरि मा भूवन्निति। ननु च करणे ल्युनादयो विधीयन्ते तेन कर्तरि न भविष्यन्ति। तेन च करणे स्युरनेन च कर्तरि। ननु चापवादत्वाद् ल्युनादयो बाधकाः स्युः। किं कारणम्। नानावाक्यत्वाद्। नानावाक्यं तच्चेदं च। समाने वाक्यं चापवादैरुत्सर्गा बाध्यन्ते। नानावाक्यत्वाद्बाधनं न प्राप्नोति। तद्वच्च कृत्येष्वेवकारकरणम् *। एवं च कृत्येष्वेवकारः क्रियते तयोरेव कृत्यक्तखलर्था इति भावे चाकर्मकेभ्य इति। किं प्रयोजनम्। तच्च भव्याद्यर्थम् *। भव्यादिषु समावेशः सिद्धो भवति। गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति। ऋपिदे-

---

ते कर्मणि एव प्रभुत्निति। य इदानीमिति। ननु कर्तरि भुवः खिष्णुच्खुकञौ कर्तरि चर्पिदेवतयोरिति कर्तुरपि नियमः प्राप्नोति। नैष दोषः। उभयत्र करणनिवृत्त्या कर्तृश्रुतिर्विध्यर्थैव न नियमार्था। उक्त इति। सार्वधातुके यगित्यत्र बाह्यान्तरयोर्भावयोर्विशेषो दर्शितः। ननु चेति ल्युनादिषु करणादिरर्थो विशेषविहितत्वात्कर्तुर्बाधको भविष्यतीति भावः। नाना वाक्यत्वादिति। इह ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यभिन्नकालत्वादेकं वाक्यं विशिष्टस्य दानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते। यदा तु कालभेदेन वाक्यद्वयमुच्चार्यते पूर्वाह्णे ब्राह्मणेभ्यो दीयतामिति। अपराह्णे तु तक्रं कौण्डिन्याय दीयतामिति। तदा तक्रेण दधि न बाध्यते तथेहापि कालभेदेन वाक्यद्वयोच्चारणाद् बाध्यबाधकभावो नास्तीत्यर्थः। यत्विगादिवाक्ये यद्येकं वाक्यं तच्चेदं च ततस्तच्छेषः। अथ नानावाक्यं तदा तदपवाद इत्युक्तम्। तदसंभवाश्रयेण। यदाङ्गस्येति इगपेक्षावयवावयविसंबन्धे षष्ठी तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानं तदेव चापवादत्वम्। ल्युनादयस्तु कृत्वादनेन कर्तरि स्युः। करणादिश्रुत्या च करणादिषु। तत्रानेकस्यार्थस्य युगपदभिधानासंभवात् पर्यायः स्यात्। कदाचित्कर्तरि कदाचित्करणादिषु। तद्वच्चेति। योयमर्थ उक्तः तेन तुल्यमेवकारकरणमित्यर्थः। तथाहि। कृत्त्वात्कर्तरि कृत्यादयः प्राप्ता एवकारेण कर्तुरपकृष्यन्ते भावकर्मणोरेव यथा स्युरित्येवमर्थमित्यर्थः। भावे चाकर्मकेभ्य इत्यनेनाधिकारसहितं वाक्यं दर्शयति किं प्रयोजनमिति। एवकारेणान्यत्र समावेशज्ञापनेन किं प्रयोजनमिति प्रश्नः। तच्च भव्याद्यर्थमिति। भव्यगेयादिसूत्रे वाग्रहणं न कर्तव्यम्। तद-

वतयोस्तु क्राद्भिः समावेशवचनं ज्ञापकसमावेशस्य * । यदयं कर्तरि चर्षिदेवतयोरिति सिद्धे सति समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः न भवति समावेश इति । किमर्थं तर्हि कृत्स्वेवकारः क्रियते । एवकारकरणं च चार्थे * । एवकारकरणं च चार्थे द्रष्टव्यम् । तयोर्भावकर्मणोः कृत्या भवन्ति भव्यादीनां कर्तरि च । किं प्रयोजनम् । तच्च भव्याद्यर्थं, भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति । यत्तावदुच्यते । ऋषिदेवतयोः क्राद्भिः समावेशवचनं ज्ञापकमसमावेशस्येति । नैतज्ज्ञापकसाध्यमपवादैरुत्सर्गा बाध्यन्त इति । एष एव न्यायः । यदुतापवादैरुत्सर्गा बाध्येरन् । ननु चोक्तं नानावाक्यत्वाद् बाधनं न प्राप्नोतीति । न विदेशस्थमपि कृत्वातो नानावाक्यं भवति । विदेशस्थमपि सदेकं वाक्यं भवति । तद्यथा द्वितीये ऽध्याये लुगुच्यते तस्य चतुर्थषष्ठ्योरलुगुच्यते ऽपवादः । यदप्युच्यते एवकारकरणं च चार्थे इतिं । कथं पुनरन्यो नामान्यस्यार्थे विद्यते । कथमेवकारश्चार्थे वर्तते । स एष एवकारः स्वार्थे वर्तते । किं प्रयोजनम् । ज्ञापकार्थं, किं ज्ञाप्यते । एतज्ज्ञापयत्याचार्यः इत उत्तरं समावेशो भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । तच्च भव्याद्यर्थम् । भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति । यद्येतज्ज्ञाप्यते इहापि समावेशः प्राप्नोति । दाशगोघ्नौ संप्रदाने भीमादयोपादानइति । अत्रापि सिद्धं भवति । यदयमादिकर्मणि क्तः कर्तरि चेति सिद्धे समावेशे समावेशार्थं चकारं शास्ति तज्ज्ञापयत्या-

---

न्तरेणापि भव्यादयः कर्तरि भवन्तीत्यनेन समावेशज्ञापनादेवकारकरणाद्भावकर्मणी न बाधिष्येते इत्यर्थः । इदानीं तत्र ल्युनादिप्रतिषेध इत्यस्य परिहारमाह ऋषिदेवतयोरिति । क्राद्भिरिति जातौ बहुवचनमत्र च यथासंख्यं वार्तिककारस्याभिमतम् । यथासंख्ये हि चशब्दस्य ज्ञापकत्वन्न स्यात् समावेशाभावात् । भव्याद्यर्थमिति । भव्यगेयेति सूत्रं न कर्तव्यं भवतीत्यर्थः । अन्ये तु कृत्यादयोनभिधानात्कर्तरि न भविष्यन्तीति भावः । इदानीं भाष्यकारो वार्तिकदूषणमाह यत्तावदिति । न विदेशस्थमिति । न कालभेदान्नानावाक्यत्वं भवति । शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात् । देशग्रहणं चात्र कालस्योपलक्षणम् । शब्दक्रमस्य कालकृतत्वात् । चतुर्थषष्ठ्योरिति । चतुर्थे गोत्रे ऽलुगचीति । षष्ठे तु अलुगुत्तरपदे इति । तदुक्तं हरिणा । अनेकाख्यातयोगेपि वाक्यं न्यायापवादयोः । एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥ नियमः प्रतिषेधश्च विशेषश्च तथा सति । द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुरिति ॥ कथमिति । एवकारस्य लौकिके प्रयोगे न क्वचित् चार्थवृत्तित्वं दृश्यतइति भावः । उत्तरमिति । कर्तरि कृदित्यस्मादुत्तरमित्यर्थः । तच्चेति । भव्यगेयादिसूत्रे वेति न कर्तव्यं भवतीत्यर्थः । यदयमिति । आदिकर्मणि क्तः कर्तरीत्येतावदस्तु नार्थश्चशब्देन । समावेशोप्येवकारज्ञापितो भविष्यति । कुतस्तु चशब्दो ज्ञापयति

चार्यः प्रागमुतः समावेशो भवतीति । किं पुनरयं प्रत्ययनियमः धातोः परः अकारः अकशब्दो वा नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च प्रत्ययसंज्ञश्चेति । आहो स्वित्संज्ञानियमो धातोः परः अकारः अकशब्दो वा स्वभावतः कर्तारं ब्रुवन् कृत्संज्ञश्च भवति प्रत्ययसंज्ञश्चेति । कश्चात्र विशेषः । तत्र प्रत्ययनियमे ऽनिष्टप्रसङ्गः * । तत्र प्रत्ययनियमे सति अनिष्टं प्राप्नोति । काष्ठभिद्ब्राह्मणः । बलभिद्ब्राह्मणः । एषोपि नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च स्यात्प्रत्ययसंज्ञश्चेति । संज्ञानियमे सिद्धम् * । संज्ञानियमे सति सिद्धं भवति । यदि संज्ञानियमः । विभक्तादिषु दोषः । विभक्ता भ्रातरः पीता गाव इति न सिध्यति । प्रत्ययनि-

---

आदिकर्मणीत्यस्मात् सूत्रात् परेषु योगेषु समावेशो न भवतीति । किं पुनरिति । सिद्धे शब्दार्थसंबन्धइति यदुक्तं तत् स्मारयितुं विचार्यते । प्रत्ययनियम इति । धातोः परः कृत्प्रत्ययः कर्तरि वर्ततामिति कर्तृलक्षणेर्थे कृत्प्रत्ययो नियम्यते । नियोगत इति । कर्तरि कृदित्यस्मादाचार्यनियोगादित्यर्थः । कार्यशब्दाभ्युपगमे चास्य पक्षस्य संभवः । आहोस्विदिति । नित्यशब्दार्थसंबन्धाभ्युपगमनिबन्धनोयं पक्षः । यः स्वभावतः कर्तरि वर्तते स एव कृत्संज्ञो नान्य इति कृत्संज्ञा नियम्यते । यद्येवं ल्युनादीनां कृत्संज्ञा न प्राप्नोति । नैष दोषः । एतत्सूत्रव्यापारो नियम्यते । करणे ल्युडित्यादावप्ययमेव विचारः किमयमर्थः करणे ल्युन्वर्ततामिति उत यत् स्वभावतो वर्तते तस्य साधुत्वमिति । कृत्संज्ञा तु प्रतिप्रत्ययमधिक्रियमाणा ल्युनादिषु प्रवर्ततेएव । काष्ठभिद्ब्राह्मण इति । अनित्यशब्दाभ्युपगमे काष्ठभेद इत्यत्राप्यण् प्रत्ययो वचनादेव कर्तारमाचष्टे । उत्पाद्यशब्दपक्षे चाकाराणां विशेषाभावाद्ब्राह्मणशब्दाकारस्यापि कर्तरि नियोगत्वंप्राप्नोति । आचार्यनियोगाच्च कर्तारं ब्रुवतः कृत्प्रत्ययसंज्ञाप्रसङ्गः तत्र कृत्संज्ञायां सत्यां स्वाद्युत्पत्तिप्रसङ्गः प्रत्ययसंज्ञायां च सत्यां तन्निबन्धनाङ्गसंज्ञाश्रय आर्धधातुकनिमित्ते गुणः प्राप्नोति । ननु नायं धातोर्विहितः ततो दोषाभावः । नैतदस्ति । लक्षणवशाच्छब्दार्थसंबन्धव्यवस्थानुविधाने कुतोयं नियमः, अयं धातोर्विहितो नायमिति । काष्ठशब्दो हि कर्मोपपदं भिदिर्धातुः तस्माच्च परोऽकार इति तस्य कर्तरि स्यादेव नियोगः । यदा हि स्ववाक्यैर्विहितानां प्रत्ययानामनेनार्थविशेषे नियोगः क्रियते तदा विशेषाभावादस्यापि नियोगः प्राप्नोति । क्विपो लुप्तत्वाद्धातुरेव कर्त्रर्थेनियुक्त इत्यकारस्य कर्तार्थो न भविष्यतिं चेत् । यावकादिष्विव सर्वाभिधानमस्तु । लौकिकार्थानपेक्षायां हि धातोः परस्य कृत्प्रत्ययसंज्ञाकर्तृनियोगप्रसङ्गः । संज्ञानियमे सिद्धमिति । नह्यत्राकारो लौकिके प्रयोगे कर्तारं ब्रवीति प्रतिषेधवाचित्वादिति कृत्प्रत्यये संज्ञयोरप्रवृत्तिरित्यर्थः । प्रत्ययनियमवाद्याह यद्येति । अत्र हि क्तः स्वभावतः कर्तारमाह भ्रातृभिर्गोभिश्च सामानाधिकरण्यात् । ततश्च कर्तरि साधुत्वं प्राप्नोतीत्यसाधुत्वं मन्यते । क्रियाकारकसंबन्धेन विभक्तादीनां कर्तरि वृत्तिरनभिमतेति दोषोपन्यासः । प्रकारान्तरेण साधुत्वं दर्शयिष्यते । प्रत्ययनियमवादिनस्त्वयमदोषः गत्यर्थाकर्मकेत्यत्र परिगणितेभ्यः प्रकृतिभ्यः परः क्तः कर्तरि नियुज्यते । नहि तत्र भजिपिबती परिगणितावित्यर्थः । संज्ञानियमवाद्याह विभक्तादिषु चेति । ममापि गत्यर्थकर्मकेति सूत्रं न दण्ड-

यमे पुनः सति परिगणिताभ्यः प्रकृतिभ्यः परः क्तो नियोगतः कर्तारमाह। न चेमास्तत्र परिगण्यन्ते प्रकृतयः। विभक्तादिषु चाप्राप्तिः प्रकृतेः प्रत्ययपरवचनात् *। विभक्तादिषु च प्रत्ययनियमस्याप्राप्तिः। किं कारणम्। प्रकृतेः प्रत्ययपरवचनात्। परिगणिताभ्यः प्रकृतिभ्यः परः क्तः स्वभावतः कर्तारमाह। न चेमास्तत्र परिगण्यन्ते। न तर्हीदानीमयं साधुर्भवति। भवति साधु, न तु कर्तरि। कथं तर्हि कर्तृत्वं गम्यते। अकारो मत्वर्थीयः विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीता इति। अथ वा उत्तरपदलोपो ऽत्र द्रष्टव्यः। विभक्तधनाः विभक्ताः पीतोदकाः पीता इति॥

लः कर्मणि च भावे चाकर्मकेभ्यः॥६९॥ किमर्थमिदमुच्यते। ल एतेषु साधनेषु यथा स्यात्। कर्त्तरि कर्मणि च भावे चाकर्मकेभ्य इति। नैतदस्ति प्रयोजनम्। भावकर्मणोरात्मनेपदं विधीयते शेषात्कर्त्तरि परस्मैपदम्। एतावांश्च लकारः यदुत परस्मैपदमात्मनेपदं च। स चायमेवं विहितः। अत उत्तरं पठति। लग्रहणं सकर्मनिवृत्त्यर्थम् *। लग्रहणं क्रियते सकर्मकनिवृत्त्यर्थं सकर्मकाणां भावे लो मा भूदिति। यदि पुनस्तत्रैवाकर्मकग्रहणं क्रियते। तत्त्राकर्मकग्रहणं कर्त-

---

वारितम्। तत्र गत्यर्थादिभ्य एव क्तः स्वभावतः कर्तारं ब्रुवन् कृत्प्रत्ययसंज्ञो भवतीति भजिपिबतिभ्यां क्तस्य कर्तरि साधुत्वाप्रसङ्गः। प्रकृतेरिति। गत्यादिकाया इत्यर्थः। प्रत्ययपरवचनादिति। क्तप्रत्ययस्य कर्तरि वर्तमानस्य साधुत्वेन प्रतिपादनादित्यर्थः। तदेवं स्थितमेतत्। स्वभावतस्तेषु तेष्वर्थेषु वर्तमानानां प्रत्ययसंज्ञाविधानद्वारेण साधुत्वमन्वाख्यायते। इदानीं भाष्यकारः प्रश्नपूर्वकं प्रयोगसमर्थनं करोति। न तर्हीति। न तु कर्तरीति। तयोरेवेति वचनात्कर्मण्येव साधुरित्यर्थः। विभक्तमिति। धनमिति भावः। पीतमिति। उदकमित्यर्थः। आकृतिगणश्च अर्शआदिः। अथ वेति। गम्यमानार्थस्य शब्दस्याप्रयोग एव लोपोभिमतः। विभक्ता भ्रातर इत्यत्र च धनस्य यद्विभक्तत्वं तद् भ्रातृषूपचर्यते पीता गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते॥६७॥

लः कर्मणि॥ केचिल्ल इति प्रथमां व्याचक्षते। अपरे षष्ठी लस्य य आदेश इति। तत्र लकारो द्विविधः तिङ्भाव्यतिङ्भावीति। तत्र तिङ्भाविनः कृत्संज्ञानिषेधात् कर्तरि कृदित्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति। अतिङ्भाविनस्तु कर्तरि कृदिति वचनात्कर्त्तर्येव साधुत्वं प्राप्नोतीति वचनम्। किमर्थमिति। वक्ष्यमाणोभिप्रायः। ल एतेष्विति। लकार इत्यर्थः। अथ वा लस्य यआदेश इति भावः। भावकर्मणोरिति। असत्यस्मिन् सूत्रे भावकर्मणोरात्मनेपदविधानात् शेषात्कर्तरीति च परस्मैपदविधानाल्लकारस्य भावकर्मकर्तारोर्था अनुमास्यन्ते लकारस्य प्रयोगासमवायाद्वा लादेशानामेवैतेर्था भविष्यन्तीत्यर्थः। एतावानिति। नन्वाम्विषयेपि लो विद्यते। नैष दोषः। तस्य लुकापहरात्। अनुप्रयोगलकारेण भावादीनां प्रतिपाद्यत्वात्। लग्रहणमिति। यदीदं नारभ्येत तदा यथा भावे विधीयमाना घञादयः सकर्मकेभ्यो भवन्ति ओदनस्य पाकः सूत्रस्य कृतिरिति तथा भावकर्मणोरित्यनेन भावे आत्मने-

व्यम् । ननु चेहापि क्रियते भावे चाकर्मकेभ्य इति । परार्थमेतद् भविष्यति तयोरेव कृत्यक्तखलर्थाः भावे चाकर्मकेभ्य इति । एवमपि यावदिह लग्रहणं तावत् तत्राकर्मकग्रहणम् । इह वा लग्रहणं क्रियते । तत्र वा ऽकर्मकग्रहणम् । कोन्वत्र विशेषः । अयमस्ति विशेषः । इह लग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति । तत्र पुनरकर्मग्रहणे क्रियमाणे आनः कर्तरि न प्राप्नोति । तत्राप्यकर्मकग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति । कथम् । भावकर्मणोरित्यतो यदन्यदात्मनेपदानुक्रमणं तत्सर्वं कर्त्रर्थम् । विप्रतिषेधाद्वानः कर्तरि । विप्रतिषेधाद्वा आनः कर्तरि भविष्यति । तत्र भावकर्मणोरित्येतदस्तु कर्तरि कृदिति । कर्तरि कृदित्येतद्भविष्यति विप्रतिषेधेन । सर्वप्रसङ्गस्तु * । सर्वेभ्यस्तु धातुभ्य आनः कर्तरि प्राप्नोति । परस्मैपदिभ्योपि । नैष दोषः । अनुदात्तङित इत्येष योगो नियमार्थो भविष्यति । यद्येष योगो नियमार्थः । विधिर्न प्रकल्पते । आस्ते शेते इति । अथ विध्यर्थः । आनस्य नियमो न प्राप्नोति । आसीनः शयान इति । तथा नेर्विश इत्येवमाद्यनुक्रमणं यदि नियमार्थम् । विधिर्न प्रकल्पते । अथ विध्यर्थम् । आनस्य नियमो न प्राप्नोति । अस्तु तर्हि नियमार्थम् । ननु चोक्तं विधिर्न प्रकल्पते

---

पदं सकर्मकेभ्योपि स्यात् । ततश्च पच्यते यवागूं देवदत्तेनेत्यापि स्यात् । यदि पुनरिति । भावकर्मणोरकर्मकादित्येवं करिष्यते सामर्थ्याच्चाकर्मग्रहणं भावार्थं भविष्यति । अकर्मकाणां संभवात् । सूत्रारम्भवाद्याह तत्रेति । सूत्रप्रत्याख्यानवाद्याह ननु चेति । त्वयापीति शेषः । आरम्भवाद्याह परार्थमिति । सूत्रप्रत्याख्यानवाद्याह यावदिहेति । कर्मणि च भावे चाकर्मकेभ्य इत्येतदत्र प्रदेशे द्वाभ्यामपि वक्तव्यम् । त्वया तु ल इत्येतत्पदमत्र कर्तव्यम् । मया भावकर्मणोरित्यत्र अकर्मकग्रहणमिति पदेन पदस्य साम्यम् । मात्रालाघवं त्वत्र न विवक्षितम् । आरम्भवाद्याह अयमस्तीति । आन इति । आत्मनेपदसंज्ञत्वाद्भावकर्मणोरिति वचनाद्भावकर्माभिधायित्वमेव स्यान्न तु कर्तृवाचित्वमिति शयान इत्यादौ कर्तर्यानो न स्यात् । सूत्रारम्भे तु कर्तर्यप्यानः सिध्यतीत्यर्थः । प्रत्याख्यानवाद्याह तत्रापीति । अनुदात्तङित इत्यादिभिः सूत्रैः कर्तर्यात्मनेपदविधानार्थैरानः कर्तरि शयान इत्यादौ भविष्यतीत्यर्थः । विप्रतिषेधाद्वेति । भावकर्मणोरित्यस्य तङवकाशः यत्र कृत्संज्ञाया अभावात्कर्तरि कृदिति न प्रवर्तते आस्यते पच्यत इति । कर्तरि कृदित्यस्य तृजादयोवकाशाः । आनस्य तूभयप्रसङ्गे कर्तरि कृदिति परत्वात्कर्तार्थो भविष्यतीत्यर्थः । आरम्भवाद्याह सर्वप्रसङ्ग इति । परस्मैपदिभ्यो धातुभ्य आनः कर्तरि प्राप्नोतीत्यर्थः । प्रत्याख्यानवाद्याह नैष दोष इति । अनुदात्तङित आत्मनेपदं नान्यस्मादिति नियमादानः कर्तरि परस्मैपदिभ्यो न भविष्यतीत्यर्थः । आरम्भवाद्याह यदीति । भावकर्मणोरात्मनेपदविधानात्तङोनुदात्तङितो न प्राप्नुवन्ति । अनुदात्तङित इत्यनेन आन एव धातुविशेषे नियम्यतइत्यर्थैकत्वादेकस्य वाक्यस्य विधिनियमावेकेन सूत्रेण न प्रकल्पेते इत्यर्थः । प्रत्याख्यानवाद्याह अस्तु तर्हीति । 'भावकर्मणोरित्यत्रेति ।

इति । विधिर्न प्रकल्पते इति । विधिश्च प्रक्लृप्तः । कथम् । भावकर्मणो-रित्यत्र अनुदात्तङित इत्येतदनुवर्तिष्यते । यद्यनुवर्तते । एवमप्यनुदात्तङित एव भावकर्मणोरात्मनेपदं प्राप्नोति । एवं तर्हि योगविभागः करिष्यते । अनुदात्त-ङित आत्मनेपदं भवति । ततो भावकर्मणोः । ततः कर्तरि । कर्तरि चात्मनेपदं भवति । अनुदात्तङित इत्येव । आस्ते । शेते । भावकर्मणोरिति निवृत्तम् । ततः कर्मव्यतिहारे । कर्तरीत्येवानुवर्तते । अनुदात्तङित इत्यपि निवृत्तम् । यद-प्युच्यते । यथा नेर्विश इत्येवमाद्यनुक्रमणं यदि नियमार्थं विधिर्न प्रकल्पते । अथ विध्यर्थमानस्य नियमो न प्राप्नोतीति । अस्तु विध्यर्थम् । ननु चोक्तमा-नस्य नियमो न प्राप्नोतीति । नैष दोषः । यथैवात्राप्राप्तास्तङो भवन्त्येवमानोपि भविष्यति । सर्वत्राप्रसङ्गस्तु । सर्वेषु च साधनेष्वानो न प्राप्नोति । विप्रतिषे-धाद्धानः कर्तरीति भावकर्मणोर्न स्यात् । कर्तर्येव स्यात् । इह पुनर्लग्रहणे क्रिय-माणे कर्तरि कृदित्येतदस्तु लः कर्मणि च भावे चाकर्मकेभ्य इति । लः कर्मणि च भावे चाकर्मकेभ्य इत्येतद्भविष्यति विप्रतिषेधेन । सर्वसङ्गस्तु । लादेशः सर्वे-षु साधनेषु प्राप्नोति । शतृक्वसू च भावकर्मणोरपि प्राप्नुतः । नैष दोषः । शेषात्परस्मैपदं कर्तरीत्येवं तौ कर्तारं ह्रियेते ॥

लस्य ॥ ७७ ॥ लादेशे सर्वप्रसङ्गोऽविशेषात् * । लादेशे सर्वस्य प्रसङ्गः । सर्वस्य लकारस्यादेशः प्राप्नोति । अस्यापि प्राप्नोति । लुनाति लभते । किं

---

अनुदात्तङित आत्मनेपदमित्यनेनैकेन वाक्येन आनस्य नियमः क्रियते । भावकर्मणो-रित्यत्र त्वनुवृत्त्या द्वितीयेन वाक्येन तङां विधिः क्रियतइत्यर्थः । एवमपीति । भावक-र्मणोरित्यस्यानुदात्तङित इत्यनेनैकवाक्यता सत्यामनुवृत्तौ स्यात् । ततश्चास्यते गुरुणा अतिशय्यते गुरुरित्यादौ आत्मनेपदं स्यात् । भूयते गम्यते शेते आस्ते इत्यादौ तु नैव स्यादित्यर्थः । यथैवात्रेति । अनुदात्तङित इत्यनेनानस्य नियमादप्राप्तिः । तङोपि भावकर्मणोर्विधीयमानाः निर्विशत इत्यादौ कर्तरि न प्राप्नुवन्ति । तत्राविशे-षान्नेर्विश इत्यादिभिः सूत्रैस्तङानाः कर्तरि विधास्यन्तइत्यर्थः । सर्वत्राप्रसङ्गस्त्विति । असत्यस्मिन् सूत्रे भवदुक्तेन विप्रतिषेधेनानः कर्तरि कृदिति कर्तर्येव स्यात् न तु भावकर्मणोः । ततश्च भूयमानं गम्यमानमित्यादिप्रयोगो न स्यादित्यर्थः । इह पुनरि-ति । यदि ल इति षष्ठी तदास्य तिङ्भावी लकारोवकाशः । आनभाविनस्तु लकारस्य परत्वादनेनार्थव्यवस्था । शेषादिति । कर्तर्येव परस्मैपदमित्येवं नियमात् शतृक्वसू भावकर्मणोर्न भविष्यत इति भावः । ल इत्यादेशापेक्षाषष्ठीनिर्देशपक्षे आम इति विधी-यमानस्य लुकोप्ययमर्थनिर्देशः । अभावस्याप्यादेशत्वात् । तथा च अचः परस्मिन्नि-त्यत्र लोपस्याप्यजादेशस्य स्थानिवद्भावः प्रदर्शितः । लुकोभावरूपत्वात्कथमर्थाभि-धानमिति चेत् । प्रतिज्ञापापितं क्विबादीनामिव प्रयोगेऽश्रवणेपि लुकोर्थवत्त्वमनुप्र-योगात्तु तदर्थाभिधानव्यक्तिरित्यदोषः ॥ ६६ ॥

कारणम्। अविशेषात्। न हि कश्चिद्विशेष उपादीयते। एवंजातीयस्य लकारस्यादेशो भवतीति। अनुपादीयमानं विशेषे सर्वप्रसङ्गः। अर्थवद्ग्रहणात्सिद्धम् *। अर्थवतो लकारस्य ग्रहणम्। न चैषोर्थवान्। अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु *। अर्थवद्ग्रहणात्सिद्धमिति चेत्तन्न। किं कारणम्। वर्णग्रहणमिदम्। न चैतद्वर्णग्रहणेषु भवत्यर्थवद्ग्रहणे नानर्थकस्येति। तस्माद्विशिष्टग्रहणम् *। तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम्। न कर्तव्यम्। धातोरिति वर्तते एवमपि शाला माला मल्ल इत्यत्रापि प्राप्नोति। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। एवमपि नन्दन इत्यत्रापि प्राप्नोति। इत्संज्ञात्र बाधिका भविष्यति। इहापि तर्हि बाधेत पचति पठतीति। इत्कार्याभावादत्रेत्संज्ञा न भविष्यति। इदमस्तीत्कार्यम्। लिति प्रत्ययात्पूर्वमुदात्तं भवति इत्येष स्वरो यथा स्यात्। लितीत्युच्यते न चात्र लितं पश्यामः। अथापि कथं चिद्वचनादनुवर्तनाद्वा इत्संज्ञकानादेशः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न लादेशेषु लिद् कृतं भवतीति। यदयं णलं लितं करोति। अथाप्युणादयो व्युत्पाद्यन्ते। एवमपि न दोषः। क्रियते विशिष्टग्रहणं लस्येति लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम् *। लादेशो वर्णविधेर्भवति पूर्वविप्रतिषेधेन। लादेशस्यावकाशः। पचतु पठतु। वर्णविधेरवकाशः। दध्यत्र मध्वत्र। इहोभयं प्राप्नोति। पचत्यत्र पठत्वत्रेति। लादेशो भवति पूर्वविप्रतिषेधेन। स

---

लस्य॥ अर्थवद्ग्रहणादिति लडादय एव भावाद्यर्थाभिधायिनः स्थानित्वेन गृह्यन्तइत्यर्थः। न वर्णग्रहणेष्विति। लस्येत्यत्र लकारेऽकार उच्चारणार्थः। ततश्च वर्णमात्रस्यायं निर्देशः। वर्णनिर्देशेषु विद्यमानाप्यर्थवत्ता शब्देन नाश्रिता वर्णरूपमात्रस्याश्रयणात्। तथा च यस्येति लोपोनर्थकस्यापि भवति दैवदत्तिरिति। तस्मादिति। भावाद्यर्थाभिधायिनो लस्येति वक्तव्यमित्यर्थः। धातोरिति वर्ततइति। विहितविशेषणं च धातुग्रहणमाश्रीयतइत्यग्निचिल्लभत इत्यत्रापि न भवति। शालेति। शालामलिभ्य औणादिको लन्प्रत्ययः। इत्संज्ञा प्नोति। तस्यां च सत्यां लोपे च कृते स्थान्यभावादलिवधित्वाच्च स्थानिवद्भावाभावादादेशो न भविष्यतीत्यर्थः। इहापीति। ततश्चात्राप्यादेशा न स्युरित्यर्थः। लितीत्युच्यतइति। ल इदस्येति बहुव्रीहिराश्रितः। अत्र च लस्य लोपे कृते न कश्चिल्लकार इत्संज्ञकः प्रत्ययोस्तीत्यर्थः। अथापीति। ल एवेल्लिदित्येवं तत्पुरुषो यद्याश्रीयेत तथापि लस्येति स्थानित्वेनाश्रयणात्सत्यामपि इत्संज्ञायां लोपो न क्रियते। अनुवर्तनाद्वेति। भावादीनामनुवृत्त्या भावकर्मकर्तृवाचिनो लस्यादेशः न च लोपे सति भावाद्यर्थाभिधायित्वं संभवतीत्यकृतलोपानामेव लकाराणामादेशाः करिष्यन्ते। ज्ञापकात्तु लित्स्वरो न भविष्यतीत्यर्थः। क्रियतइति। अनुनासिको लकारः स्थानित्वेनोपात्त इत्यर्थः। अथ वा लृ् अस्य लस्येत्ययं निर्देशः कृतः। अस्येति सर्वनाम्ना भा-

तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । उक्तं वा * । किमुक्तम् । लादेशो वर्णविधेरन्तरङ्ग इति ॥

**टित आत्मनेपदानां टेरे ॥ ७९ ॥** टित एत्वे आत्मनेपदेष्वानप्रतिषेधः * । टित एत्वे आत्मनेपदेष्वानस्य प्रतिषेधो वक्तव्यः । पचमानः । यजमानः । टित इत्येत्वं प्राप्नोति । उक्तं वा * किमुक्तम् । ज्ञापकं वा सानुबन्धकस्यादेशवचनमित्कार्याभावस्येति । नैतदस्त्युक्तम् । एवं किल तदुक्तं स्यात् । यद्येवं विज्ञायते टिद् आत्मनेपदं टिदात्मनेपदं टिदात्मनेपदानामिति । तच्च न । टितो लकारस्य यान्यात्मनेपदानीत्येवमेतद्विज्ञायते । अवश्यं चैतदेवं विज्ञेयम् । टित आत्मनेपदं टिदात्मनेपदं टिदात्मनेपदानामिति हि विज्ञायमाने अकुर्वितत्रापि प्रसज्येत । नैष टिद् । कस्तर्हि टिद् । स चावश्यं टित् कर्तव्यः । आदिर्मा भूदिति । कथमिटोदिति इटोदिति वक्ष्यामीति । तच्चावश्यं वक्तव्यम् । पर्यवपाद्यस्य मा भूत् । लविषीष्ट । इह तर्हि इषमूर्जमहमित आदीसाऽतो लोप इटि चेत्याकारलोपो न प्राप्नोति । तस्मा दृदेषः । आदिस्तर्हि कस्मान्न भवति । सप्तदशादेशाः स्थाने योगत्वं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमिति कृत्वा आदिर्न भविष्यति । पर्यवपाद्यस्य तर्हि कस्मान्न भवति । लविषीष्टेति । असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणइति । तद्युक्तं प्रकृतानामात्मनेपदानामेत्वं भवतीति ।

---

वाद्यर्थाभिधायी परामृश्यते पचत्वत्रेति । वाक्यस्य विभज्यान्वाख्यानं क्रियतइत्येवमुपन्यासः । लादेशो वर्णविधेरिति । विप्रतिषेधसूत्रे बहिरङ्गपरिभाषाया इदं प्रयोजनमित्यर्थः ।

टित आत्म ॥ यद्येवमिति । यदि टित इत्येकवचनं बहुवचनप्रसङ्गे व्यत्ययेन क्रियेतेत्यर्थः । अथ वा केचिट्टितामित्येव पठन्ति तदाश्रयेणैतदुक्तम् । आकुर्वीति । लङः स्थाने उत्तमैकवचनमिट् । पर्यवपाद्यस्येति । पर्यवपादो रूपान्तरापत्तिः तत्र साधुरागमः पर्यवपाद्यः । तत्र साधुरिति यत् । आदीति । दाञो लङ उत्तमैकवचनम् । शपः श्लुः, द्विर्वचनप्रसङ्गे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः । यदि टिदिट् स्यात्तदा आतो लोप इटि चेत्याकारलोपो न स्यात् । अत्र च छन्दस्युभयथेति सार्वधातुकत्वमिट एष्टव्यम् । आर्धधातुक इत्यालोपविधानात् । सप्तदशेति । लस्येत्येका षष्ठी सा यद्यवयवावयविसंबन्धे स्यात् तदा इट एवानुग्रहः स्यात् न तिबादीनाम् । तस्माद् भूयसां स्थान्यादेशसंबन्धस्य प्रयोजकत्वाल्लस्येति स्थानेयोगा षष्ठीत्यादेश एवेड् भवति न त्वागमः । असिद्धमिति । वलाद्यार्धधातुकापेक्षणादङ्गापेक्षत्वाच्च बहिरङ्ग इडागमः । इटोदित्यड्भावस्तु लिङ्संबन्धीडपेक्षणादन्तरङ्गः । तत्र कर्तव्ये आगमस्यासिद्धत्वादड्भावाभावः । प्रकृतानामिति । तिबादय इहानुवर्तन्ते तैरात्मनेपदानि विशेष्यन्ते । अथ वा प्रकरणस्य विशेषस्मृतिहेतुत्वात्प्रकृतान्येवा-

के च प्रकृताः। तादयः। आने मुग्ज्ञापकं त्वे त्वे टित्तङामिशिसीरिचः। डारौरसःसु टिद्‌टितः प्रकृते तद् गुणे कथम्॥

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः॥ ८२॥** णलः शित्करणं सर्वादेशार्थम् *। णल् शित्कर्त्तव्यः। किं प्रयोजनम्। सर्वादेशार्थं, शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत। उक्तं वा *। किमुक्तम्। अनित्त्वात् सिद्धमिति। णकारः क्रियते तस्य अनित्त्वात्सिद्धमिति। कथमेष परिहारो न्याय्यः। शकारमसि चोदितः। णकारं करिष्यामि शकारं न करिष्यामीति। णकारो वा। कोन्वत्र विशेषः अवश्यमत्र णकारो वृद्ध्यर्थः कर्तव्यः णितीति वृद्धिर्यथा स्यात्। नार्थो वृद्ध्यर्थेन णकारेण। णित्त्वे योगविभागः करिष्यते। इदमस्ति गोतो णित्। ततः अल्। अल् च णिद्भवति। ततः उत्तमो वेति। एवं तर्हि लकारः क्रियते। तस्य अनित्त्वात्सिद्धम्। एवमपि क एष परिहारो न्याय्यः। शकारमसि चोदितः। लकारं करिष्यामि। शकारं न करिष्यामीति। लकारो वा क्रियेत शकारो वा कोन्वत्र विशेषः। अयमस्ति विशेषः। अवश्यमत्र स्वरार्थो लकार इत्कर्तव्यः। लिति प्रत्ययात् पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात्। नैतदस्ति प्रयोजनम्। धातुस्वरे कृते द्विर्वचनं तत्रान्तर्यतोन्तोदात्तस्यान्तोदात्तआदेशो भविष्यति। कथं पुनरयमन्तोदात्तः स्यात्। यदैकाच्।

---

त्मनेपदानीहात्मनेपदशब्देनोच्यन्ते। ज्ञापकमाह आनेमुगिति। यद्येत्वमानस्य स्याद् आनयिमुगिति वक्तव्यं स्यादित्यर्थः। टित्तङामिति। टितः स्थाने ये तङः तेषामेत्वं न त्वानस्यापि। अथाध्येतेत्यादौ डारौरसामेत्वं कस्मान्न भवतीत्याह इशिसीरिच इति। लिटस्तझयोरेशिरेच् थासः से इत्येताभ्यां सूत्राभ्यां लाघवाय इश् सि इरिच् इत्येते आदेशा विधेयाः। एत्वस्यानेन सिद्धत्वात्। ज्ञापनाय तु सयादयो विहिता लादेशादेशानामेत्वाभावस्य। टिदृटित इति। अकुर्वीत्यत्र परिहारः। अटितो लङः स्थाने टिदिट् कृत इत्येत्वं न भवति। प्रकृते तदिति। तदेत्वं प्रकृते तङ्यात्मनेपदे भवति न त्वाने। गुणे कथमिति। श्लोकपूरणायैतदुक्तम्। एत ये इत्यत्र पचाविदम इत्यादुगुणे कृते कथमेत्वं न भवतीति चोद्यम्। परिहारस्तु वक्ष्यते। बहिरङ्ग आद्गुण इति॥७९॥

परस्मै॥ णल इति। क्व पुनरस्य शकारः क्रियते। यद्यादौ णकारस्य अनादित्वादित्संज्ञा न प्राप्नोति। मध्ये शस्येत्संज्ञाया अभावः। अन्ते तु लस्येत्संज्ञाया अप्रसङ्गः। एवं तर्हि लश्विभ्रातव्यः। लश्उत्तमो वेति करिष्यते। योगविभागश्चेति मन्यते अथ वा णल् शिदित्यतिदेशः कर्तव्यः। अक्रियमाणे हीति। नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादित्यर्थः। एतच्च प्राग्लादेशाद्धात्वधिकार इति पक्षमाश्रित्योच्यते। धात्वधिकारे तु सत्यादेः परस्येत्यादेः प्राप्नोति। धातुस्वर इति। प्रत्ययस्य पित्वादनुदात्तत्वाद् धातुस्वरः प्रवर्तते। यदैकाजिति। योनैकाच् जजागारेति तत्र

व्यपदेशिवद्भावेन । यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्तः । एवमाद्युदात्तोपि । तत्रान्तर्यत आद्युदात्तस्य आद्युदात्त आदेशः प्रसज्येत । सत्यमेवमेतत् । न त्विदं लक्षणमस्ति । धातोरादिरुदात्तो भवतीति । इदं पुनरस्ति । धातोरन्त उदात्तो भवतीति । सोयं लक्षणेनान्तोदात्तः तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति । एतदप्यादेशे नास्ति आदेशस्यान्त उदात्तो भवतीति प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य यथैवान्तोदात्त एवमाद्युदात्तापि । द्विः प्रयोगे खल्वपि द्विर्वचने उभयोरन्तोदात्तत्वं प्रसज्येत । अनुदात्तं पदमेकवर्जमिति नास्ति यौगपद्येन सम्भवः । पर्यायः प्रसज्येत । तस्मात्स्वरार्थो लकारः कर्तव्यः लकारः क्रियते । तस्यानित्त्वात्सिद्धम् । अकारस्य शित्करणं सर्वादेशार्थम् * । अकारः शित्कर्तव्यः । किं प्रयोजनम् । सर्वादेशार्थं, शित्सर्वस्येति सर्वादेशो यथा स्यात् अक्रियमाणे हि शकारे अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत । ननु च अकारस्य अकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेण शकारं सर्वादेशो भविष्यति । अस्त्यन्यदकारस्य अकारवचने प्रयोजनम् । किम् । अकारवचनं समसंख्यार्थम् *। संख्यातानुदेशो यथा स्यात् । तस्माच्छित्करणम् । तस्माच्छित्कर्तव्यः । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोयम् । अ अ एति । सोसौ अनेकाल् । अनेकाल् शित्सर्वस्येति सर्वादेशो भविष्यति ॥

लोटो लङ्वत् ॥८५॥ लङ्वदतिदेशे जुस्भावप्रतिषेधः । लङ्वदतिदेशे जुस्भावस्य प्रतिषेधो वक्तव्यः। यान्तु वान्तु । लङः शाकटायनस्यैति जुस्भावः प्राप्नोति । उत्ववचनात्सिद्धम् * । उत्वमत्र बाधकं भविष्यति । अनवकाशा हि विधयो

---

धातुस्वरे कृते शिष्टस्यानुदात्तत्वे प्रथमैकाचो द्विर्वचनं सर्वानुदात्तं सिध्यतीत्येकाजेव धातुर्निरूप्यते व्यपदेशिवद्भावेनेति । आद्यन्तवदेकस्मिन्नित्यनेनेत्यर्थः । यथैवेति । कार्यातिदेशं मन्यते । नत्विदमिति । शास्त्रातिदेश इति भावः । एतदपीति । स्थानिवदिति कार्यातिदेशः प्राधान्यादिति भावः । प्रकृतित इति । स्थानिन इत्यर्थः । द्विः प्रयोग इति । षाष्ठिकं द्विर्वचनं द्विः प्रयोगः न तु स्थाने द्विर्वचनमिति निर्णयः । लकार इति । ततश्च ल उत्तमो वेति कर्तव्यं योगविभागश्च कार्यः । अकारस्येति । यस्य स्थाने विधीयते तस्येत्यर्थः । एतदपि प्राग्लादेशाद्धात्वधिकार इति पक्षाश्रयेणोच्यते धात्वधिकारे ह्यादेः परस्यादेरकारे सति रूपं सिद्धम् । अ अ इति । अकारद्वयसमुदायस्य आदेशत्वमित्यर्थः ॥ ८१ ॥

लोटो ल ॥ लोट इत्युपमेये षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते तेन लङो यत्कार्यं तल्लोटोतिदिश्यते न तु लङि यत्कार्यं तदित्यडाटौ लोटि न भवतः । उत्ववचनादिति । नाप्राप्ते लङ्वद्भावे उत्वमारब्धं तस्य बाधकमित्यर्थः । अत्रापीति । लङ्वद्भावादित्यत्र्वेत्यनेनेत्यर्थः ॥ ८५ ॥

बाधका भवन्ति । सावकाशं चोत्वम् । कोवकाशः पचतु पठतु । अत्रापीकारलोपः प्राप्नोति । तद्यथैवोत्वमीकारलोपं बाधते । एवं जुस्भावमपि बाधेत । न बाधते । किं कारणम् । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते इकारलोपे उत्वमारभ्यते । जुस्भावे पुनः प्राप्ते चाप्राप्ते च । अथ वा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवमिदमुत्वमिकारलोपं बाधते जुस्भावं न बाधते । एवं तर्हि वक्ष्यति तत्र लङ्ग्रहणस्य प्रयोजनम् । लङेव यो लङ् तत्र यथा स्यात् । लङ्वद्भावेन यो लङ् तत्र मा भूदिति ॥

सेर्ह्यपिच्च ॥ ८७ ॥ मेर्निः ॥ ८९ ॥ हिन्योरुत्वप्रतिषेधः । हिन्योरुत्वस्य प्रतिषेधो वक्तव्यः । लुनीहि । लुनानि । एरुरित्युत्वं प्राप्नोति । न वोच्चारणसामर्थ्यात् *। न वा वक्तव्यः । किं कारणम् । उच्चारणसामर्थ्यात् । उच्चारणसामर्थ्यादत्रोत्वं न भविष्यति। अलघीयश्चैव हि इकारोच्चारणमुकारोच्चारणात्। इकारं चोच्चारयति । उकारं च वोच्चारयति । तस्यैतत्प्रयोजनमुत्वं मा भूदिति। सेर्ह्यपिच्च ॥

एत ऐ ॥ ८३ ॥ एत ऐत्वे आद्गुणप्रतिषेधः * । एत ऐत्वे आद्गुणस्य प्रतिषेधो वक्तव्यः। पचावेदम् । पचामेदम्। आद्गुणे कृते एत ऐ इत्यैत्वं प्राप्नोति। न वा बहिरङ्गलक्षणत्वात् *। न वा वक्तव्यः। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षण आद्गुणः । अन्तरङ्गमैत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । एत ऐ॥

लिङः सीयुट् ॥ १०२ ॥ यासुडादेः सीयुट् प्रतिषेधः * । यासुडादेः सीयुटः प्रतिषेधो वक्तव्यः । चिनुयुः । सुनुयुः । लिङः सीयुडिति सीयुट् प्राप्नोति । न वा वाक्यापकर्षात्* । न वा वक्तव्यः । किं कारणम् । वाक्यापकर्षात् । वाक्यापकर्षाद् यासुट् सीयुटं बाधिष्यते । सुट् तिथोस्त्वपकर्षविज्ञानम् * । सुटोपीदानीं तिथोरपकर्षो विज्ञायेत । कृषीष्ट कृषीष्ठाः । हृषीष्ट । हृषी

---

सेर्ह्य ॥ अलघीय इति । उकारे सति प्रक्रियायां लाघवं भवति । इकारे तु सति लक्षणान्तरेणोत्वे प्रक्रियागौरवं स्यात् । न चेकारोच्चारणे लाघवं भवति । तस्मादिकारोच्चारणमुत्वस्य बाधकमेवेत्यर्थः ॥ ८७ ॥ ८९ ॥

लिङ । यथैव कृषीष्ट कृषीष्ठा इत्येवमादौ सुटि कृते विरोधाभावाद्बाध्यबाधकभावाभावात्सीयुड् भवति । एवं यासुट्यपि कृते तस्य लिङ्भक्तत्वात्तदादेः सीयुट्प्रसङ्ग इति मत्वाह यासुडादेरिति । न वेति । लिङः सीयुडित्यस्य वाक्यस्य यासुड्विधिवाक्ये नापकर्षो बाधनमित्यर्थः । विनापि विरोधेन सामान्यविधिर्विशेषविधिना बाध्यते तक्रकौण्डिन्यवदिति भावः । अनादेश्चेति । तिथोरिति सप्तमीं मन्यते ततस्तदादिविधिसद्भावात्तकारथकारादेरेव लिङादेशस्य सुट् स्यात् कृषीष्ठा इत्यादावित्ति

ष्ठाः । अनादेशे च सुड्वचनम् * । अनादेशे च सुड्वक्तव्यः । कृपीयास्तां कृपीयास्थाम् । तकारथकारादेर्लिङ इति सुण् न प्राप्नोति । न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् * । न वा वक्तव्यम् । किं कारणम् । तिथोः प्रधानभावात् । तिथावत्र प्रधानं तयोर्विशेषणं लिङ्ग्रहणम् । नैवं विज्ञायते । तकारथकारादेः लिङ इति । कथं तर्हि तकारथकारयोः सुड् भवति । तौ चेल्लिङ इति । लिङः सीयुट् ॥

यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥ किमर्थं यासुटो ङित्त्वमुच्यते । यासुटो ङिद्वचनं पिदर्थम् * । पिति वचनानि प्रयोजयन्ति । अथ किमर्थमुदात्तवचनं क्रियते । उदात्तवचनं च * । किम् । पिदर्थमेव । आगमानुदात्तार्थं वा * । अथ वा एतज्ज्ञापयत्याचार्यः आगमा अनुदात्ता भवन्तीति । असत्यन्यस्मिन् प्रयोजने ज्ञापकं भवति । उक्तं चैतद्यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति । शक्यमनेन वक्तुम् । यासुट् परस्मैपदेषु भवति अपिच्च लिङ् भवतीति । सोयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नामारभते तज्ज्ञापयत्याचार्यः आगमा अनुदात्ता भवन्तीति । यासुट् परस्मैपदेषूदात्तो ङिच्च ॥

आतः ॥ ११० ॥ किमिदं जुस्याकारग्रहणं नियमार्थम् । आहो स्वित्प्रापकम् । कथं च नियमार्थं स्यात् । कथं वा प्रापकम् । यदि सिज्ग्रहणमनुवर्तते । ततो नियमार्थम् । अथ निवृत्तम् । ततः प्रापकम् । कश्चात्र विशेषः । जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणम् * । जुसि आकारग्रहणं नियमार्थमिति चेत् सिज्लुग्ग्रहणं कर्तव्यम् । आतः सिज्लुगन्तादिति वक्तव्यम् । इह मा भूत् । अकार्षुः । अहार्षुः । अस्तु तर्हि प्रापकम् । प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधः * । प्रापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः । अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । एवकारकरणं च * । एवकारकरणं च कर्तव्यम् । लङः शाकटायनस्यैवेति । नियमार्थे पुनः सति नार्थ एवकारकरणेन । ननु च प्रापकेपि सति सिद्धे विधिरारभ्यमाणोन्तरेणैवकारं

---

भावः । नवेति । चोद्यद्वयमपि परिहृतम् । सुटस्तकारथकारावागमिनौ सीयुटस्तु समुदाय इति कार्यिभेदाद् बाध्यबाधकभावाभावः । तिथोरिति च षष्ठीनिर्देशात्तदादिविध्यभावादनाद्योरपि तिथोः सुड् भवति ॥१०२॥

आत. ॥ अकार्षुरिति । अत्र नाकारान्तात्सिज्विहितः नापि परः रेफेण व्यवधानादिति जुस्न स्यात् । ननु यद्यकार्षुरित्यादावपि नियमः स्यात् । तदा पूर्वसूत्रेण सिजन्तादिति जुस्विधानमनवकाशं स्यात् । नैष दोषः । अयुरस्थुरित्यादेरवकाशस्य संभवाद्विषयविज्जुस्विधानमनवकाशं स्यात् । नैष दोषः।

नियमार्थो भविष्यति । इष्टतोवधारणार्थस्तर्ह्येवकारः कर्तव्यः । यथैवं विज्ञायते लङः शाकटायनस्यैवेति । मैवं विज्ञायि लङ एव शाकटायनस्येति । किं च स्यात् । लुङः शाकटायनस्य न स्यात् । अदुः । अयुः । अधुः । अस्थुः । लङ्ग्रहणं च * । लङ्ग्रहणं च कर्तव्यम् । लङः शाकटायनस्यैवेति । नियमार्थे पुनः सति नार्थो लङ्ग्रहणेन । आतो ङित इति वर्तते । नं चान्य आकारादनन्तरो ङिदस्ति अन्यदतो लङः । अस्तु तर्हि नियमार्थम् । ननु चोक्तं जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणमिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यो द्वाभ्यामनन्तरः । आतश्च सिचश्च । अथ तदेवकारकरणं नैव कर्तव्यम् । कर्तव्यं च । किं प्रयोजनम् । उत्तरार्थम् । लिट् च लिङाशिषि आर्धधातुकमेव यथा स्यात् । इतरथा हि वचनादार्धधातुकसंज्ञा स्यात् तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा । अथ तल्लङ्ग्रहणं नैव कर्तव्यम् । कर्तव्यं च । किं प्रयोजनम् । लङेव यो लङ् तत्र यथा स्यात् । लङ्वद्भावेन यो लङ् तत्र मा भूदिति ॥

आर्धधातुकं शेषः ॥ ११४ ॥ आर्धधातुकसंज्ञायां धातुग्रहणम् * । आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् इह मा भूत् । वृक्षत्वं वृक्षतेति । क्रियमाणे चापि धातुग्रहणे स्वादिप्रतिषेधः * । स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत् लूभ्यां लूभिरिति । अनुक्रान्तापेक्षं शेषग्रहणम् । एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति । तस्माद्धातुग्रहणं

---

भागश्च न लभ्यते । यतोऽकार्षुरिति जुस् भवति । अभूवन्नित्यत्र तु न भवति । यद्येवं पूर्वसूत्रे सिज्ग्रहणमकृत्वा आतः सिच इति वक्तव्यं स्यात् । नैतदस्ति । उत्तरत्रात इत्यस्यानुवृत्त्यर्थो योगविभागः स्यात् । अथ वा योगविभागोऽस्य नियमार्थत्वाय स्यात् । अस्य हि नियमार्थत्वे उत्तरत्र लङ्ग्रहणं न कर्तव्यं भवति । एवकारकरणं चेति । यदा सिज्ग्रहणमिह नानुवर्तते तदानेनैव लङादेशस्य झेरात उत्तरस्यायुरित्यादौ जुसि सिद्धे लङःशाकटायनस्यैवेति नियमार्थ एवकारः कर्तव्यः । अन्येषां मतेन अयानित्यादि यथा स्यात् । यदा तु सिजग्रहणानुवृत्त्या नियमार्थमिदं तदा लङःशाकटायनस्येत्येव पक्षे विध्यर्थं कर्तव्यं नार्थ एवकारेणेत्यर्थः। मैवं विज्ञायीति। लङ एव शाकटायनस्येति विज्ञायमाने लुङः शाकटायनस्य न स्यात् । ततश्च लुङि विकल्पः प्रसज्येत । लङि तु नित्यः स्यादित्यर्थः । तुल्यजातीयस्येति । सिज्लुकं विना आतः सिचश्चानन्तरो झिन्न भवतीति सिज्लुगन्तस्याकारान्तस्येह ग्रहणमिति नियमेन सिज्लुगन्तमेव निवर्त्यते । उत्तरार्थमिति । अन्यथैकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्य दृष्टत्वाल्लिङि डादेशानां सार्वधातुकसंज्ञापि स्यात् । ततस्तन्निमित्तविकरणप्रसङ्गः। आर्धधातुकसंज्ञा चेडाद्यर्था स्यात् ।

आर्धधा ॥ अनुक्रान्तापेक्षमिति । ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्धधातुकसंज्ञा

कर्तव्यम् । न कर्तव्यम् । आतृतीयपरिसमाप्तेर्धात्वधिकारः प्रकृतोनुवर्तते । क्व प्रकृतः । धातोरेकाचो हलादेरिति । एवमपि श्रीकाम्यती भूकाम्यतीति प्राप्नोति । तद्विधानाद्वा सिद्धम् । विहितविशेषणं धातुग्रहणं धातोर्यो विहित इति । धातोरेष विहितः संकीर्षे धातोरित्येवं यो विहित इति ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादश्चाध्यायश्च समाप्तस्तृतीयः ॥

---

भवन्ति न त्वनुक्रम्यमाना इत्यर्थः । धातोरिति । धातोरित्येवं धातुशब्दमुच्चार्य विहिता इत्यर्थः ११४ । इति श्रीमन्महामहोपाध्यायश्रीमज्जैयटपुत्र श्रीमत्कैयटकृते महाभाष्यप्रदीपे तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादोऽध्यायश्च समाप्तः तृतीयः ।



श्रीगणेशाय नमः ।

# अथ प्रदीपसहिते व्याकरणमहाभाष्ये चतुर्थोऽध्यायः ।

ङ्याप्प्रातिपदिकात् ॥ १ ॥ ङ्याप्प्रातिपदिकग्रहणं किमर्थम् । ङ्याप्प्रातिपदिकात्स्वादयो यथा स्युः । धातोर्मा भूवन्निति । नैतदस्ति प्रयोजनम् । धातोस्तव्यदादयो विधीयन्ते ते ऽपवादत्वाद्बाधका भविष्यन्ति । तिङन्तात्तर्हि मा भूवन्निति । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । ते चात्र तिङा उक्ता एकत्वादय इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति ॥ टाबादयस्तर्हि तिङन्तान्मा भूवन्निति । स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्रीत्वेन

---

श्रीगणेशाय नमः ॥ ङ्याप्प्रातिपदिकात् ॥ ङ्याप्प्रातिपदिकग्रहणं किमर्थमिति । परश्चेति वचनात्परे भवन्तो वक्ष्यमाणाः प्रत्ययाः प्रत्ययार्थसंबन्धयोग्यार्थाभिधायिनीं ङ्याप्प्रातिपदिकलक्षणामेव प्रकृतिमाक्षेप्स्यन्ति सति च पञ्चमीनिर्देशे परश्चेति प्रत्याख्यातमसति त्विह पञ्चमीनिर्देशे वक्ष्यमाणप्रत्ययपरत्वप्रतिपादनपरत्वान्नास्ति प्रत्याख्यानम् । सति वा प्रत्याख्याने प्रत्ययद्योत्यवाच्यार्थसंबन्धयर्थाभिधायिप्रकृत्याक्षेपः सिद्ध इति प्रश्नः । धातोर्मा भूवन्निति । असतीह प्रकृतिनिर्देशे धात्वधिकाराद्धातोरेव स्युः । वासरूपविधिश्च स्यात् । अथ वा प्रत्ययपरत्वेन प्रकृतिमात्राक्षेपे धातोरपि स्युः । तत्र यथा कर्तृकर्मणोर्लकार उत्पद्यते साधनाश्रयसंख्यायां च तिङामुत्पत्तिः कर्त्रादिषु तृच्तव्यादीनां च तथा स्वादयोपि स्युरिति भावः । धातोरिति । धातुग्रहणं निवृत्तम् । तत्र प्रकृतिमात्राद्विधीयमानाः स्वादय उत्सर्गास्तव्यदादयस्तु प्रकृतिविशेषाश्रयेण विधानादपवादा इति भावः । तिङन्तादिति । कर्मादयः स्वादीनामर्थाः । तत्र यथा पुत्रीयशब्दादन्तर्भूतकर्मक्रियावाचिनः कर्तरि लकार उत्पद्यते तथा पचतिशब्दात्कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युः यद्वैकत्वादिष्वपि विभक्त्यर्थेषु यथैको द्वौ बहव इति प्रकृत्यभिहितेष्वपि भवन्त्येवं तिङाभिहितेष्वपि स्युरिति भावः । एकत्वादिष्विति । संख्या विभक्त्यर्थः सा च तिङैवाभिहितेत्युक्तार्थत्वात् स्वादयो न भवन्त्येकादिभ्यस्तु वचनग्रहणाद्यत्नात्संख्यावाचिभ्योपि प्रथमा भवति न च पचतिशब्दात्कर्त्रभिधायिनः कर्मादिषु द्वितीयादीनामुत्पत्तिर्युक्ता । न ह्येकक्रियापेक्षोभिन्नसाधनाभिधायिनोरेकस्मिन् पदेऽनुसहायभावो युक्तः । पुत्रीयशब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रियावाचीति ततः कर्तरि लकारोत्पत्तिरविरुद्धा । अनभिहिताधिकाराच्च तिङभिहिते साधने स्वाद्यनुत्पत्तिः । टाबादय इति । यथा साधनाश्रयसंख्याभिधायित्वं तिङां तथा तद्गतलिङ्गाभिधायित्वमपि स्यादिति भावः । न च तिङन्तस्येति । क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चासत्वभूतत्वात्स-

योगोऽस्ति। अणादयस्तर्हि तिङन्तान्मा भूवन्निति। अपत्यादिष्वर्थेष्वणादयो विधीयन्ते। न च तिङन्तस्यापत्यादिभिर्योगोऽस्ति। अथापि कथं चिद्योगः स्यात्। एवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न तिङन्तादणादयो भवन्तीति। यदयं क्व चित्तद्धितविधौ तिङ्ग्रहणं करोति। अतिशायने तमबिष्ठनौ, तिङश्चेति। अत उत्तरं पठति ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् *। ङ्याप्प्रातिपदिकग्रहणं क्रियते। अङ्गभपदसंज्ञार्थम्। अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरिति। क्व पुनरिहाङ्गभपदसंज्ञार्थेन ङ्याप्प्रातिपदिकग्रहणेनार्थः। टाबादिषु। नैतदस्ति प्रयोजनम्। ग्रहणवद्भ्यष्टाबादयो विधीयन्ते उगितो ङीब्भवति। अतष्टाब्भवतीति। यत्तच्छब्दरूपं गृह्यते। तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति। अथापि कश्चिदग्रहणः। एवमपि न दोषः। स्त्रियां

---

स्वधर्मेण लिङ्गेनायोगः। न च द्रव्यधर्मलिङ्गग्रहणयोग्यत्वनियतत्वाच्छब्दशक्तीनामिति भावः। तदुक्तं हरिणा। एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया। भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥ तस्मादवस्थितं प्यर्थे कस्य चित्प्रतिबध्यते। शब्दस्य शक्तिर्नत्वेष शास्त्रेण्वाख्यायते विधिरिति॥ शोभनं पचतीत्यादावुक्तक्रियाविशेषणस्य नपुंसकत्वं न तु क्रियायाः। पचतिरूपमित्यादौ तु रूपबाद्यन्तार्थस्य क्रियायाः शब्दशक्तिस्वाभाव्यादेव नपुंसकत्वम्। नानारूपा हि शब्दानां शक्तयो न सामान्यतो दृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते। अनेनैव न्यायेन धातोष्टाबाद्यनुत्पत्तिर्व्याख्येया। अणादय इति। यथेत्र गर्गस्यापत्यमित्यपत्यवत्संबन्धादिसंभवः। एवं पचति यस्तस्यापत्यमिति सर्वनामप्रत्यवमृष्टतिङन्ताश्रयाधारसंबन्धसंभव इति भावः। ननु षष्ठ्यन्तादपत्ये प्रत्ययो विधीयते सर्वनाम्नश्चात्र षष्ठ्यन्तत्वं न तिङन्तस्य। नैष दोषः। गर्गस्यायमित्यत्रापि वाक्यगोचरैव षष्ठी संबन्धप्रदर्शनायोपादीयते। प्रत्ययस्तु प्रातिपदिकादेवोत्पद्यते। लुग्विधानद्वारेण ह्याचार्यः स्वाभाविकीं प्रत्ययस्यानुत्पत्तिमाचष्टे। तस्येति तु षष्ठीनिर्देशः सति संबन्धे प्रत्ययविधानार्थो न तु षष्ठ्यन्तात्प्रत्ययोत्पत्त्यर्थः। न चेति। क्रियाप्रधानत्वादाख्यातस्य तस्याश्चासत्त्वभूतत्वादपत्यादिभिर्योगाभावः॥ साधनस्यापि क्रियां प्रति गुणभावादपत्यादिभिर्योगो नास्ति शब्दान्तरपरामृष्टस्य साधनस्यापत्यादियोगसंभवेपि तिङन्तप्रतिपाद्यस्य साधनस्यापत्यादिभिर्योगाभावः। नहि यथा पाचकस्यापत्यमिति संबन्धप्रतिपत्तिरेवं पचत्यपत्यमिति। अथापीति। सर्वनामप्रत्यवमृष्टस्यार्थस्यापत्यादियोगसंभवादिति भावः। धातोरप्यणाद्युत्पत्तिर्धात्वर्थस्यापत्यादियोगाभावादेव प्रतिक्षिप्ता वाक्यार्थस्याप्यसत्त्वभूतत्वाच्छक्तिलिङ्गापत्यादियोगाभावाद्वक्ष्यमाणप्रत्ययानुत्पत्तेरभिधानीया। भाष्यकारेण तु न्यायस्योक्तत्वात् पृथगुपन्यासो न कृतः। अङ्गभपदसंज्ञार्थमिति। यस्मात्प्रत्ययविधिरित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनाश्रयणं तस्याङ्गसंज्ञा। भपदसंज्ञे अप्युत्तरत्र यस्मात्प्रत्ययविधिरित्यस्यानुवर्तनात्तस्यैवेति भावः। भाष्यकार एतत्प्रयोजनं निराकर्तुमाह क्व पुनरिति। ग्रहणवद्भ्य इति। ग्रहणमुपादानं तच्च क्वचित्साक्षात् यथाजाद्यतष्टाबित्यजादीनां कचित् संज्ञाद्वारेण यथात्रैवाकारेणादन्तानाम्। क्वचिदनुबन्ध-

टाबादयो विधीयन्ते । यत्तच्छब्दरूपं स्त्रियां वर्तते । तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । अणादिषु तर्हि । अणादयोपि ग्रहणवद्भ्यो विधीयन्ते गर्गादिभ्यो यञ्, नडादिभ्यः फगिति । यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । अथापि कश्चिदग्रहणः । एवमपि न दोषः । अपत्यादिष्वर्थेष्वणादयो विधीयन्ते । यत्तच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । स्वार्थिकेषु तर्हि । स्वार्थिका अपि ग्रहणवद्भ्यो विधीयन्ते । यावादिभ्यः कन्, प्रज्ञादिभ्योऽणिति । यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । यस्तर्ह्यग्रहणः । शुक्लतमः शुक्लतरः कृष्णतमः कृष्णतर इति । अत्रापि न यावच्छुक्लः तावच्छुक्लतरः प्रकृष्टः शुक्लः शुक्लतरः । यत्तच्छब्दरूपं प्रकृष्टे वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । स्वादिषु तर्हि । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । यत्तच्छब्दरूपमेकत्वादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति । कथं पुनरिहोच्यमानाः स्वादयएकत्वादिष्वर्थेषु शक्या विज्ञातुं, मेकवाक्यत्वात् । एकं वाक्यं तच्चेदं च । यद्येकं वाक्यं तच्चेदं च किमर्थं नानादेशस्थं क्रियते । कौशलमात्रमेतदाचार्यो दर्शयति । यदेकं वाक्यं सन्नानादेशस्थं करोति । अन्यदपि किंचित्संग्रहीष्यामीति । यच्छयोश्च लुगर्थम् * । यच्छयोस्तर्हि लुगर्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । कंसीयपरशव्ययशब्दयोर्यञञौ लुक्चेति ङ्याप्प्रातिपदिकात्परस्य

---

देशोपलक्षितसंज्ञानिर्देशेन, यथोगितश्चेति । अत्र स्वत्वर्थाभिधायिशब्द आक्षिप्तो ऽकारेणोगिता च विशेष्यते । अथागीति । सामर्थ्याच्चितस्याप्युपादानमस्त्येव । अभ्युपगम्यवादेन तु दर्शयति । वयसि प्रथम इत्यादौ सामर्थ्याक्षिप्ता प्रकृतिरथ त्वत्राप्यत इत्यनुवर्तनाद्वर्णग्रहणे च सर्वत्र तदन्तविधिसंभवादकारान्तस्य ग्रहणं तदा नास्ति कश्चिदग्रहणष्टाबादिः । यत्तच्छब्दरूपमपत्यादिष्वति । परार्थाभिधानं वृत्तिरिति प्रकृतिरप्यपत्यादिषु वर्तते । शुक्लतर इति । न ह्यत्र शब्देन प्रकृतिरुपात्तेति भावः । न यावदिति । यावत्तावच्छब्दौ निपातौ पर्यायतां द्योतयतः । स्वादिषु तर्हीति । प्रकरणोत्कर्षाद्बहुषु बहुवचनमित्यादेः स्वादिविधिवाक्यस्य च भिन्नवाक्यतां मन्यते । एकत्वादिष्विति । आकाङ्क्षायोग्यतावशाद्भिन्नप्रकरणपठितानामप्येकवाक्यत्वमिति भावः । तत्र त्रिके प्रातिपदिकार्थे चतुष्केपि पञ्च स्वादय एकत्वादीनां वाचका पञ्चके तु पक्षे चतुष्के च द्योतकाः । तत्रैकत्वादिषु द्योतका वाचका वा विधीयन्त इत्यर्थः । यत्तदिति । द्योतकपक्षे ऽयमर्थः । एकत्वादिषु यद्वर्तते तस्मात् स्वादय एकत्वादीनां द्योतका उत्पद्यन्ते । वाचकपक्षे त्वयमर्थः । एकत्वादिषु स्वादिवाच्येष्वाधेयेषु यच्छब्दरूपं तदाधारार्थवाचि तस्मात् स्वादय एकत्वादीनां वाचका उत्पद्यन्ते । अन्यदपीति । विधिविवाक्येनापि सहैकवाक्यत्वं यथा स्यादित्येवमर्थमित्यर्थः । अङ्गानां हि प्रधानसंनिधावुपदेशादीनां प्रकरणोत्कर्षेणोपदेशः सर्वप्रधानसंबन्धार्थं । यच्छ-

लुग्यथा स्यात् । आक्रियमाणे हि ङ्याप्प्रातिपदिकग्रहणे प्रकृतेरपि लुक् प्रसज्येत । एतदपि नास्ति प्रयोजनम् । यथापरिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति प्रत्ययस्य भविष्यति । एवमप्युकारसकारयोः प्रसज्येत । कमेः सः कंसः । परान् शृणातीति परशुरिति उणादयोऽव्युत्पन्नानि प्रातिपदिकानि । वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम् * । वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । वृद्धात्, अवृद्धात्, अवर्णान्तात्, अनुदात्तादेः, द्व्यच इति, एतानि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरिति । अथाक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः । समर्थविशेषणानि । तत्र को दोषः । उदीचां वृद्धादगोत्रात् । इह च प्रसज्येत । ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । इह च न स्यात् । ज्ञयोर्ब्राह्मण्योरपत्यमिति । एतद्धि समर्थमवृद्धम् । वृद्ध । अवृद्ध, प्राचामवृद्धात्फिन्बहुलम् । इह च प्रसज्येत । ज्ञयोर्ब्राह्मण्योरपत्यमिति । एतद्धि समर्थमवृद्धम् । इह च न स्यात् । ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । अवृद्ध । अवर्ण, अत इञ्भवति । इहैव स्यात् । दक्षस्यापत्यं दाक्षिरिति । एतद्धि समर्थमकारान्तम् । इह न स्यात् । दक्षयोरपत्यं दक्षाणामपत्यमिति । एतद्धि समर्थमनवर्णान्तम् । अवर्ण । स्वर, अनुदात्तादेरञ्भवति । इह च प्रसज्येत । वाचो विकारस्त्वचो

---

योऽस्त्वचेति । वार्तिककारस्य समुच्चयार्थश्चशब्दो भाष्यकारेण तु पूर्वप्रयोजनस्य दूषितत्वात्तदर्थे चशब्दो व्याख्यातः । प्रकृतेरपीति । यच्छयोर्या प्रकृतिः कंसशब्दः परशुशब्दश्च तदवयवस्यापि प्रत्ययस्येत्यर्थः । इतरश्च प्रकृतेरिति स्थानषष्ठीं मत्वाह एतदपीति । इतरः पूर्वमेवार्थं स्पष्टीकरोति एवमपीति । उणादय इति । अतः कृकमिकंसेति कमिग्रहणेनैव कंसग्रहणे सिद्धे कंसशब्दोपादानं ज्ञापकं क्व चिदेषां व्युत्पत्तिकार्यं न भवतीति । यञञोस्तु विधानसामर्थ्याल्लुङ् भवतीति यच्छयोरेव भविष्यतीत्यर्थः । वृद्धावृद्धेति । अत्रापि वार्तिककारस्य चशब्दः समुच्चये भाष्यकारस्य तु तदर्थः । वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तस्मिन् वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरित्यर्थः । अथेति । प्रत्ययार्थसंबन्धयोग्यार्थाभिधायित्वाद् ङ्याप्प्रातिपदिकस्यैव विशेषणानि भविष्यन्तीति प्रश्नः । समर्थविशेषणानीति । समर्थानां प्रथमादित्यधिकाराद्विभक्तिमन्तरेण सामर्थ्यानवगमाद्विभक्त्यन्तस्यैव विशेषणानि स्युरित्यर्थः । ङ्याप्प्रातिपदिकग्रहणे तु सति तदुपादानसामर्थ्यात्तद्विशेषणानि वृद्धादीनि भवन्ति । ज्ञानामिति । ननु वृत्तावभेदैकत्वसंख्योपजननान्नास्ति द्विवचनबहुवचनान्तात्प्रत्ययः । नैष दोषः । क्व चिदादेशादिवशात्संख्याविशेषोऽपि प्रतीयते । यथा तावको मामक इति । एवमिहापि फिञ् विधीयमानो बहुवचनमन्तरेण वृद्धत्वाभावाद्बहुत्वं गमयेत् । प्रकरणादिवशाद्वा । तदुक्तम् । भेदः संख्याविशेषो वा व्याख्या-

विकार इति । एतद्धि समर्थमनुदात्तादि । इह च न स्यात् । सर्वेषां विकार-इति । एतद्धि समर्थमुदात्तादि । स्वर । द्व्यज्लक्षण, द्व्यचष्ठन्निति । इह च प्रसज्येत । वाचा तरति त्वचा तरतीति । एतद्धि समर्थं द्व्यच् । इह च न स्यात् घटेन तरतीति । एतद्धि समर्थमद्व्यच् । अस्ति पुनः समर्थविशेषणे सति किं चिदिष्टं संगृहीतं भवति । आहो स्विद्दोषान्तमेव । अस्तीत्याह । किम् । साम्ना तरति वेम्ना तरतीति । एतद्धि समर्थमपि द्व्यच् ङ्याप्प्रातिपदिक-मपि । अथ ङ्याब्ग्रहणं किमर्थम् । न प्रातिपदिकादित्येव सिद्धम् । न सिध्यति । अप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति । यद्येष ङ्याब्ग्रहणे हेतुः । त्यूङ्ग्रहणमपि कर्तव्यम् । तत्रापि हि प्रत्ययौ । तिग्रहणे तावद्वार्तम् । तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति । ऊङ्ग्रहणे चापि वार्तम् । उवर्णान्ताद्दूङ्विधीयते तत्रैकादेशः । एकादेशे कृते ऽन्तादिवद्भावात्प्रातिपदिकसं-ज्ञा भविष्यति । यद्येष ऊङो ऽग्रहणे हेतुः । आब्ग्रहणमपि न कर्तव्यम् । आबपि ह्यकारान्ताद्विधीयते । तत्रैकादेशः । एकादेशे कृतेन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति । यस्तर्ह्यनकारान्तात् क्रुञ्चा उष्णिहा देवविशेति । अत्राप्यकारान्ताद् वृत्तिर्लक्ष्यते । क्रुञ्चानालभेत । उष्णिहककुभौ देवविशं च मनुष्यविशं चेति । इह तावदुष्णिहककुभाविति । आप एवौत्तरपदिकं ह्रस्वत्वम् । इह खल्वपि देव-विशं च मनुष्यविशं चेति । नास्ति विशेषः । अकारान्तादम उत्पत्तौ सत्यां व्य-ञ्जनान्ताद्वेति । यत्तावदुच्यते । इह तावदुष्णिहककुभावित्याप एवैतदौत्तरपदिकं ह्रस्वत्वमिति । संज्ञाछन्दसोरित्येवं तत् । नैषा संज्ञा, नापीदं छन्दः । यदप्युच्यते इह खल्वपि देवविशं च मनुष्यविशं च मनुष्यविशं चेति । नास्ति विशेषः । अ-कारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति । स्वरे विशेषः । यद्यत्र व्यञ्जना-न्तादुत्पत्तिः स्याद् देवविशमित्येवं स्वरः प्रसज्येत । देवविशमिति चेष्यते । त-

---

तो वृत्तिवाक्ययोः । सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेदिति । वाचो विकार इति। सावेकाच इति । विभक्तेरुदात्तत्वात्पदमेतदनुदात्तादि । एतच्चोदाहरणादिक्प्रदर्शना-र्थमस्य वृद्धत्वान्मयटा भाव्यम् । इदं तूदाहरणं पञ्चानां विकार इति । षट्त्रिचतु-र्भ्यो हलादिरिति विभक्तेरुदात्तादिसमर्थमेतत् । प्रातिपदिकं तु न्रः संख्याया इत्या-द्युदात्तम् । सर्वेषामिति । सर्वस्य सुपीत्याद्युदात्तं पदम् । प्रातिपदिकं तु सर्वशब्दो ऽन्तोदात्तो निपातित इत्यनुदात्तादि । अथेति । लिङ्गविशिष्टपरिभाषया सिद्धं मन्यते । इतरो ऽगृहीताभिप्राय आह न सिध्यतीति । तिग्रहणइति वार्तं प्रातिपदिक-त्वमित्यर्थः । क्रुञ्चानिति । अजादिषु तु पाठो जातिलक्षणङीष्बाधनार्थः । अब्ग्रहणा-चाचाह इह तावदिति । आप इति । ङ्यापोरिति ह्रस्वत्वं हलन्तादेव विहितस्याप इत्यर्थः । इहेति । ततश्च देवविट्शब्दादेवाबिति भावः । आब्ग्रहणप्रत्याख्यानवाद्याह

स्मात्क एष एवंविषयः । इदं तर्हि पादोन्यतरस्यां टाबृचीति । ऋचीत्युच्यते । तत्र च्छान्दसत्वाद्भविष्यति । ऋचीति नेदं छन्दो विवक्षितम् । काठकं कालापकं मौदकं पैप्पलकं च । किं तर्हि प्रत्ययार्थविशेषणमेतत् । ऋक्चेत्प्रत्ययार्थो भवतीति । एतदपि नास्ति प्रयोजनम् । पदशब्दः पादशब्दसमानार्थः अकारान्तः छन्दसि दृश्यते । तस्याः सप्ताक्षरमेकं पदम् । एकः पाद इत्यर्थः । तस्मादुत्पत्तिर्भविष्यति । इदं तर्हि डाबुभाभ्यामन्यतरस्यामिति । बहुराजा बहुराजे बहुराजा इति । ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । ङ्याब्ग्रहणमनर्थकम् । किं कारणम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या । कः पुनरत्र विशेषः । एषा वा परिभाषा क्रियेत ङ्याब्ग्रहणं वा । अवश्यमेषा परिभाषा कर्त्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि । प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् * । सर्वनामविधिः प्रयोजनम् । सर्वनाम्नः सुट् । इहैव स्यात् । एषाम् । तेषाम् । यासाम् । तासामित्यत्र न स्यात् । नैतदस्ति प्रयोजनम् । अवर्णान्ताट्टाब्विधीयते । तत्रैकादेशे कृते ऽन्तादिवद्भावात्सुड् भविष्यति । इदं तर्हि प्रयोजनम् । सर्वनाम्नस्तृतीया च । इहैव स्यात् । भवता हेतुना । भवतो हेतोरिति । भवत्या हेतुना भवत्या हेतोरित्यत्र न स्यात् । सर्वनाम । स्वर, कुसूलकूपकुम्भशालं बिले । इहैव स्यात् । कुसूलबिलम् । कुसूलीबिलमित्यत्र च न स्यात् । स्वर । समास, द्वितीया श्रितादिभिः सह समस्यते । इहैव स्यात् । कष्टं श्रितः कष्टश्रितः । कष्टं श्रिता कष्टश्रिता इत्यत्र न स्यात् । एतदपि नास्ति प्रयोजनम् । श्रितशब्दोऽकारान्तस्तत्रैकादेशे कृतेन्तादिवद्भावाद्भविष्यति । इदं तर्हि पूर्वसदृशेति । इहैव स्यात् । पित्रा सदृशः पितृसदृशः । पित्रा सदृशी पितृसदृशीत्यत्र न स्यात् । समास । तद्धितविधि, अचित्तहस्तिधेनोष्ठक् । इहैव स्यात् । हस्तिनां समूहो हास्तिकम् । हस्तिनीनां समूहो हास्तिकमित्यत्र न स्यात् । एतदपि नास्ति प्रयोजनम् । पुंवद्भावेनैतत्सिद्धम् । इदं तर्हि । प्रमाणे द्वयसच् । यथेह भवति । हस्तिद्वयसं हस्तिमात्रम् । एवं हस्तिनीद्वयसमित्यपि यथा स्यात् । तद्धितविधि । लुक्, नेन्सिद्धबध्नातिषु च ।

---

यत्ततावदिति । स्वरे विशेष इति । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वाद्विभक्तेः सुप्त्वादनुदात्तत्वं भवति । यदा तु मूलविभुजादित्वादूदंव विशब्दः कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तत्वाद्विभक्त्या च सहैकादेश उदात्तो भवति । तत्र च्छान्दसत्वादिति । अप्रातिपदिकत्वेऽपि प्रत्ययोत्पत्तिरिति शेष । लिङ्गविशिष्टस्येति । यथा कथञ्चित् प्रातिपदिकग्रहणे एषा परिभाषोपतिष्ठते न तु प्रातिपदिकस्य स्व-

इहैव स्यात् । स्थण्डिलशायी, स्थण्डिलशायिनीत्यत्र न स्यात् । लुगलुक् । शयवासवासिष्वकालात् । इहैव स्यात् । ग्रामेवासी । ग्रामेवासिनीत्यत्र न स्यात् । मानिनि च विधिप्रतिषेधार्थम् ❋ । मानिनि च विधिप्रतिषेधार्थं प्रयोजनम् । विध्यर्थं तावत्, क्यङ्मानिनोश्च । इहैव स्यात् । दर्शनीयमानी । दर्शनीयमानिनीत्यत्र च प्रत्ययग्रहणोपचारेषु न स्यात् । प्रतिषेधार्थमपि । वक्ष्यति स्वाङ्गाच्चेतो मानिनि । तस्मिन् क्रियमाणे इहैव स्यात् । दीर्घमुखमानी । दीर्घमुखमानिनीत्यत्र न स्यात् । प्रत्ययग्रहणोपचारेषु च प्रयोजनम् । तृजकाभ्यां कर्तरि । इहैव स्यात् । अपां स्रष्टा । अपां स्रष्ट्रीत्यत्र न स्यात् । प्रत्यय । उपचार, अतः कृकमिकंसकुम्भ इहैव स्यात् । अयस्कुम्भः । अयस्कुम्भीत्यत्र न स्यात् । एतान्येतस्याः परिभाषायाः प्रयोजनानि । यदर्थमेषा परिभाषा कर्त्तव्या । एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन । अतिप्रसङ्ग उपपदविधौ ❋ । उपपदविधावतिप्रसङ्गो भवति । द्विषत्परयोस्तापेः । यथेह भवति द्विषन्तप इति । एवं द्विषतीताप इत्यत्रापि स्यात् । यञिञोः फकि अतिप्रसङ्गो भवति । यथेह भवति गार्ग्यायणः । दाक्षायणः । एवं गार्गीयो दाक्षेय इत्यत्रापि स्यात् । नैष दोषः । ढगत्र बाधको भविष्यति । समासान्तेषु चातिप्रसङ्गो भवति । राजाहःसखिभ्यष्टच् । यथेह भवति । मद्रराजः । कश्मीरराजः । एवं मद्रराज्ञी कश्मीरराज्ञीत्यत्रापि स्यात् । न वा भवति मद्रराजीति । भवति यदा समासान्तादीकारः । लिङ्गविशिष्टग्रहणे तु इकारान्तात्समासान्तः प्रसज्येत । तत्र को दोषः । पुंवद्भावष्टिलोपश्च । यत्र मद्रराजीत्येवं रूपं स्यात् । मद्रराज्ञीति चेष्यते । महदात्त्वे प्रियादिषु अतिप्रसङ्गो भवति । आन्महतः समानाधिकरणजातीययोरिति यथेह भवति, महान् प्रियोऽस्य महाप्रियः एवं महती प्रियाऽस्य महतीप्रिय इत्यत्रापि स्यात् । किमुच्यते, प्रियादिष्विति । यत्र पुंवद्भावः प्रतिषिध्यते । यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्त्वेनेति । ञ्नित्स्वरे । ञ्नित्स्वरे अतिप्रसङ्गो भवति ञ्नित्यादिरुदात्तो भवतीति । यथेह भवति । दाक्षिः । अहिचुम्बकायनिः । एवं दाक्षी अहिचुम्बकायनीत्यत्रापि स्यात् । राज्ञः स्वरे ब्राह्मणकुमारयोः । कर्मधारये समासे राज्ञः स्वरे

---

रूपग्रहणमेवेति भावः । कः पुनरिति । ङ्याब्ग्रहणं लघु न तु परिभाषेति भावः । स्थण्डिलशायिनीति । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनादनुत्पन्न एव ङीपि समासे सति इन्नन्तमेवोत्तरपदमित्यप्रयोजनमेतत् । एवं ग्रामेवासिनी दर्शनीयमानिनी दीर्घमुखमानिनीत्यपि द्रष्टव्यम् । ढगत्रेति । परत्वादिति भावः । समासान्तादीकार इति । मद्रराजस्य भार्या मद्रराजीति पुंयोगादाख्यायामिति ङीष् । तत्र को दोष इति । टचि कृते यस्य चेतीकारे लुप्ते टित्वाद् ङीपि कृते मद्रराज्ञीति सिध्यतीति प्रश्नः । यत्र पुंवद्भाव इति । तत्रापूरणीप्रियादिष्विति ।

ब्राह्मणकुमारयोः । कर्मधारये समासे राज्ञः स्वरे अतिप्रसङ्गो भवति । राजा च ब्राह्मणकुमारयोरिति । यथेह भवति । राजब्राह्मणः । राजकुमारः । एवं राजब्राह्मणी राजकुमारीत्यत्रापि स्यात् । समाससंघातग्रहणेषु च । समाससंघातग्रहणेषु चातिप्रसङ्गो भवति । बहोर्नञ्वदुत्तरपदभूम्नि । यथेह भवति बहुगोमान् बहुयवमान् । एवं बहुगोमती बहुयवमतीत्यत्रापि स्यात् । किमुच्यते समाससंघातग्रहणेष्विति । यदन्यत्र ग्रहणं प्रयोजनमेवैतस्याः परिभाषायाः । कुसूलकूपकुम्भशालं बिले । कुसूलीबिलमिति यथा । विभक्तौ चोक्तम् । न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति । एते ऽस्याः परिभाषाया दोषाः । एतानि च प्रयोजनानि । एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया । न हि दोषाः सन्तीति परिभाषा न कर्तव्या । लक्षणं वा न परिणेयम् । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । न हि दोषाणां लक्षणमस्तीति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या । प्रतिविधेयं च दोषेषु । तद्धितविधानार्थं तु * तद्धितविधानार्थं तु ङ्याब्ग्रहणं कर्तव्यं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात् । कालितरा । हरणितरा । खट्वातरा । मालातरा । किं पुनः कारणं न सिध्यति । विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् * । विप्रतिषेधाद्धि तद्धितोत्पत्तिः प्राप्नोति । तत्र समासान्तेषु दोषः । तत्र समासान्तेषु

---

यत्र त्विति । महाजङ्ग इत्यादौ । दाक्षीति । इतो मनुष्यजातेरिति ङीष् प्रत्ययस्वरेणान्तोदात्तमिष्यते । बहोर्नञ्वदिति । बहुशब्दादुत्तरपदबहुत्वे वर्तमानाद्यत्परं पदं तदन्तस्य समासस्य नञ इव स्वरो भवतीत्यतिदेशार्थः । तेन बहवो गोमन्तोऽस्य बहुगोमानित्यत्र नञ्सुभ्यामिति समासान्तोदात्तत्वं भवति । बहुगोमतीति । बहवो गोमन्तोऽस्या इति बहुव्रीहिः उगितश्चेति ङीप् । समासोऽत्र संघातरूपः कार्यीति लिङ्गविशिष्टसमासाग्रहणात्समासान्तोदात्तत्वाभावादीकारः पित्त्वादनुदात्तो भवति ईकारात्तु पूर्व उदात्तो भवति । कुसूलीबिलमिति । पूर्वपदस्यात्र कार्यित्वं न तु संघातस्येति पूर्वपदान्तोदात्तत्वं भवत्येव । विभक्तौ चोक्तमिति । उगिदचामित्यत्रोक्तम् । यथा गोमानित्यत्र नुम्भवति एवं गोमतीत्यत्रापि प्राप्नोति । तत्र परिहार उक्तो वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति । विभक्त्याश्रयकार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः । प्रतिविधेयमिति । अच्प्रकरणे शक्तिलाङ्गलाङ्कुशेत्यत्र वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं तेनानिष्टविषये नोपतिष्ठते । तद्धितविधानार्था त्विति । सति ङ्याब्ग्रहणे तद्धितविधौ प्रकृतित्वयाधिकारसामर्थ्यात् पूर्वं ङ्यापौ भवतस्तदन्तात्तद्धित इत्यर्थः । विप्रतिषेधाद्धीति । स्त्रीप्रत्ययस्यावकाशो यत्र प्रकर्षो न विवक्ष्य-

